Bill No. 3/07-08

80 ✓

2008-0234

1385

(तंत्रत्रयात्मक) ताजिक नीलकण्ठी
of नीलकण्ठ दैवज्ञ with the commentary
of विश्वनाथ दैवज्ञ – Edited by the
pandits of वेंकटेश्वर प्रेस.
मुम्बई, 1980 Vikram era.

1385

24

श्रीः ।

तन्त्रत्रयात्मक-

# ताजिकनीलकण्ठी।

श्रीदिवाकरदैवज्ञात्मजविश्वनाथदैवज्ञविरचित-

टीकासहिता।

सेयं

श्रीकृष्णदासात्मज-गंगाविष्णोः

अध्यक्ष "लक्ष्मीवेङ्कटेश्वर" मुद्रणागारे

मैनेजर पं० शिवदुलारे वाजपेयी इत्यनेन स्वाम्यर्थे

मुद्रयित्वा प्रकाशिता।

संवत् १९८०, शकाब्दाः १८४५

कल्याण-मुंबई.

# भूमिका ।

विदितमेवेदं निखिलविपश्चितामखिलवेददर्शनादिपरिशीलनशालिशेमुषीकाणां महताम्, यत्किल परमकारुणिकेन भगवता परमेश्वरेण स्वाङ्गरूपान्साङ्गनिगमागमादीनाविर्भाव्य विश्वजनीनां स्वीयां परमदयालुतामाविश्चक्र इति । तत्र च–

सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकम् ।
वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमकल्मषम् ॥
विनैतदखिलं श्रौतं स्मार्त्तं कर्म न सिध्यति ।
तस्माज्जगद्धितायेदं ब्रह्मणा निर्मितं पुरा ॥
अत एव द्विजैरेतदध्येतव्यं प्रयत्नतः ॥

इत्यादिनारदोक्त्या

यथा शिखा मयूराणां नागानां मणयो यथा ।
तद्वद्वेदाङ्गशास्त्राणां गणितं मूर्ध्नि तिष्ठति ॥

इति महदुक्त्या चाङ्गेषु ज्यौतिषस्यैवाधिकश्रेयस्करत्वं निश्चीयते । तत्राप्यन्येषु बहुषु ग्रन्थेषु स्वस्ववर्ण्यविषयसौष्ठवविभूषितेषु सत्स्वपि श्रीनीलकण्ठाचार्यविरचिता सञ्ज्ञातन्त्र–वर्षतन्त्र–प्रश्नतन्त्रात्मिकेयं "ताजिकनीलकण्ठी" वर्षपत्रनिर्माणवर्षफलकथनविविधप्रश्नोत्तरदानाय परमोपयोगिनी विराजततेराम् । सैव सौष्ठवेनार्थबोधाय श्रीविश्वनाथदैवज्ञविरचितटीकया विभूषिता सकलजनानां सुगमोपलब्धये स्वीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा मया प्राकाश्यमानीयते । तदेतद्ग्रहणपठनपाठनादिभिः कृतार्थयन्तु मां सुधिय इति भृशमभिलषति–

श्रीकृष्णदासात्मजः खेमराजः
"श्रीवेंकटेश्वर" स्टीम् प्रेस–मुम्बईस्थः.

॥ श्रीः ॥

ऋद्धिसिद्धीश्वराय नमः ।



अथ

तन्त्रत्रयात्मकसटीक-

# ताजिकनीलकण्ठी ।

## संज्ञातंत्रे ग्रहाध्यायः प्रथमः १.

**प्रणम्यहेरंबमथोदिवाकरंगुरोरनंतस्यतथापदांबुजम् ॥ श्रीनीलकंठोविविनक्तिसूक्तिभिस्तत्ताजिकंसूरिमनःप्रसादकृत् ॥ १ ॥**

चंडीकुंडलमाकलय्यकुतुकाद्दंडाभशुंडाग्रगंकृत्वातांडवडंबरेपशुपतेः खेलन्खलूच्छंखलम् ॥ चडांशोरिवमंडलंनदपरंसंदर्शयन्नंबरेहेरंबोजगदंबिकां . विहसयन्वःश्रेयसेगर्जताम्॥ १ ॥ दिवाकरोनामचभूवविद्वान्दिवाकराभो गणितेषुमर्त्ये ॥ स्वकल्पितैर्येनविवृद्धवृन्दैर्वृद्धंजगद्दर्शितविश्वरूपम् ॥ २ ॥ तस्यात्मजाःपंचसमावभूवुःपंचेंद्रकल्पागणितागमेषु ॥ पंचाननावादिगजेंद्रभेदेपंचाग्निकल्पाद्विजकर्मणाच ॥ ३ ॥ अजनिष्टकृष्णनामाज्येष्ठस्तेषां कनिष्ठनाम्रः ॥ विद्यानवद्यवाचांवेत्ताजगतःसदाचारी ॥ ४ ॥ तस्माज्जातः कनिष्ठोविबुधबुधगणश्रेष्ठतांप्रापजाग्रज्ज्योतिःशास्त्रेणशश्वत्प्रकटितविभवा यस्य शिष्यप्रशिष्याः ॥ विष्णुर्ज्योतिर्विदुर्वीपतिविदितगुणाभूमिदर्वीकरेंद्रोग्रंथव्याख्यानखर्वीकृतविबुधगुरुर्गर्वहागर्वभाजाम् ॥ ५ ॥ आसीदासिन्धुदासीकृतगणकगणग्रामणीगर्वभेत्तावेत्ताग्रंथांतराणामतिगुरुरनुजस्तस्यकस्याप्यजेयः ॥ मल्लारिर्वारिवृंदप्रशमनविधयेकोपिमल्लारिनामाव्यक्ताव्यक्तप्रवक्ताजगतिविशदयत्सर्वसिद्धांतवेत्ता ॥ ६ ॥ तस्यानुजः केशवनामधेयोज्योतिर्विदानंदसमुद्रचंद्रः ॥ वाणीप्रवीणोवचनामृतेनसंजीवयामासकलाविलासी ॥ ७ ॥ तस्यानुजः संप्रतिविश्वनाथोविष्णुप्रसादाद्गुणमात्रजिष्णुः ॥ सर्वज्ञदैवज्ञविलासविज्ञो नृसिंहकः साधितसर्वविद्यः ॥ ८ ॥ आसीद्वेदांतवेत्तास्मृतिनिगमपटुर्ग्रामगीगर्वभेत्ताकर्त्ताग्रंथांतराणांफणिपतिनिगमस्यापिवेत्ताधिकाशि ॥ वक्ताश्रीनीलकंठा-

त्मजभजनपटुर्नीलकंठः सचक्रेसंज्ञातंत्रंदुरूहंसकलशुभदशादुर्दशादर्शभूतम् ॥ ९ ॥ गोदातीरस्थगोलाभिधपुरवसतिः पार्थदेशैकभूषासंज्ञातंत्रस्यटीकां व्यदधदभिनवांगद्यपद्यानवद्याम् ॥ शश्वद्विश्वोपकृत्यैविशदतरतयादैवविद्विश्वनाथोग्रंथोग्रग्रंथिभेत्ताग्रहगणितविदामग्रगण्योऽप्यगर्वः ॥ १० ॥ निर्विघ्नग्रंथसमाप्त्यर्थंमंगलमाचरंश्चिकीर्षितंप्रतिजानीते । श्रीनीलकंठस्तत्ताजिकंतत्पूर्वाचार्योक्तंताजिकंसूक्तिभिः सदुक्तिभिर्नानाछंदोभिर्वाविविनक्तिप्रकटीकरोति । कथंभूतंताजिकंसूरिमनःप्रसादकृत् सूरयः पंडितास्तेषांमनः अंतःकरणंतस्यप्रसादकृत् एतद्ग्रंथावलोकनेनपंडितमनः प्रसन्नंभवतीत्यर्थः । किं कृत्वा हेरंबंगणपतिंप्रणम्य । पुनः किंकृत्वा दिवाकरं सूर्यं प्रणम्य पुनः किंकृत्वा अनंतदैवज्ञाख्यगुरोः पदांबुजंप्रणम्य ॥ १ ॥

अथ द्वादशराशिस्वरूपमाह ।

**तत्रादौमेषस्य ॥ पुमांश्चरोऽग्निःसुदृढश्चतुष्पाद्रक्तोष्णपित्तोऽतिरवोऽद्रिरुग्रः ॥ पीतोदिनंप्राग्विषमोदयोऽल्पसंगप्रजोरूक्षनृपःसमोऽजः ॥ २ ॥**

पुमान्पुरुषराशिःचरश्चरसंज्ञकः अग्निरग्निराशिः सुदृढःदृढांगः चतुष्पाच्चतुश्चरणः रक्तः आरक्तवर्णः उष्णः उष्णस्वभावः अतिरवोमहाशब्दः अद्रिः पर्वतचारी उग्रः क्रूरः पीतः पीतवर्णः दिनंदिवाबली प्राक्पूर्वदिक्स्वामीविषमोदयः अल्पसंगप्रजः अल्पस्त्रीसंगोऽल्पप्रजश्च रूक्षः कांतिरहितःनृपः क्षत्रियवर्णः समः समांगः अजोमेषः एवंगुणविशिष्टोज्ञेयः अयंराशिर्द्विवर्णः आरक्तवर्णः पीतवर्णश्च मेषसिंहधन्विनामेववर्णद्वयमुक्तम् कुतः समरसिंहेनोक्तत्वात् ॥ २ ॥

अथ वृषराशिस्वरूपमाह ।

**वृषः स्थिरः स्त्रीक्षितिशीतरूक्षोयाम्येट्सुभूर्वायुनिशाचतुष्पात् ॥ श्वेतोऽतिशब्दोविषमोदयश्च मध्यप्रजासंगशुभोऽथ वैश्यः ॥ ३ ॥**

वृषः स्थिरः स्थिरसंज्ञकः स्त्रीस्त्रीराशिः क्षितिर्भूमिराशिः शीतः शीतलस्वभावः रूक्षः कांतिरहितः याम्येट्दक्षिणदिक्स्वामी सुभूः सुष्ठुभूमिचारी वायुः वायुप्रकृतिः निशारात्रिबली चतुष्पाच्चतुश्चरणः श्वेतः शुभ्रवर्णः अतिशब्दोमहाशब्दः विषमोदयः मध्यमप्रजासंगः मध्यमप्रजः मध्यमस्त्रीसंगश्च शुभः सौम्यः वैश्यः वैश्यवर्णः अयं श्लथांगः मेषसिंहधन्विनामेवदृढांगत्वमुक्तम् अर्थादितरेश्लथांगावोध्याः ॥ ३ ॥

अथ मिथुनराशिस्वरूपमाह ।

**प्रत्यक्समीरःशुकभाद्विपान्नाद्वंद्वांद्विमूर्तिर्विषमोदयोष्णः ॥ मध्यप्रजासंगवनस्थशूद्रोदीर्घस्वनःस्निग्धदिनेट्तथोग्रः ॥ ४ ॥**

द्वंद्वमिथुनराशिरेतादृशोज्ञेयः यथाप्रत्यक्पश्चिमदिक्स्वामी समीरोवायुराशिः शुकभाः शुककांतिः हरितवर्णइत्यर्थः। द्विपात् द्विचरणः नापुरुषराशिः द्विमूर्त्तिर्द्विस्वभावः चरस्थिरस्वभावात्मकइत्यर्थः तत्रापिपूर्वार्द्धस्थिरमुत्तरार्धचरमितिविशेषोज्ञेयः। उक्तंचभट्टोत्पलेन चरराशौविपरीतंमिश्रंवाच्यं द्विमूर्त्युदये । स्थिरवत्प्रथमेर्द्धेस्यादपरेचरराशिवत्सर्वमिति । विषमोदयः उष्णउष्णस्वभावः मध्यमप्रजासंगः मध्यस्त्रीसंगश्चवनस्थो वनचारी शूद्र शूद्रवर्णः दीर्घस्वनः महाशब्दः स्निग्धः चिक्कणः दिनेट्दिवाबलीतथाशब्दः पादपूरणेउग्रः क्रूरः अयंश्लथांगः ॥ ४ ॥

अथ कर्कराशिस्वरूपमाह ।

**बहुप्रजासंगपदः कुलीरश्चरोऽगनापाटलहीनशब्दः ॥**
**शुभः कफी स्निग्धजलांबुचारीसमोदयीविप्रनिशोत्तरेशः ॥ ५ ॥**

कुलीरः कर्कराशिः एतादृशो ज्ञेयः यथा बहुप्रजासंगपदः बहुप्रजोबहुस्त्रीसंगो बहुचरणश्च चरश्चरसंज्ञकः अंगनास्त्रीराशिः पाटलः श्वेतरक्तवर्णः हीनशब्दो निःशब्दः शुभः सौम्यः कफीकफप्रकृतिः स्निग्धः चिक्कणः जलंजलराशिः अंबुचारीजलचरः समोदयी विप्रोब्राह्मणवर्णः निशारात्रिबली उत्तरेशः उत्तरदिक्स्वामी अयंश्लथांगः ॥५॥

अथ सिंहराशिस्वरूपमाह ।

**पुमान्स्थिरोऽग्निर्दिनपीतरूक्षः पित्तोष्णपूर्वेशदृढश्चतुष्पात् ॥**
**समोदयोदीर्घरवोऽल्पसंगप्रजोहरिः शैलनृपोग्रधूम्रः ॥ ६ ॥**

हरिःसिंहः सएतादृशोज्ञेयः पुमान्पुरुषः स्थिरः स्थिरसंज्ञकः अग्निरग्निराशिः दिनंदिवाबली पीतः पीतवर्णः रूक्षः कांतिरहितः पित्तः पित्तप्रकृतिः उष्णः उष्णस्वभाव पूर्वेशः पूर्वदिक्स्वामी दृढः दृढांगः चतुष्पाच्चतुश्चरणः समोदयः दीर्घरवोमहाशब्दः अल्पसंगप्रजः अल्पस्त्रीसंगोऽल्पप्रजश्च शैलः पर्वतचारी नृपः क्षत्रियवर्णः उग्रः क्रूरः धूम्रः धूम्रवर्णः अयंराशिर्द्विवर्णः पीतोधूम्रश्च ॥ ६ ॥

अथ कन्याराशिस्वरूपमाह ।

**पांडुर्द्विपात्स्त्रीद्वितनुर्यमाशानिशामरुच्छीतसमोदयाक्ष्मा ॥**
**कन्यार्द्धशब्दा शुभभूमिवैश्या रूक्षाऽल्पसंगप्रसवाशुभा च ॥७॥**

कन्याराशिस्वरूपमेतादृशम् पांडुः पिंगलवर्णः द्विपाद्द्विचरणः स्त्रीस्त्रीराशिः द्वितनुर्द्विस्वभावाचरस्थिरद्विस्वभाविका यमाशादक्षिणदिक्स्वामी निशारात्रिबली मरुद्वायुप्रकृतिः शीतश्शीतस्वभावा समोदया क्ष्माभूमिराशिः अर्द्धशब्दाखंडशब्दा शुभभूमिः शुभभूमिचारी वैश्यावैश्यवर्णा रूक्षाकांतिरहिता अल्पसंगप्रसवा अल्पसंगा अल्पप्रसवाच शुभाशुभसौम्यराशिः चकारः समुच्चयार्थः ॥ ७ ॥

अथ तुलाराशिस्वरूपमाह ।

**पुमांश्चरश्चित्रसमोदयोष्णः प्रत्यङ्मरुत्स्निग्धरवोनवन्यः ।**
**स्वल्पप्रजासंगमशूद्रउग्रस्तुलोद्युवीर्योद्विपदः समानः ॥ ८ ॥**

पुमान् पुरुषराशिः चरश्चरसंज्ञकः चित्रोनानाविधवर्णः समोदयः उष्णः प्रत्यक् पश्चिमदिक्स्वामी मरुद्वायुराशिः स्निग्धः चिक्कणः रवोनो निःशब्दः वन्यः वनचारी स्वल्पप्रजासंगमः स्वल्पप्रजः स्वल्पस्त्रीसंगश्च शूद्रः शूद्रवर्णः उग्रः क्रूरः द्युवीर्योदिवाबली द्विपदः द्विचरणः समानः समांगः अयंश्लथांगः तुलाराशिरेतादृशोज्ञेयः ॥ ८ ॥

अथ वृश्चिकराशिस्वरूपमाह ।

**स्थिरःसितः स्त्रीजलमुत्तरेशानिशारवोनोबहुपात्कफीच ॥**
**समोदयो वारिचरोऽतिसंगप्रजः शुभः स्निग्धतनुर्द्विजोऽलिः ॥ ९ ॥**

स्थिरः स्थिरसंज्ञकः सितः शुभ्रवर्णः स्त्रीस्त्रीराशिः जलंजलराशिः उत्तरेश उत्तरदिक्स्वामी निशारात्रिबली रवोनो निःशब्दः बहुपात् बहुचरणः कफी कफप्रकृतिः समोदयः वारिचरः जलचरः अतिसंगप्रजः बहुस्त्रीसंगोबहुप्रजश्च शुभः सौम्यः स्निग्धतनुः चिक्कणतनुः द्विजः ब्राह्मणवर्णः अलिर्वृश्चिकराशिरेतादृशोज्ञेयः अयं श्लथांगः ॥ ९ ॥

अथ धनूराशिस्वरूपमाह ।

**नास्वर्णभाःशैलसमोदयोऽतिशब्दोदिनंप्राग्दृढरूक्षपीतः ॥**
**राजोष्णपित्तोधनुरल्पसूतिसंगोद्विमूर्तिर्द्विपदोऽग्निरुग्रः ॥ १० ॥**

नापुरुषराशिः स्वर्णभाः स्वर्णकांतिःशैलः पर्वतचारी समोदयः अतिशब्दः महाशब्दश्च दिनंदिवाबली प्राक्पूर्वदिक्स्वामी दृढः दृढांगः रूक्षः कांतिरहितः पीतः पीतवर्णः राजाक्षत्रियवर्णः उष्णः पित्तः पित्तप्रकृतिः अल्पसूतिसंगः अल्पप्रजोऽल्पस्त्रीसंगश्चोच्यते द्विमूर्तिश्चरस्थिरस्वभावात्मकः द्विपदः द्विचरणः तत्रापि पूर्वार्द्धेद्विपदत्वमुत्तरार्द्धेचतुष्पदत्वंज्ञेयं स्वयमेवाग्रेवक्ष्यति अग्निरग्निराशिः उग्रः क्रूरः अयंराशिर्द्विवर्णः सुवर्णवर्णः पीतवर्णश्च धनूराशिरेतादृशो ज्ञेयः ॥ १० ॥

अथ मकरराशिस्वरूपमाह ।

**मृगश्चरःक्ष्माऽर्धरवोयमाशास्त्रीपिंगरूक्षः शुभभूमिशीतः ॥**
**स्वल्पप्रजासंगसमीररात्रिरात्रौचतुष्पाद्विषमोदयोविट् ॥ ११ ॥**

मृगोमकरराशिरेतादृशोज्ञेयःचरः चरसंज्ञकःक्ष्माभूमिराशिःअर्द्धरवोऽर्द्धशब्दः यमाशा दक्षिणदिक्स्वामी स्त्रीस्त्रीराशिः पिंगः पिंगलवर्णः रूक्षः कांतिरहितः शुभः सौम्यः भूमिः भूमिचारी शीतः शीतलस्वभावः स्वल्पप्रजासंगः स्वल्पप्रजः स्वल्पस्त्रीसंगश्च समीरो

वातप्रकृतिः रात्रिः रात्रिबली आदौ चतुष्पात् राशिपूर्वार्द्धेचतुष्पदत्वंज्ञेयम् उत्तरार्द्धेजल चरत्वंज्ञेयम् उत्तरार्द्धंजलचरत्वमित्यग्रेवक्ष्यति विषमोदयः विट्वैश्यवर्णः अयंश्लथांगः ११॥

अथ कुंभराशिस्वरूपमाह ।

**कुंभोपदोनादिनमध्यसंगप्रसूः स्थिरः कर्बुरवन्यवायुः ॥**
**स्निग्धोष्णखंडस्वरतुल्यधातुः शूद्रः प्रतीची विषमोदयोग्रः ॥ १२ ॥**

कुंभराशिरेतादृशोज्ञेयः अपदः चरणहीनः नापुरुषराशिः दिनंदिवाबली मध्यसंग-प्रसूः मध्यमस्त्रीसंगोमध्यमप्रसवश्च स्थिरः स्थिरराशिः कर्बुरश्चित्रवर्णः । वन्योवनचारी वायुर्वायुराशिः स्निग्धः चिक्कणः उष्णः खंडस्वरोऽर्द्धस्वरः तुल्यधातुः समवातपित्तक-फप्रकृतिः शूद्रः शूद्रवर्णः प्रतीची पश्चिमदिक्स्वामी विषमोदयः उग्रः क्रूरः अयं श्लथांगः ॥ १२ ॥

अथ मीनराशिस्वरूपमाह ।

**मीनोऽपदःस्त्रीकफवारिरात्रिनिःशब्दबभ्रुर्द्वितनुर्जलस्थः ॥**
**स्निग्धोऽतिसंगप्रसवोऽपिविप्रः शुभोत्तराशेड् विषमोदयश्च ॥ १३॥**

मीनराशिरेतादृशोज्ञेयः अपदश्चरणहीनः स्त्रीस्त्रीराशिः कफः कफप्रकृतिः वारिजल-राशिः रात्रिः रात्रिबली निःशब्दःशब्दरहितः बभ्रुः पिंगलवर्णः द्वितनुश्चरस्थिरस्वभावा-त्मकः जलस्थः जलराशिः स्निग्धः चिक्कणः अतिसंगप्रसवः अत्यंतस्त्रीसंगोऽत्यंतप्रसवश्च आपिशब्दः समुच्चये विप्रोब्राह्मणवर्णः शुभःसौम्यः उत्तराशेट् उत्तरदिक्स्वामी विषमोदयः अयंश्लथांगः ॥ १३ ॥

एवंराशिस्वरूपमुक्त्वेदानींराशिनांमित्रामित्रविभागमाह ।

**धरांबुनोरग्निसमीरयोश्चवर्गेसुहृत्त्वंपरतोऽरिभावः ॥**
**चापांत्यभागत्यचतुष्पदत्वंज्ञेयंमृगांत्यस्यजलेचरत्वम् ॥ १४ ॥**

धरांबुनोःपृथ्वीराशिजलराश्योर्वर्गेसुहृत्त्वंमित्रत्वमेवमग्निसमीरयोः अग्निराशिवायुरा-श्योर्वर्गेऽपिमित्रत्वंज्ञेयम् परतः एतद्वैपरीत्येअरिभावः शत्रुभावः । एतदुक्तंभवति पितापु-त्रयोः स्त्रीपुरुषयोर्वा स्वामिसेवकयोर्वान्ययोर्वायस्यकस्यापिमैत्रीविचारे पृथ्वीराशिजलरा-शिसंबंधे मित्रत्वंवक्तव्यम् एवमग्निराशिवायुराशिसंबंधे मित्रत्वंवाच्यम् अन्यथाशत्रुत्वम् यथाभूम्यग्न्योर्भूम्यनलयोरंब्वग्न्योरंबुवाय्वोर्वर्गेशत्रुत्वम् । यद्वाद्वयोरेकएवपृथिव्यादिवर्गः स्यात् तदाद्वयोः परस्परमतिप्रीतिरित्यर्थतःसिद्धम् । अथराशिस्वरूपकथनावसरेधनुर्म-करयोरनुक्तोकिंचित्स्वरूपविशेषेसिंहावलोकनन्यायेनाह चापेति चापस्यधनुषः अंत्यभागे उत्तरार्द्धेचतुष्पदत्वंज्ञेयम् मृगस्यमकरस्यांत्यभागेउत्तरार्द्धेजलचरत्वंज्ञेयम् ॥ १४ ॥

अथोक्तराशिस्वरूपस्यफलकथनार्थंसंक्षेपेणकिंचित्स्वरूपमाह ।

**पित्तानिलोधातुसमः कफश्चत्रिर्मेषतः सूरिभिरूहनीयाः ॥**
**राजन्यविट्छूद्रधरासुराश्चसर्वंफलंराश्यनुसारतःस्यात् ॥ १५ ॥**

पित्तानिलाविति । मेषः पित्तं वृषोऽनिलोवायुः मिथुनः धातुसमः वातपित्तकफात्मकः कर्कःकफी तथासिंहः पित्तं कन्याऽनिलः तुलाधातुसमो वृश्चिकः कफी एवंधनुः पित्तं मकरोऽनिलः कुंभोधातुसमः मीनः कफीतिमेषतः मेषमारभ्यमीनपर्यंतंचतुष्कंचतुष्कंकृत्वा त्रिस्त्रिरावृत्तंभवति एतेराशयः सूरिभिः पंडितैरूहनीयाः ज्ञातव्याः अथराजन्यविट्छूद्रधरासुराणांद्वादशराशिषुत्रिरावृत्तिर्ज्ञातव्या तद्यथा मेषोराजन्यः क्षत्रियवर्णः वृषः विड्वैश्यवर्णः मिथुनः शूद्रवर्णः कर्कोधरासुरोब्राह्मणवर्णः तथासिंहः क्षत्रियवर्णः कन्यावैश्यवर्णा तुलाशूद्रवर्णा वृश्चिकोब्राह्मणवर्णः एवंधनुः क्षत्रियवर्णः. मकरोवैश्यवर्णः कुंभः शूद्रवर्णः मीनोब्राह्मणवर्णः एतेषांसर्वंफलंराश्यनुसारतोराशिस्वरूपसदृशंफलं स्यादित्यर्थः । अथगणितं वक्ष्यति तत्रादौ ग्रहाणांचालनंवक्ष्यति तत्रचालनेवर्षप्रवृत्तिरपेक्षितासाचग्रंथकर्ताऽत्रनोक्ता कुतः वर्षतंत्रेउक्तत्वात् सातुअस्माभिरत्रोपयुक्तत्वात्प्रदर्श्यते अन्यच्च वर्षेशनिर्णयदशांतर्दशामासप्रवेशदिनप्रवेशादिकमत्रोपयुक्तम् तत्तुवर्षतंत्रे प्रदर्शितमितिनात्रप्रदर्शितम् अत्रतु अस्माभिः यस्ययत्रउपयोगः तत्रतत्प्रदर्श्यते॥१५॥

अथ वर्षफलसाधनार्थंवर्षप्रवृत्तिसमयमाह ।

**गताःसमाःपादयुताःप्रकृतिघ्नसमागणात् ॥ खवेदा ४० प्तघटी-युक्ताजन्मवारादिसंयुताः ॥ अब्दप्रवेशोवारादिसप्ततष्टेऽत्रनिर्दिशेत् ॥ १६ ॥**

गताः समाः गतवर्षाणितद्यथाजन्मकालिकः शकोवर्तमानशकात् शोध्यः शेषंगतसमाः ताः पादयुताः स्वचतुर्थांशेनयुताः कार्याः प्रकृतिरेकविंशतिस्तद्घ्नः तेनगुणितोयः समागणोवर्षगणः तस्मात्खवेदा ४० प्तघटीयुक्ताश्चत्वारिंशताभक्तात् घट्यादियल्लब्धंतेनचतुर्थांशयुक्तसमायुताः कार्याः ततः जन्मवारादिभिः जन्मकालिकवारेष्टघटीपलैः संयुताः कार्याः तदनंतरमूर्ध्वांकेसप्ततष्टेसप्तभिर्भक्तेयच्छेषंतत् अत्रअस्मिन्ग्रंथेअब्दप्रवेशे वर्षप्रवेशे वारादिवारघटिपलात्मकंनिर्दिशेत् वदेत् अत्रवर्तमानोवारोज्ञेयः ॥ १६ ॥

अथ तिथिसाधनमाह ।

**शिवघ्नोऽब्दःस्वखाद्रींदुलवाढ्यःखाग्निशेषितः ॥**
**जन्मतिथ्यन्वितस्तत्रतिथावब्दप्रवेशनम् ॥ १७ ॥**

अब्दःगतवर्षगणःशिवघ्नःएकादशाभिर्गुण्यः स्वखाग्नींदुलवाढ्यः स्वकीयो यः सप्तत्यधिकशतभागस्तेनाढ्यः युक्तःकार्यःजन्मतिथ्यन्वितःशुक्लप्रतिपदमारभ्यजन्मकालीनवर्तमानातिथिभिरन्वितःयुक्तः कार्यःखाग्निशेषितःत्रिंशताभक्तः तत्रतिथौतास्मिन् शषऽपितिथौऽब्दप्रवेशनंवर्षप्रवेशोभवति अस्यांतिथौ वर्षप्रवेशोभवतीतिनियमोनास्ति कदाचित्पूर्वतिथौ अग्रिमतिथौचभवति अत्रवारस्यैवप्रामाण्यंतिथित्रयस्यमध्येयस्मिंस्तिथौपूर्वानीतवारोभवतिसएववर्षप्रवेशोतिथिर्ज्ञातव्यः यत्रकुत्रापिशेषितस्तष्टः एवमब्दआयातितत्रलब्धस्यत्यागः शेषस्यग्रहणमितिज्ञेयम् ॥ अथोदाहरणक्रमोलिख्यते तत्रादौ कस्यचिज्जन्मसमयोलिख्यते सम्वत् १६४८ शके १५१३ माघशुक्लप्रतिपदिबुधे घटी ३६ श्रवणनक्षत्रं घटी ५४ वज्रयोगः घटी ६ अस्मिञ्छुभदिनेश्रीसूर्योदयादिष्टघटी ३७ पलेषु ५३ तथागत्रिगतघटी १२ पलानि ३१ जन्मअक्षभा ७।३० देशांतरयोजना निधनानि ३० सूर्यः ९।७।३०।६ जन्मलग्नम् ५।१०।५३।५०॥ अथवर्षप्रवेशस्योदाहरणम् ॥ तत्र जन्मकालीनः शकः १५१३ वर्तमानशकात् १५५० शोधितः शेषांकप्रमितोजातोगतवर्षगणः ३७ अयं स्वचतुर्थांशेनयुक्तः ९।१५।० गतवर्षगणः ४६।१५।० गतवर्षगणः ३७ एकविंशत्यागुणितः जातोऽयमंकः ७७७ अयंचत्वारिंशताभक्तः लब्धंघटीपलात्मकम् १९।२५।३० एतच्चतुर्थांशयुक्तसमागणे ४६।१५।० घटीषुयुतंजातं ४६।३४।२५।०३ एतज्जन्मवारादिना ४।३७।५२। युतंजातोऽयमंकः ५१।१२।१८।३० ऊर्ध्वांके सप्ततष्टेशेषंवर्षवारादि २।१२।१८।३० अथप्रकारांतरेणवर्षप्रवेशायनयमाह ॥ वर्षध्रुवांकः ३६५।१५।३१।३० अयंगतवर्षेण ३७ गुणितः १३५।१४।३४।२५।३० एतज्जन्मवारादि ४।३७।५३ युतोजातोऽयमंकः १३५।१९।१२।१८।३० ऊर्ध्वांके सप्ततष्टे शेषंवर्षप्रवेशेवारादि २।१२।१८।३० । अथतिथ्यानयनम् । गतवर्षगणः ३७ एकादशभिर्गुणितः ४०७ अयंस्वकीयसप्तत्याधिकशत १७० भागेन २ युक्तः ४०९ अयं जन्मकालीनशुक्लप्रतिप्रदमारभ्यवर्तमान २ तिथिभिर्युक्तः ४११ त्रिंशतातष्टः शेषप्रमिता २१ जाता वर्षप्रवेशेकृष्णपक्षेषष्ठी अस्यांतिथौपूर्वानीतवारोनास्ति अग्रिमतिथौवर्त्तते इतिकारणात् अस्यांतिथौ २१ एकः १ युक्तः २२ जाताकृष्णपक्षेसप्तमी अत्रयस्मिन्मासेजन्मभवति तस्मिन्मासेवर्षप्रवेशो भवतिकदाचिज्जन्ममासात्पूर्वमासेऽथवाऽग्रिममासे च भवति तत्र प्रमाणं वक्ष्यते जन्मकालीनरविणा सह तुल्यो रविर्यस्मिन्मासे भवति स एव वर्षप्रवेशे मासो ज्ञेयः । संवत् १७८५ शके १६५० माघकृष्णसप्तमी सोमेघटी ३७ पलानि ३९ हस्तनक्षत्रघटी १७ पलानि २८ सुकर्मायोगघटी २६ पलानि २८ अस्मिञ्छुभदिनेसूर्योदयाद्गतघटीषु १२ पलानि १८ विपला ३० वर्ष ३८ प्रवेशः अथैतद्वर्षप्रवेशसमयेप्रमाणमाह वर्षप्रवेशकालीनोऽर्कः । तत्कालेऽर्कोजन्मकालरविणास्याद्यतः समः । सएवमासोविज्ञेयोवर्षावेशे बुधैर्ध्रुवम् ॥ यतः

यस्मात्कारणात् तत्कालेवर्षप्रवेशसमयेकरणोक्तरीत्यासाधितः सूर्यो जन्मकालीनरविणासमस्तुल्योराश्यंशकलाविकलात्मकोभवति इदमेववर्षप्रवेशसमये प्रमाणम् अस्योदाहरणमग्रेप्रदर्श्यते । गणेशदैवज्ञैः स्वकृतताजिकभूषणेजन्मकालीनसूर्येणसहवर्षप्रवेशकालीनोऽर्कः कलासुतुल्योनायाति इतिज्ञात्वावर्षप्रवेशसमयभ्रांत्याअन्यसंस्कारोऽप्युक्तः । यद्वाक्यंच । शाकेजन्मशकोनितेभवातियच्छेषंगताब्दव्रजोऽधोऽधः संगुणितः शरैश्च ५ युगुलेनांगै २।६ युगै ४ र्भाजितः । लब्धंतज्जननोत्थ १० वारघटिकाब्देनान्वितंसप्तभिः पूर्वांकेविहितेऽत्रशेषकमितौवर्षप्रवेशैध्रुवः ॥ १ ॥ वर्षप्रवेशोत्थघटीपलाढ्ये काले किलस्पष्टतरः सनूनम् । भानुर्जनुर्भानुसमानएष सिद्धांतरीत्यापरिसाधनीयः ॥२॥ जन्मकालनलिनीविलासिननैवजातुतुलतांकलासुचेत् । वर्षकालनलिनीपतिस्तयोरंतरंगतिहतंयुतोनितम् ॥ ३ ॥ कार्यवर्षध्रुवेतस्मादसौस्पष्टः प्रजायते । तत्कालसंभवैर्भावैः खेटैश्चफलनिर्णयः ॥ ४ ॥ अथगणेशदैवज्ञभ्रांतिदूरीकरणार्थमुदाहरणंप्रदर्श्यतेजन्मसमये सिद्धांतरहस्याहर्गणः २१२८ चक्रं ६ सूर्योदयेमध्यमोऽर्कः ९।६।७ ४३ देशांतरविकलाभिः २२ युतः ९।६।८।५ इष्टघटीभिः ३७।५३ चालितः जातस्तात्कालिकोऽर्कः ९।६।४५। २५ मंदकेंद्रं ५।११।१४।३५ मंदफलंधनम् ० । ४२।२३ संस्कृतोऽर्कः ९।७।३७।४८ अयनांशाः १७।४९ चरखंडानि ७५।६०।२५ चरंधनम् १३८ संस्कृतो जातो जन्मसमयेस्पष्टोऽर्कः ९।७।३०।६ अथवर्षप्रवेशसमये सिद्धांतरहस्याहर्गणः ३५९९ चक्रं ९ सूर्योदयेमध्यमोऽर्कः ९।६।३२।५८ देशांतरविकलाभिर्युक्तः ९।६।३३।२० इष्टघटीभिः १२।१८।२०।३० चालितः जातस्तात्कालिकोऽर्कः ९।६।४५।२७ मन्दकेन्द्रं ५।११।१४।३३ मंदफलंधनं ०। ४२।२३। संस्कृतोऽर्कः ९।७।२७।५० अयनांशाः १८।२६ चरखंडानि ७५।६०।२५ चरंधनम् १३६ संस्कृतोजातोवर्षप्रवेशसमयेस्पष्टोऽर्कः ९।७।३०।६ अयंवर्षकालीनः सूर्यः पूर्वानीतजन्मकालीनसूर्येणसहतुल्योजातइति एतेनगणेशदैवज्ञमतंनिरस्तम् अनयारीत्याद्वयोस्तुल्यताभवतीतिगणेशदैवज्ञैर्नविलोकितामितिज्ञायते तैस्तुवर्षप्रवेशस्पष्टघटीभिः पंचांगस्थितसूर्यस्यचालनंदत्वा जन्मकालीनसूर्येणसहकलासुतुल्यतानायातीतिदृष्ट्वावर्षप्रवेशघटीषुअन्यःसंस्कारोऽप्युक्तइतिचेदुच्यते तत्रापिहेतुरुच्यते इदमेवांतरंपततीतिसत्यम् अत्रापिहेतुस्तैर्नबुद्धःअस्माभिःप्रदर्श्यते सौरब्रह्मवर्याइत्यादिपक्षाणांपरस्परमंतरेसतिजन्मकालीनसूर्यपंचांगस्थितसूर्ययोरंतरंपततिएकपक्षमंगीकृत्यउभयोःसाधनंचेत्क्रियतेतदा अंतरंनपतति ननुसौरपक्षाज्जन्मकालीनसूर्यः साधितः सौरपक्षात्पंचांगस्थसूर्येऽपिवर्ततेतत्राप्यंतरंपततीतिचेदुच्यतेहेतुः येन यस्यकस्यापिजन्मसमयेग्रहसाधनंक्रियते तेनयस्ययस्मिन्ग्रामेजन्मतद्ग्रामस्य चरदेशांतरसंस्कारः क्रियते येनयद्ग्रामस्यपंचांगंक्रियते तेनतद्ग्रामस्यचरदेशांतरसंस्कारोग्रहेषुक्रियते ग्रामेग्रामेचरदेशांतरेभिन्नंभिन्नमितिकार-

णादंतरंपततिउभयोरेकदेशस्थसंस्कारश्चेत्क्रियते तदांतरं सर्वथानपतति यस्मात् ग्रंथात्साधितसूर्योजन्मकालीनोयावद्भिः संस्कारैःसंस्कृतोभवति तावद्भिः संस्कारैः संस्कृतः तस्माद्ग्रंथाद्वर्षप्रवेशसमयेसाधितः सूर्यः विकलात्मकस्तुल्योभवतीतिनिश्चितम् अत्रार्थेपूर्वमेवोदाहरणंप्रदर्शितम् अनयारीत्याद्वयोस्तुल्यताभवतीतिज्ञात्वा दैवज्ञचक्रचूडामणिभिः श्रीकेशवदैवज्ञैराचार्यैर्नान्यः संस्कारोवर्षप्रवेशसमयेऽप्युक्तः गणेशदैवज्ञैर्यदुक्तंतदसत् ॥ १७ ॥

अथवर्षप्रवेशे पंचांगस्थितग्रहेषुचालनमाह ।

**गतैष्यदिवसाद्येन गतिर्निघ्नी खषड् ६० हृता ॥**
**लब्धमंशादिकंशोध्यं योज्यं स्पष्टो भवेद्ग्रहः ॥ १८॥**

अथवर्षप्रवेशसमये स्पष्टाग्रहाः साध्यास्तत्रापिसुखार्थं पंचांगस्थितग्रहेषु चालनमाह । गतैष्यदिवसैः कृत्वा ग्रहस्यकलादिका गतिर्गुण्याखषड्भिः षष्ट्याभाज्यालब्धमंशादिकम् अंशकलाविकलात्मकम् पंचांगस्थितग्रहेशोध्यं योज्यंवा यदागतमंतरंतदाशोध्यंयदात्वेष्यमंतरंस्यात्तदायोज्यम स तात्कालिकः स्पष्टोग्रहोभवेत् वक्रगतिग्रहस्यराहुकेत्वोश्च चालनंमार्गिग्रहापेक्षयाविपरीतंज्ञेयम् । उदाहरणम् वर्षप्रवेशवारादिकमध्ये । २ । १२ । १८ । अवधिस्थवारादिना ६ । १३ । ५६ शोधितेजाताश्चालनांकाः २ । ५८ । २२ अनेनसर्वग्रहाश्चालिताः ॥ १८ ॥



अथपंचांगस्थनक्षत्राच्चंद्रानयनमाह ।

**खषट्घ्नं ६० भयातंभभोगोद्धृतंतत्खतर्कघ्नधिष्ण्येषुयुक्तं द्विनिघ्नम् ॥ नवाप्तंशशीभागपूर्वस्तुभुक्तिः खखाभ्राष्टवेदा ४८०० भगोगेन भक्ताः ॥ १९ ॥**

वर्षप्रवेशसमयेयन्नक्षत्रंभवतितस्यनक्षत्रस्यइष्टकालावधिभुक्तघटिकाःकार्याः ताःषष्ट्या गुण्याःभभोगोद्धृतंनक्षत्रस्यगतैष्ययोगेनभाज्यात्यल्लब्धं तत् षष्टिगुणिताश्विन्यादिगतनक्षत्रेषुयुक्तंद्विनिघ्नं ताअश्विन्यादिनक्षत्रादिष्टघटीपर्यन्तंघटिकाभवंतितानवभिभाज्यालब्धमंशाः शेषंषष्ट्यागुण्यंनवभिर्भाज्यंलब्धंकलाः पुनः शेषंषष्ट्यागुण्यंनवभिर्भाज्यंलब्धंविकलाः एवंशशी भागपूर्वांशादिकस्तात्कालिकः स्यात् । अथगतिसाधनम् खखाभ्राष्टवेदा ४८००० भगोगेननक्षत्रगतैष्ययोगेनभक्ताः चंद्रस्यकलादिकास्पष्टागतिः स्यात् । उदाहरणम् वर्षप्रवेशसमयेहस्तनक्षत्रंतस्यपूर्वदिनेभुक्तघटिकाः ४१ । २४ ॥ एताइष्टघटीभिः १२।१८ युक्ताः इष्टघटीपर्यंतंहस्तनक्षत्रस्यभुक्तघटिकाः जाताः ५३ । ४२ एताः षष्ट्यागुणिताः ३२ । २२ नक्षत्रस्यगतैष्ययोगेन ५८ । ५२ भक्ताः स्वर्णितौ भाज्य १९३३२० । भाजकौ ३५३२ भाजनाल्लब्धम् ५४।४४।१ अश्विन्यादिगतन-

क्षत्रपर्यंतसंख्याः १२ षष्ट्यागुणिताः ७२० पूर्वलब्ध्या ५४।४४।१ युक्ताः ७७४। ४४।१ द्विगुणिताः १५४९।२८।२ नवभिर्भक्ताः लब्धमंशादिकम् १७२ ।९।४७ अंशास्त्रिंशता ३० भक्ताः जातस्तात्कालिकोराश्यादिचंद्रः ५।२२।९।४७ अथ गत्यानयनम् । खखाभ्राष्टवेदानक्षत्रस्यगतैष्ययोगेन ५८।५२ भक्तालब्धाकलादिकाचंद्रस्यस्पष्टागतिः ८१५।२४ उक्तरीत्यासाधितास्तात्कालिकस्पष्टाग्रहाः ॥ १९ ॥

| रव्यादयःस्पष्टाःस्युः । | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| र. | चं. | मं. | बु. | गु. | शु. | श. | रा. | के. |
| ९ | ५ | ९ | ९ | ९ | ७ | ६ | २ | ९ |
| ७ | २२ | २२ | १२ | ११ | १४ | २२ | २२ | २२ |
| ३० | ९ | ३६ | १६ | ३४ | ३१ | २४ | २४ | २४ |
| ६ | ४७ | ० | ९ | १३ | ४८ | ३६ | ३६ | ३६ |
| ६१ | ८१५ | ४४ | ५९ | १३ | ७० | ३ | ३ | ३ |
| १७ | २४ | १ | २३ | ५० | ७ | ११ | ११ | ११ |

अथभावसाधनमाह ।

पूर्वंनतंस्याद्दिनरात्रिखण्डंदिवानिशोरिष्टघटीविहीनम् ॥ दिवानिशोरिष्टघटीषुशुद्धंद्युरात्रिखंडंत्वपरंनतंस्यात् ॥२०॥ तात्काले सायनार्कस्यभुक्तभोग्यांशसंगुणात् ॥ स्वोदयात्खाग्नि ३० लब्धंयद्भुक्तंभोग्यंरवेस्त्यजेत् ॥ २१ ॥ इष्टनाडीपलेभ्यश्चगतगम्यान्निजोदयात् ॥ शेषंखत्र्या ३० हतं भक्तमशुद्धेनलवादिकम्॥२२॥ अशुद्धशुद्धभेहीनंयुक्तंतुव्ययनांशकम् ॥ एवं लंकोदयैर्भुक्तंभोग्यंशोध्यंपलीकृतात् ॥ २३ ॥ पूर्वपश्चान्नताद्रूयत्नात्तद्दशमंभवेत् ॥ सषट्कलग्नखेजायातुर्यौलग्नोनतुर्यतः॥२४॥ अग्रेत्रयः षडेवंतेभार्द्धयुक्ताःपरेऽपिषट् ॥ खेटेभावसमंपूर्णफलं संधिसमेतुखम् ॥ २५ ॥ षष्ठांशयुक्तनुःसंधिरग्रेशष्ठांशयोजनात् ॥ त्र्यःससंधयोभावाःशष्ठांशोनैकयुक्सुखात् ॥ २६ ॥

अथसप्तभिः श्लोकैर्भावसंधिसाधनमाह । तत्रलग्नसाधनमिष्टकालादिसाधनं दशमलग्नसाधनम् नतोन्नतसाधनम् । तत्रादौनतोन्नतसाधनज्ञानमाह । दिनार्धपूर्वमिष्टकालेसति दिनखंडंदिनार्द्धंदिनगतघटीभिः हीनंकार्यम् तदा दिनपूर्वनतंस्यात् रात्रौरात्र्यर्धपूर्वमिष्ट-

कालेसतिरात्रिखण्डंरात्र्यर्धरात्रिगतघटीभिःहीनंकार्यंतदारात्रिपूर्वनतंस्यात् अथतल्लक्षणं यदादिनार्द्धादुपरीष्टकालस्तदासूर्योदयादिषुघटीषुशुद्धंशोध्यम् द्युखंडंदिनार्द्धेदिवसे अपरं नतंपश्चिमनतंस्यात् तथारात्र्यर्द्धादुपरीष्टकालेसतिसूर्यास्तादिघटीषुशोध्यम् रात्र्यर्द्धंरात्रौ पश्चिमनतंस्यात् ॥ तात्कालिकोऽर्कः अयनांशैर्युक्तः कार्यः तस्यभुक्तभोग्यांशसंगुणा-द्धिति यदाऋणलग्नंसाध्यतेतदाभुक्तांशाः ग्राह्याः यदाधनलग्नसाधनंक्रियतेतदाभोग्यांशाः ग्राह्यास्तैस्तैः स्वोदयोगुणनीयः त्रिंशद्भक्तः रवेर्भुक्तमथवाभोग्यंयल्लब्धंतत् इष्टघटीपले-भ्यस्त्यजेत् शोधयेत्तदनंतरंशेषात्गतगम्यानिजोदयात्त्यजेत् । तद्यथा यदाभुक्त कालः साध्यतेतदागुणितोदयात्पृष्ठोदयाः शोध्याः यदाभोग्यकालः साध्यतेतदागु-णितोदयात् अग्रिमोदयाः शोध्याः शोधिते यच्छेषं तत् खाग्न्या ३० हतम् अशुद्धेनयः शोधितोनशुद्ध्यतिसः अशुद्धोदयः तेनभक्तंफलमंशादिकं ग्राह्यं तत् अशु-द्धभहीनम् कार्यम् शुद्धभयुक्कार्यम् । तद्यथा ऋणलग्नसाधनेधनलग्नसाधनेच मेषाद्गण-नयायद्राशिसंख्यंकः अशुद्धोदयोभवति तद्राशिसंख्यामध्ये लवादिकं हीनं योज्यं तदनं-तरं व्ययनांशकमयनांशकैरहितंकार्यम् तनुः लग्नं स्यात् । एवमनयारीत्या लंकोदयैःकृत्वा रवेर्भुक्तंभोग्यंसाध्यम् तत्पलीकृतात् पूर्वपश्चिमनताच्छोध्यम् अन्यदवशिष्टंयत्कर्म तत्प्रा-ग्वत्पूर्वरीत्यासाध्यंतद्दशमंभवेत् । तद्यथा यदापूर्वनतं भवति तदापूर्वनतमिष्टकालं प्रकल्प्यलं कोदयैः कृत्वारवेर्भुक्तंशोध्यम् अन्याक्रियाऋणलग्नवत् यदापश्चिमनतंभवति तदापश्चिमन-तमिष्टकालंप्रकल्प्यलंकोदयैः कृत्वा रवेर्भोग्यंशोध्यम् अन्याक्रिया धनलग्नवत्कार्या तद्द-शमंभवेत् । अथलग्नदशमभावात्तुक्तावन्यभावसाधनमाह । सषड्भेइति । लग्नंराशिषट्क-युतं जाया सप्तमभावोभवति एवंसषड्भेतुर्यश्चतुर्थभावोभवति एवं भावचतुष्टयंजातम् ॥ अथलग्नोनतुयर्तः लग्नंचतुर्थभावाच्छोध्यम् शेषस्यषष्ठांशोराश्यादिस्तनुयुक्तं तनुलग्नंकार्यं सलग्नद्वितीयभावयोः संधिःस्यात् लग्नस्यविरामसंधिःस्यात् धनभावस्यारंभसंधिरितिसर्वत्र ज्ञेयम् अग्रेषष्ठांशयोजनादिति सएवागतसंधिः तेनषष्ठांशेनयुक्तोऽग्र द्वितीयभावः स्यात् द्वितीयभावः षष्ठांशयुक्तः द्वितीयतृतीयभावयोः संधिः स्यात् अयंषष्ठांशयुक्तः तृतीय-भावःस्यात् अयंषष्ठांशयुक्तः तृतीयचतुर्थभावयोः संधिः स्यात् एवंत्रयः ससंधयोभावा जाताः तदनंतरमग्रेत्रयः ससंधयोभावाः साध्याः तद्यथा पूर्वानीतषष्ठांशंरूपमध्ये संशोध्य अनेनराश्यादिनासुखभावोयुक्तश्चतुर्थपंचमभावयोः संधिः स्यात् अयमेवसंधिः पुनस्तेनयुक्तः पंचमभावः स्यात् अनेनयुक्तः पंचमषष्ठभावयोः संधिः स्यात् अयंतेन युक्तः षष्ठभावोभवति अयंतेनयुक्तः षष्ठसप्तमभावयोः संधिः स्यात् एवंषट्ससंधयोभावाः जाताः एतेभार्द्धयुक्ताभार्द्धषड्राशयः तैर्युक्ताः संतः अवशिष्टषड्भावाः ससंधयःस्युः । एवंभावसंधिनिष्पत्तिप्रयोजनमाह । खेटइति । योग्रहोयद्भावस्थोभवतिसचेद्भावस्यराश्यं-शकलाविकलाभिस्तुल्यः स्यात् तदासग्रहःतद्भावस्थंशुभमशुभंवाफलंपूर्णविंशतिविश्वा-त्मकंददाति संधितुल्येग्रहेशून्यंफलं भवति ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ ॥ २५ ॥ २६ ॥

**भुक्तंभोग्यंस्वेष्टकालान्नशुद्धचेत्रिंश ३० न्निघ्नात्स्वोदयात्तं लवाद्यम्॥**
**हीनंयुक्तंभास्करेतत्तनुःस्याद्रात्रौलग्नंभार्द्धयुक्ताद्रवेस्तु ॥ २७ ॥**

अथसूर्यस्यभुक्तमथवाभोग्यमुक्तरीत्याचानीतंयद्यदिष्टकालघटीपलेभ्योनशुद्धचेत् तदा केनोपायेनलग्नसाधनं कर्त्तव्यमित्यतआह ॥ भुक्तमिति ॥ भुक्तं भोग्यंयदेष्टकालनाडी-पलेभ्योनशुद्धचेत् तदाइष्टनाडीपलानित्रिंशद्गुणितानिकार्याणिसायनसूर्यस्यराश्युदयेन भाज्यानिएवंलवाद्यंग्राह्यम् । हीनंयुक्तंभास्करेकार्यं तद्यथा यदारवेर्भुक्तमानीतंभवति तदा लवाद्यंफलंसूर्यमध्येहीनंकार्यम् । यदाभोग्यमानीतंभवति तदाल-वाद्यं फलंसूर्यमध्येयुक्तंकार्यम् । तत्तनुःलग्नंस्यात् रात्रौलग्नसाध-नंचेत्क्रियते तदाराशिषट्कयुक्ताद्रवेःसकाशाल्लग्नं साध्यम् रात्रौ दशमलग्नसाधनेऽपिराशिषट्कयुक्ताद्रवेः सकाशाद्भुक्तभोग्यंसा-ध्यम् । अत्रोदाहरणम् अस्य जन्मभूमावुदयाः तात्कालिकोऽर्कः ९ । ७ । ३० । ६ । अयनांश १८ । २६ । युक्तः ९।२५। ५६।६ अस्यभोग्यांशैः ४।३।५४ मकरराशेरुदयो २९८ गुणितः १२११२२ । १२ । अयंत्रिंश ३० द्भक्तः जातोभोग्यकालः ४०।२२ । ४४ अयमिष्टनाडी १२। १८ । ३० पलेभ्यः ७३८।३० शोधितः शेषं ६९७ । १६ मकरादग्रेकुंभोदयः २३९ शेषाच्छोधितेशेषम् ४५८ । ३७ । १६ । कुंभादग्रेमीनो-दयः २०३ शेषाच्छोधितेशेषम् २५५।३७।१६ मीनादग्रेमेषोदयः २०३ शेषाच्छो-धितेशेषम् ५२।३७।१६। मेषादग्रेवृषभोदयः २३९ अयंशेषात् ५२ । ३७ । १६ नशुद्धचति अतः शेषम् ५२।३७।१६ खघ्न्या ३० हतं १५७८ । ३८ अशुद्धोदयेन २३९ भक्तंलब्धमंशादिकम् ६ । ३६ । १८ इदमशुद्धात्पूर्वमेषाद्गणनयाएकोराशिस्ते-नयुक्तं १ । ६ । ३६ । १६ इदमयनांशै १८ । २६ हीनंजा-तंलग्नं ०।१८।१०।१८ राशिषट्कयुतंयातंजायाभवनम् ६।१८। १० । १८ । अथदशमलग्नस्योदाहरणम् । तत्रलंकोदयाः दिनार्द्धम् १२।४४ दिनगतघटीभिः १२ । १८ । ३० हीनंजातंपूर्व-नतं ० । २५ । ३० अयमिष्टकालोलंकोदयैः कृत्वासायनांश-सूर्यस्य भुक्तभागागुणनीयाः उपरितनांकः त्रिंशद्भृतः लब्धंभुक्त-कालः जाताभुक्तकालः २७९ । १४ । ० अयंघटीपलेभ्यः २५।३० नशुद्धचाति अतः शेषं २५ । ३० त्रिंशद्गुणितं ७६५ स्वोदयेन ३२३ भुक्तं पललवादिकं २ । २२ । ६ इदंराश्यादिसूर्यमध्ये ९ । ७ । ३० । ६ हीनंजालग्नं ९ । ५ । ८ । ० इदंराशिषट्कयुतं जातं सुखभवनं ३।५।८।० लग्नहीनचतुर्थभावस्यशे-षम् २।१६।५७।४२ इदंषड्भक्तंलब्धंराश्यादि ०।१२।४९।३७ अनेनयुक्तंलग्नंजातो

जन्मभूमावुदयाः

| | | |
|---|---|---|
| मे | २०३ | मी |
| वृ | २३९ | कुं |
| मि | २९८ | म |
| क | ३४९ | ध |
| सिं | ३४१ | वृ |
| क | ३५३ | तु |

लंकोदयाःक्रमेण

| | | |
|---|---|---|
| मे | २७८ | मी |
| वृ | २९९ | कु |
| मि | ३२३ | म |
| क | ३२३ | ध |
| सिं | २९९ | वृ |
| क | २७८ | तु |

लग्नस्यविरामसंधिः १।०।५९।५५ अयंषष्ठांशेनयुतोजातोद्वितीयभावः १।१३।४९।३२ अयंषष्ठांशेनयुतोजातोद्वितीयभावस्यसंधिः १।२६।३९।९ अयंषष्ठांशेनयुतोजातस्तृतयिभावः २।९।२८।४६ अयंषष्ठांशेनयुतोजातस्तृतीयभावस्यसंधिः २।२२।१८।२३ प्रागानीतषष्ठांशः ०।१२।४९।३७ अयंरूपाच्छोधितः शेषम् ०।१७।१०।२३ अनेनसुखभावोयुक्तः जातः सुखभावस्य संधिः ३।२२।१८।२३ अयंतेनयुक्तः जातः पंचमभावः ४।९।२८।४६ अयंतेनयुक्तः जातः पंचमभावस्यसंधिः ४।२६।३९।९ अयंतेनयुक्तः जातः षष्ठभावः ५।१३।४९।३२ अयंतेनयुक्तः जातोरिपुभावस्यसंधिः६।०।५९।५५ एतेराशिषट्कयुक्ताः अवशिष्टाः ससंधयोभावाजाताः सर्वेएकत्रलिख्यंते ॥२७॥

| तन्वादिद्वादशभावाः ससंधयःस्युः | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| त. | ध. | स. | सु. | सु. | रि. | जा. | मृ. | ध. | क. | आ. | व्य. |
| ० | १ | १ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
| १८ | १३ | ५ | ९ | ९ | १३ | १८ | १३ | ९ | ५ | ९ | १३ |
| १० | ४९ | २८ | ८ | २८ | ४९ | १० | ४९ | २८ | ८ | २८ | ४९ |
| १६ | ३० | ४४ | ० | ४६ | ३२ | १६ | ३० | ४४ | ० | ४८ | ३२ |
| सं. | सं. | सं. | सं. | सं. | सं. | सं. | सं. | सं. | सं. | सं. | सं. |
| १ | १ | २ | ३ | ४ | ६ | ७ | ७ | ८ | ९ | १० | ० |
| ० | २६ | २२ | २२ | २६ | ० | ० | २६ | २१ | २२ | २६ | ० |
| ५९ | ३९ | १८ | १८ | ३९ | ५९ | ५९ | ३९ | १८ | १८ | ३९ | ५९ |
| ५८ | ७ | २१ | २३ | ९ | ५५ | ५८ | ७ | २१ | २१ | ९ | ५७ |

भावकुंडली.




लग्नकुंडली.




**खेटेसंधिद्वयांतःस्थेफलंतद्भावजंभवेत् ॥ हीनेऽधिकेद्विसंधिभ्यां भावेपूर्वापरेफलम् ॥ २८ ॥ ग्रहसंध्यंतरंकार्यंविंशत्या २० गुणितंभजेत् ॥ भावसंध्यंतरेणाप्तंफलंविंशोपकाः स्मृताः ॥ २९ ॥**

अथभावस्थग्रहफलम् ॥ खेटेसंधिद्वयांतःस्थेइति ॥ तद्यथाग्रहेआरंभसंधेः सकाशात् अधिकेसतिविरामसंधेः सकाशात्न्यूनेसतितदाग्रहो यस्मिन् भावेवर्तते तद्भावजंफलं भवेद् द्विसंधिभ्यांहीनेऽधिकेग्रहेसति पूर्वापरभावे फलंभवेत् । तद्यथा आरंभसंधेः सकाशात् ग्रहेहीनेसतियद्भावेवर्ततेनद्भावात्पूर्वभावस्यफलंददाति यदा विरामसंधेः सकाशात् ग्रहोऽधिकोभवति तदाअग्रिमभावस्य फलंददाति ॥ २८ ॥ अथग्रहाणांविंशोपका-

त्मकभावफलमाह उदाहरणमेवव्याख्या सूर्यः ९ । ७ । ३० । ६ अस्य संधिः ९।२२ १८।२३ अनयोरंतरं १४।४८।१७ विंशत्या २० गुणितं ९ । २६ । ५ । ४० भावः ९।५।८।० संधिः ९ । २२ । १८ । २३ अनयोरंतरेण १७। १० । २३ भजेत् अथ सवर्णितोभाज्यः १०६५९४० भाजकः ६१८२३ भाजकेनहतेभाज्येयदाप्तंफलंतद्देवविंशोपकाः स्मृताः १७ । १४ । एवं चंद्रादीनाम् इतिरव्यादीनांविंशोपकात्मकानिभावफलानि ॥ २९ ॥

**भौमोशनः सौम्यशशीनवित्सितारेज्यार्किमंदांगिरसोगृहेश्वराः ॥ आद्याः कुजाद्या रवितोऽपि मध्यमाः सितात्तृतीयाः क्रियतो दृक्काणपाः ॥ ३० ॥**

अथग्रहाणाबलाबलंवक्ष्यति । तच्चग्रहबलमधिकारंविना न अतस्तद्बलसाधनायादौराशीशद्रेष्काणेशानाह । भौमेति । मेषस्यभौमः वृषस्योशना:शुक्रः मिथुनस्यसौम्योबुधः कर्कस्यशशीचंद्रः सिंहस्यइनः रविः कन्यायाः वित् बुधः तुलायाः सितःशुक्रः वृश्चिकस्यारोभौमः धनुषःइज्योगुरुः मकरस्यार्किः शनिः कुंभस्यमंदः शनिः मीनस्यांगिराः गुरुः एतेगृहेश्वराः द्वादशराशिस्वामिनो भवंति । अथद्रेक्काणस्वामिनउच्यंते । आद्या इति । राशेस्तृतीयांशोदशांशात्मकोद्रेक्काणउच्यतेएकस्मिनराशौत्रयोद्रेक्काणाःअतः एकस्मिन्राशौकियत्संख्याकोद्रेक्काणोस्तीतिविचार्यः प्रथमश्चेत्तर्हिभौमात् द्वितीयश्चेद्रवेस्तृतीयश्चेच्छुक्रात् अनयारीत्याक्रियतः मेषादिद्वादशराशिषु द्रेक्काणपाः द्रेक्काणस्वामिनोभवंति। इतिद्रेक्काणचक्रम् ॥ ३० ॥

इदंद्रेष्काणचक्रंलिख्यते.

| अं | मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १० | मं | बु | गु | शु | श | सू | सो | मं | बु | गु | शु | श |
| २० | र | चं | मं | बु | गु | शु | श | सू | सो | मं | बु | गु |
| ३० | शु | श | र | सो | म | ब | गु | शु | श | सू | सो | मं |

**सूर्यादितुंगर्क्षमजोक्षनक्रकन्याकुलीरांत्यतुलालवैःस्युः ॥ दिग्भिर्गुणैरष्टयमैः शरेकैर्भूतैर्भसंख्यैर्नखसंमितैश्च ॥ ३१ ॥**

ग्रहाणामुच्चनीचानि.

| सू | चं | मं | बु | गु | शु | श | ग्रह |
|---|---|---|---|---|---|---|---|
| ० १० | १ ३ | ९ २८ | ५ १५ | ३ ५ | ११ २७ | ६ २० | उच्च |
| ६ १० | ७ ३ | ३ २८ | ११ १५ | ९ ५ | ५ २७ | १ २० | नीच |

अथग्रहाणामुच्चनीचराशीन्भागांश्चाह । सूर्यादीति । सूर्यादीनांग्रहाणांतुंगर्क्षउच्चराशयःस्युः सूर्यस्यअजः मेषः उच्चंदिग्भिर्दशभिरंशैः चंद्रस्यउक्षावृषः उच्चं गुणैस्त्रिभिरंशैः भौमस्यनक्रोमकरः उच्चमष्टयमैरष्टाविंशतिभिरंशैः बुधस्यकन्या उच्चंशरैकैः

पंचदशभिरंशैःगुरोःकुलीरः कर्कः उच्चंभूतैः पंचभिरंशैः शुक्रस्यांत्योमीनः ज्वंभसंख्यैः सप्तविंशतिभिरंशैः शनेस्तुलाउच्चंनखसंमितैर्विंशतिभिरंशैः परमोच्चमितिसर्वत्रज्ञेयम् ॥ इत्युच्चानि ॥ ३१ ॥

| अथाद्यचक्रम् | | | |
|---|---|---|---|
| मे | वृ | मि | क |
| सिं | क | तु | वृ |
| ध | म | कुं | मी |

**तत्सप्तमंनीचमनेनहीनोग्रहोऽधिकश्चेद्र-**
**सभाद्विशोध्यः ॥ चक्रात्तदंकांशलवोबलं**
**स्यात्क्रियेणतौलींदुभतोनवांशाः ॥ ३२ ॥**

अथग्रहाणांनीचस्थानमुच्चबलानयनंनवांशस्वामिनश्चाह । तादिति । तेषां सूर्याद्युच्चराशीनांसप्तमस्तुलादिकोराशिर्नीचम् अंशाश्च त एव यथासूर्यस्य तुलानीचंदशभिरंशैः परमंनीचमितिसर्वत्रपूर्ववत् एवंचंद्रादीनामपि ज्ञेयम् । नीचानि । अथोच्चबलम् । अनेननीचेन ग्रहोहीनः कार्यश्चेद्रसभादधिकः षडाधिकः तदाचक्राद्द्वादशराशिभ्यः शोध्यः शेषस्यांशाः कार्याः नवभिर्भाज्याः लब्धंकलादिउच्चबलंस्यात् इतिउच्चबलम् । अथनवांशेशाउच्यंते । क्रियोमेषः एणोमकरः तौलिस्तुला इंदुभंकर्कः एतेमेषादिराशीनां त्रिरावृत्याआद्याः भवंतितेयथा मेषसिंहधनूराशीनामाद्योमेषः वृषकन्यामकरराशीनामाद्योमकरःमिथुनतुलाकुम्भराशीनामाद्यातुला कर्कवृश्चिकमीनराशीनामाद्यः कर्कः अत्र राशिस्वामिनएवनवांशस्वामिनइत्यर्थः । इत्याद्यचक्रम् ॥ ३२ ॥

**मेषेंगतर्काष्टशरेषु भागा जीवास्फुजिज्ज्ञारशनैश्चराणाम् ॥**
**वृषेष्टषण्नागशरानलांशाःशुक्रज्ञजीवार्किकुजेशहद्दाः ॥ ३३ ॥**
**युग्मेषडंगेषुनगांगभागाः सौम्यास्फुजिज्जीवकुजार्किहद्दाः ॥**
**कर्केद्रितर्कांगनगाब्धिभागाःकुजास्फुजिज्ज्ञेज्यशनैश्चराणाम् ॥ ३४ ॥**
**सिंहेंगभूताद्रिरसांगभागादेवेज्यशुक्रार्किबुधारहद्दाः ॥**
**स्त्रियोनगाशाब्धिनगाक्षिभागाःसौम्योशनोजीवकुजार्किनाथाः ॥ ३५**
**तुलेरसाष्टाद्रिनगाक्षिभागाःकोणज्ञजीवास्फुजिदारनाथाः ॥**
**कीटेनगाब्ध्यष्टशरांगभागाभौमास्फुजिज्ज्ञेज्यशनैश्चराणाम् ॥ ३६ ॥**
**चापेरवीष्वंबुधिपंचवेदाजीवास्फुजिज्ज्ञारशनैश्चराणाम् ॥**
**मृगेनगाब्ध्यष्टयुगश्रुतीनांसौम्येज्यशुक्रार्किकुजेशहद्दाः ॥ ३७ ॥**

कुंभेनगांगाद्रिशरेषुभागाःशुक्रज्ञजीवारशनैश्चराणाम् ॥
मीनेऽर्कवेदानलनंदपक्षाःसितेज्यसौम्यारशनैश्चराणाम् ॥ ३८ ॥

| अथ मेषादिराशिविभागयुक्ता हद्देशाः | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
| गु ६ | शु८ | बु६ | मं७ | गु६ | बु७ | श ६ | मं७ | बृ१२ | बु७ | शु७ | शु१२ |
| शु ६ | बु६ | शु६ | शु६ | शु५ | शु१० | बु८ | शु४ | शु५ | गु७ | बु६ | गु४ |
| बु ८ | गु८ | गु५ | बु ६ | श७ | गु४ | गु७ | बु८ | बु४ | शु८ | गु७ | बु३ |
| मं५ | श५ | मं७ | गु७ | बु६ | मं७ | शु७ | गु५ | मं५ | श४ | मं५ | मं९ |
| श ५ | म३ | श६ | श४ | मं६ | श२ | मं२ | श६ | श४ | मं४ | श१ | श२ |

अथषड्भिः श्लोकैर्मेषादिद्वादशराशिषुहद्देशानाह अंकस्थापनमेवव्याख्या । सायथा । मेषराशौप्रथमषडंशानांजीवोगुरुः ततःषडंशानामास्फुजिच्छुक्रः ततोऽष्टानामंशानांज्ञो बुधःततः पंचांशानामारोभौमः ततः पंचानामंशानांशनैश्चरः स्वामी एवमेववृषादिष्वपिज्ञेयम् ॥ इतिहद्देशचक्रम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

त्रिंशत्स्वभेविंशतिरात्मतुंगेहद्दस्वचंद्रादशकंदृक्काणे ॥
मुसल्लहेपंचलवाःप्रदिष्टाविंशोपकावेदलवैःप्रकल्प्याः ॥ ३९ ॥
स्वस्वाधिकारोक्तबलंसुहृद्भेपादोनमर्द्धंसमभेरिभेंघ्रिः ॥
एवंसमानीयबलंतदैक्यवेदोद्धृतेहीनबलःशरोनः ॥ ४० ॥

अथपंचवर्गीबलमाह । त्रिंशत्स्वभइति । स्वभेस्वराशौग्रहे ३० त्रिंशल्लवाः बलम् स्वोच्चस्थे २० विंशतिर्बलम् स्वहद्दास्थे १५ पंचदशबलम् स्वदृक्काणस्थे १० दशबलम् मुसल्लहेस्वनवांशस्थे ५ पंचलवाः प्रदिष्टाः उक्ताः वेदलवैः बलस्यचतुर्थांशोविंशोपकाः प्रकल्प्याः ॥ ३९ ॥ यदाग्रहः स्वगृहस्वोच्चस्वहद्दास्वद्रेक्काणनवांशेषुपंचस्वधिकारेषुकुत्रापिनास्तितदाबलमाह । स्वस्वाधिकारेइति । स्वस्वाधिकारोक्तबलस्यविभागः सुहृद्भेमित्रगृहेपादोनंचतुर्थांशोनंबलंग्राह्यम् समभेसमस्यगृहेअर्द्धम् अरिभेशत्रुगृहेंघ्रिश्चतुर्थांशोबलंस्यात् । तद्यथा ग्रहस्यस्वगृहेत्रिंशल्लवाः बलंस्यात् मित्रगृहेपादोनंसार्द्धद्वाविंशतिः २२ । ३० जाताःसमभेऽर्द्धंपंचदश १५ जाताः शत्रुगृहेचतुर्थांशः सार्द्धाः सप्त ७ । ३० । जाताः तथा स्वहद्दायांपंचदश १५ लवाबलम् मित्रहद्दायांसपादाः एकादश ११ । १५ जाताः समहद्दायांसार्द्धाः सप्त ७ । ३० शत्रुहद्दायांपादोनाश्चत्वारः ३ । ४५ तथास्वद्रेक्काणे दश १० लवाबलम् मित्रद्रेक्काणेसार्द्धाः सप्त ७ । ३० समद्रेक्काणेपंच ५ शत्रुद्रेक्काणे सार्द्धद्वयम् २।३० एवंस्वनवांशेपंच ५ लवाबलम् मित्रनवांशेपादोनाश्चत्वारः ३ । ४५

समनवांशेसार्द्धद्वयं २ । ३० शत्रुनवांशेसपादमेकम् १.। १५ बलंस्यात् एवंपंचवर्गी-वलंसमानीय तदैक्येपंचानांयोगेवेदोद्धृतेचतुर्भिर्भक्तेयल्लब्धंतद्विंशोपकात्मकंग्रहाणांबलं भवति शरोनः पंचभ्योन्यूनः हीनबलोग्रहोज्ञेयः । उक्तंच । पंचाल्पोहीनवीर्यःस्यादधि-कोमध्यउच्यते ॥ दशाधिकोबलीप्रोक्तःपंचवर्गीबलादिदम् ॥ अथक्रमप्राप्तमुदाहरणप्रद-र्शनार्थंवक्ष्यमाणमित्रसमशत्रवोलिख्यंते । उदाहरणम् सूर्यः ९ । ७ । ३० । ६ अस्य मकरराशौस्थितत्वाद्गृहेशः शनिः अयंसूर्यस्यशत्रुःअतःकारणात् गृहेप्राप्तंबलंसार्द्धाःसप्त ७ । ३० । अथोच्चबलम् सूर्यस्यनीचम् ६ । १० अनेनहीनोरविः २ । २७ । ६०।६ नवभिर्भक्ताः जातंसूर्योच्चबलम् ९ । ४३ । अथहद्देशबलम् । मकरराशौसूर्यस्यसप्तांशाः त्रिंशत्कलाः विद्यंते मकरराशौहद्दायामादौसप्तांशाः अयं सप्ताधिकोऽग्रिमसप्तमध्येवर्त्तते इतिकारणात् जातोहद्देशोगुरुः अयंसूर्यस्यसमोभवति समहद्दायांप्राप्तंबलम् ७ । ३० अथत्रैराशिकबलम् . मकराशौप्रथमदशकमध्येवर्त्ततेतदीशोगुरुः अस्यसमत्वात्प्राप्तंत्रै-राशिकंबलम् ५ ।.१० । अथमुसल्लहबलम् । नवांशगणनयाजातोमुसल्लहेशोगुरुः अ-स्यसमत्वात्प्राप्तंनवांशकबलम् २ ।३० पंचानांयोगः ३२ । १३ चतुर्भिर्भक्तःजातंसूर्य-स्याविश्वात्मकंबलम् ८ । ३ एवमेवचंद्रादीनामपिज्ञेयम् ॥ ४० ॥

**क्षेत्रंहोरात्र्यङ्घिपंचांगसप्तवस्वर्कांशेशार्कभागाः सुधीभिः ॥**
**विज्ञातव्यालग्नसंस्थाः शुभानां वर्गाः श्रेष्ठाः पापवर्गास्त्वनिष्टाः ४१**
**ओजेरवींद्वोः समइंदुरव्योर्होरेगृहार्द्धप्रमितेविचिंत्ये ॥**
**द्रेक्काणपाःस्वेषुनवर्क्षनाथास्तुर्यांशपास्वर्क्षजकेंद्रनाथाः ॥ ४२ ॥**

अथ पंचवर्गीचक्रंलिख्यते.

| ग्र | धी | स्व | मि | स | श |
|---|---|---|---|---|---|
| मि | गृ | ३० ० | २२ ३० | १५ ० | ७ ३० |
| स | ह | १५ ० | ११ १५ | ७ ३० | ३ ४५ |
| श | त्रै | १० ० | ७ ३० | ५ ० | २ ३० |
| नवांशः | मु | ५ ० | ३ ४५ | २ ३० | १ १५ |

अथ द्वादशवर्गीचक्रंलिख्यते.

| सू | चं | मं | बु | गु | शु | श |
|---|---|---|---|---|---|---|
| चं | सू शु | श | श | श | चं सू | मं बु गु |
| मं बु गु | श | सू शु | सू शु | सू बु श | मं बु गु शु | चं शु |
| श | मं बु गु | चं बु गु | चं मं गु | चं मं शु | ० | सू |

अथद्वादशवर्गीचक्रमाह । क्षेत्रमिति । क्षेत्रंगृहम् होरा त्रिलवः चतुर्लवः पंचलवः षड्लवः सप्तलवः अष्टलवः अंकलवः दशलवः एकादशलवः द्वादशलवः एतेद्वादशभागाः लग्नसंस्थाः लग्नसमयेविद्यमानग्रहाणांसुधीभिः विज्ञातव्याः । शुभानांशुभग्रहाणां वर्गाः श्रेष्ठाः शुभफलदाज्ञेयाः पापग्रहाणांवर्गाश्चेत्स्युः[1] तदाअनिष्टाः दुष्टफलदाज्ञेयाः ॥ ४१ ॥ अथ होराद्रेक्काणतुर्यांशानामधीशानाह तत्रादौहोरेशानाह । ओजेइति । ओजेविषमराशौगृहार्द्धंपंचदशभागस्तत्प्रमितेतत्प्रमाणे रवींद्वोर्होरेविचिंत्येज्ञेय । तद्यथा । प्रथमपंचदशभागमध्येसूर्यस्यतदनंतरंचंद्रस्य । तथासमेसमराशौ चंद्ररव्योर्विचिंत्ये । अथद्रेक्काणेशाउच्यंते । राशेस्त्रिभागोदशांशपरिमितोद्रेक्काणोज्ञेयः यस्य द्रेक्काणविचारः क्रियते सचेत्प्रथमविभागमध्येतदासयस्मिन् राशौतिष्ठति तद्राशिस्वामिन एवद्रेक्काणाधीशत्वम् । द्वितीयद्रेक्काणश्चेत्तदास्वराशितः पंचमोयोराशिस्तत्स्वामिनएवद्रेक्काणेशत्वम् । तथा तृतीयद्रेक्काणश्चेत्तदास्वराशेः सकाशान्नवमोयोराशिः तत्स्वामिनएव द्रेक्काणाधीशत्वम् अथ तुर्यांशस्वामिनउच्यंते । स्वर्क्षजकेंद्रनाथइति । स्वर्क्षग्रहाधिष्ठितोयोराशिस्तस्माज्जातानिकेंद्राणितन्नाथाः चतुर्थांशस्वामिनः । तद्यथा । राशेस्त्रिंशदंशास्तस्यचतुर्थांशः सार्द्धाः सप्त ७ । ३० तत्रप्रथमविभागमध्ये ७ । ३० स्वर्क्षस्वराशिस्वामिनएवाधिपत्यम् द्वितीयविभागमध्ये १५ । ० केंद्रनाथः स्वराशेः सकाशात् स्वचतुर्थोयोराशिः तत्स्वामिनएवाधिपत्यम् । तृतीयविभागमध्ये २२ । ३० स्वराशेः सकाशात्सप्तमोयोराशिः तत्स्वामिनएवाधिपत्यम् । चतुर्थविभागमध्ये ३० स्वराशेः सकाशाद्दशमोयोराशिः तत्स्वामिनएवाधिपत्यम् ॥ ४२ ॥

**ओजर्क्षेपंचमांशेशाः कुजार्कीज्यज्ञभार्गवाः ॥ समभेव्यत्ययाज्ज्ञेयाद्वादशांशाः स्वभात्स्मृताः ॥ ४३ ॥ लवीकृतोव्योमचरोंगशैलवस्वंकदिग्रुद्रगुणाः खरामैः ॥ भक्तोगतास्तर्कनगाष्टनंददिग्रुद्रभागाः कुयुताः क्रियात्स्युः ॥ ४४ ॥**

अथपंचमांशेशद्वादशांशेशानाह । ओजर्क्षइति । पंचमांशप्रमाणंषडंशाः । एवंराशौ पंचभवंति तत्रौजर्क्षेविषमराशौ प्रथमपंचमांशस्वामीकुजः द्वितीयपंचमांशस्वामीआर्किः शनिः तृतीयपंचमांशस्वामीईज्योगुरुः चतुर्थपंचमांशस्वामीज्ञोबुधः पंचमपंचमांशस्वामीभार्गवः शुक्रः । समभेसमराशौव्यत्ययाद्विपरीताज्ञेयाः । तद्यथा । समराशौप्रथमपंचांशस्वामी शुक्रः द्वितीयपंचांशस्वामीबुधः तृतीयपंचांशस्वामीगुरुः चतुर्थपंचांशस्वामी

---

१. अर्थात् विषमराशौ पूर्वपरार्धंभागस्य होरयेरीशौ रवींदू तथा समराशौ पूर्वपरार्धभागस्य होरयोरीशौ इंदुरवी इति ज्ञेयम् । २ प्रथमचतुर्थसप्तमदशमान् इति ।

शनिःपंचमपंचांशस्वामीभौमः । अथद्वादशांशस्वामिनउच्यंते। द्वादशांशाः स्वभात्स्व-राशेः सकाशात्स्मृताः । तद्यथा । द्वादशांशप्रमाणंसार्द्धमंशद्वयम् २।३० एवंराशौ द्वादशभवंति । तेयथा । एतत्प्रमाणेनयत्संख्येंशेग्रहस्तिष्ठति स्वराशितस्तत्संख्यराशे-र्द्वादशांशेशोज्ञेयः ॥ ४३ ॥ अथ षट्सप्ताष्टनवदशैकादशांशेशानयनमाह । लवीकृत इति । व्योमचरोग्रहोलवीकृतः यथाराशयस्त्रिंशद्गुणिताः अधःस्थितांशयुताः एवंग्रहोंऽशात्मकः कार्यः षट्स्थानेस्थाप्यः क्रमेण अंग ६ शैल ७ वसु ८ अंक ९ दिक् १० रुद्र ११ गुणाः सतत्रखरामैः ३० त्रिंशताभक्तोयल्लब्धंतेगतास्तर्कनगाष्टनंददिग्रुद्रभागा भवंति एतेकुयुताः एकयुक्ताः संतः क्रियान्मेषमारभ्यगणनायां यत्रविश्रांतिः तद्राशि-स्वामीतद्वर्गस्यज्ञेयः एकयुक्तलब्धंयदिद्वादशाधिकंभवतितदा द्वादशभिः १२ तष्टंकार्यम् उदाहरणम् सूर्यः ९ । ७ । ३० । ६ एतस्यमकरराशौस्थितत्वात्गृहेशः शनिः । अथ होरामकरराशौप्रथमपंचदशमध्येऽस्ति अतोहोरेशः चंद्रः । अत्रत्रिलवः सूर्यः प्रथमभा-गमध्येऽस्तिअतोद्रेक्काणाधिशः शनिः । अथ चतुर्लवः सूर्योद्वितीयचतुर्थांशमध्येवर्त्तते अतः कारणान्मकरराशेः सकाशात् चतुर्थोराशिर्मेषः तत्स्वामीभौमः एवंचतुर्लवः स्वामी भौमः । अथ पंचमांशः सूर्यः समराशौद्वितीयविभागमध्येवर्तते अतः पंचमांशस्वामी बुधः । अथषडंशः सूर्यस्यांशाः २७७ । ३० । ६ षड्गुणिताः जाताः १६६५ । ० । ३६ त्रिंशद्भक्ताः लब्धं ५५ कु १ युक्तं ५६ द्वादशभि १२ स्तष्टं शेषं ८ मेषाद्गणन-याजातोवृश्चिकराशिः तत्स्वामीभौमः एवंजातः षडंशः स्वामी भौमः । अथ सप्तांशः अंशाः २७७ । ३० । ७ सप्तभिर्गुणिताः १९४२ । ३० । ४२ त्रिंशद्भक्ताः लब्धं ६४ कुयुक्ते ६५ द्वादशभि १२ स्तष्टं शेषं ५ मेषाद्गणनयाजातः सिंहराशिः तत्स्वा-मीसूर्यः एवंजातः सप्तांशः स्वामीसूर्यः । अथाष्टांशः अंशाः २७७ । ३० । ६ अष्ट-भिर्गुणिताः २२२० । ०।४८ त्रिंशद्भक्ताः लब्धं ७४ कुयुतं ७५ द्वादशभि १२ स्तष्टं शेषं ३ मेषाद्गणनयाजातोमिथुनराशिः तत्स्वामीबुधः एवमष्टमांशः स्वामीबुधः । अथन-वांशः अंशाः २७७ । ३० । ६ नवभिर्गुणिताः २५९७ । ३० । ५४ त्रिंशद्भक्ताः लब्धं ८३ कुयुतं ८४ द्वादशभि १२ स्तष्टं शेषं ० मेषाद्गणनया जातो मीनराशिः तत्स्वामीगुरुः एवंजातोनवांशः स्वामीगुरुः । अथ दशांशः अंशाः २७७ । ३० । ६ दशभिर्गुणिताः २७७५ । १७ त्रिंशद्भक्ताः लब्धं ९२ कुयुतं ९३ द्वादशभि १२ स्तष्टं शेषं ९ मेषाद्गणनया जातो धनराशिः तत्स्वामीगुरुः एवंजातो दशांशस्वामीगुरुः । अथैकादशांशः २७७ । ३० । ६ एकादशभिर्गुणिताः ३०५२ । ३१ । ६ त्रिंशद्भक्ताः लब्धं १०१ कुयुतं १०२ द्वादशभि १२ स्तष्टं शेषं ६ मेषाद्गणनया जातः कन्या राशिः तत्स्वामीबुधः एवंजातः एकादशांशस्वामीबुधः । अथद्वादशांशः २ एवंद्वाद-शांशविभागगणनयाचतुर्थविभागमध्येवर्तते अतः कारणान्मकराद्गणनयाजातश्चतुर्थो मेषराशिः तत्स्वामीभौमः एवंजातो द्वादशांशस्वामी भौमः एवंचन्द्रादीनामपि ज्ञेयम् ४४॥

एतत्पंचवर्गीबलचक्रंलिख्यते-

| ग्रहाः | सूर्यः | चंद्रः | भौमः | बुधः | गुरुः | शुक्रः | शनिः | ग्रहाः |
|---|---|---|---|---|---|---|---|---|
| गृ० | ७ ३० | ७ ३० | ७ ३० | ७ ३० | ३० ० | १५ ० | १५ ० | गृ० |
| उ० | ९ ४३ | ४ ३२ | १५ १० | १० १८ | ० ३६ | ६ २३ | १८ ३२ | उ० |
| हृ० | ७ ३० | ४ ४५ | ७ ३० | ७ ३० | १५ ० | ० ३० | १५ ० | हृ० |
| त्रै० | ५ ० | २ ३० | २ ३० | २ ३० | ७ ३० | १० ० | ५ ० | त्रै० |
| मु० | २ ३० | ५ ० | २ ३० | १ १५ | ५ ० | २ ३० | ३ ४५ | मु० |
| यो० | ३२ १३ | २३ १७ | ३५ १० | २९ ३ | ५८ ६ | ४१ २३ | ५७ १७ | यो० |
| वि० | ८ ३ | ५ ४९ | ८ ४७ | ७ १५ | १५ ३१ | १० २० | १४ १९ | वि० |

एतद्द्वादशवर्गीचक्रम्.

| र | चं | मं | बु | गु | शु | श | ग्रहाः |
|---|---|---|---|---|---|---|---|
| श | बु | बृ | बृ | बृ | मं | शु | प्रथ. |
| चं | सू | सू | सू | चं | सू | सू | द्वि. |
| श | श | शु | मं | शु | चं | शु | तृ. |
| म | बृ | बृ | बु | बु | सू | शु | चतु. |
| बु | श | बृ | बृ | शु | मं | शु | पंच. |
| मं | श | बु | शु | बु | श | शु | षष्ठ. |
| सू | शु | बृ | श | बु | शु | मं | सप्त. |
| बु | श | शु | मं | शु | बु | शु | अ. |
| बृ | चं | सू | चं | शु | श | बृ | नव. |
| शु | श | सू | मं | बु | श | बृ | दश |
| बु | चं | श | बृ | बु | शु | बृ | एका. |
| मं | शु | श | मं | मं | सू | बृ | द्वाद. |

**एवं द्वादशवर्गी स्याद्ग्रहाणां बलसिद्धये ॥ स्वोच्चमित्रशुभाः श्रेष्ठानीचारिक्रूरतोऽशुभाः ॥ ४५ ॥ एवंग्रहाणांशुभपापवर्गपंक्तिद्वयं वीक्ष्यशुभाधिकत्वे ॥ दशाफलं भावफलंचवाच्यंशुभं त्वनिष्टं त्वशुभाधिकत्वे ॥ ४६ ॥**

अथ द्वादशवर्ग्युपसंहारंतत्फलंचाह । एवमिति । एवंग्रहाणांबलसिद्धयेद्वादश वर्गीस्यात् साद्वादशवर्गी स्वोच्चमित्रशुभाः श्रेष्ठानीचारिक्रूरतो अशुभाश्च । तद्यथा। यस्य ग्रहस्य द्वादशवर्गी क्रियतेसचेत्स्वगृहादिषु अथवा स्वोच्चवर्गे अथवा शुभग्रहस्य वर्गे तिष्ठति तदा श्रेष्ठाशुभफलदात्री तथा स ग्रहो यदि नीचवर्गे अथवा शत्रुवर्गे अथवापापग्रहस्य वर्गेवा तिष्ठति तदाअशुभादुष्टफलदात्री ॥ ४५ ॥ अथद्वादशवर्ग्याशुभपापग्रहवर्ग-

फलनिर्णयःकथंस्यादित्यतआह । एवामिति । एवंग्रहाणांशुभपापवर्गपंक्तिद्वयंवीक्ष्य । तद्यथापूर्वोक्तप्रकारेणग्रहाणांद्वादशवर्गीकार्यातत्रग्रहहोरादिद्वादशस्थानेषु कियंतःशुभग्रहवर्गाःपापवर्गाश्चकियंतइतिविचार्य शुभग्रहसंख्याभिन्नालेख्यापापग्रहसंख्याभिन्नालेख्या पंक्तिद्वयस्यांतरंकार्यम् । इति । यदिशुभाधिक्त्वंशुभग्रहस्यशेषमवशिष्टंतदातद्ग्रहस्य दशाफलंभावफलंचशुभमेववाच्यम् । यदिअशुभाधिक्त्वमशुभग्रहस्यशेषमवशिष्टंतदातद्ग्रहस्यदशाफलंभावफलंचाशुभमेववाच्यम् ॥ ४६ ॥

| द्वादशांशचक्रंलिख्यते. | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| २ | ५ | ७ | १० | १२ | १५ | १७ | २० | २२ | २५ | २७ | ३० |
| ३० | ० | ३० | ० | ० | ० | ३० | ० | ३० | ० | ३० | ० |

क्रूरोऽपिसौम्याधिकवर्गशालीशुभोऽतिसौम्यः शुभखेचरश्चेत् ॥ सौम्योऽपिपापाधिकवर्गयोगान्नेष्टोतिनिंद्यः खलुपापखेटः ॥ ४७ ॥



अथग्रहभेदेनसौम्यपापवर्गभेदेनचफलतारतम्यमाह । क्रूरोपीति । यस्यग्रहस्यद्वादशवर्गिकाक्रियते सचेत्क्रूरोपि यदिपापग्रहोपि भवतिद्वादशवर्ग्यांसौम्यग्रहाधिकवर्गेण शालतयुक्तोभवतितदाशुभःशुभफलदः । शुभखेचरश्चेत् तद्यथा यस्यग्रहस्यद्वादशवर्गिकाक्रियतेसयदिशुभग्रहोभवति द्वादशवर्ग्यांशुभग्रहाधिकवर्गप्राप्तोभवति तदाऽतिसौम्यः अत्यंतशुभफलदाता । सौम्योऽपिपापाधिकवर्गयोगान्नेष्टः तद्यथा यस्यद्वादशवर्गिका क्रियते सयदिशुभग्रहोभवति द्वादशवर्ग्यांपापग्रहाधिकवर्गप्राप्तोभवति तदानिष्टः अशुभफलप्रदः । पापखेटः तद्यथा यस्यद्वादशवर्गिकाक्रियतेसयदिपापग्रहोभवति द्वादशवर्ग्यांपापग्रहाधिकवर्गप्राप्तोभवतितदाअतिनिंद्यः अत्यंतदुष्टफलदाता ॥ ४७ ॥

राशीशमित्रोच्चरिपुक्रमेणचिंत्यंतनोरप्यनयैवरीत्या ॥ भावेषुसर्वेष्वपिवर्गचक्रंविलोक्यतत्तत्फलमूहनीयम् ॥ ४८॥

अथद्वादशभावानांशुभाशुभफलमाह । राशीशेति । तनोर्लग्नस्याप्यनयैवरीत्याशुभग्रहाधिकपापग्रहाधिकवर्गशालित्वेनशुभाशुभफलं चिंत्यंविचार्यम् । यथा यदिलग्नं शुभग्रहाधिकवर्गशालिस्यादथवालग्नस्वामीशुभग्रहः सन्मित्रगृहेस्वोच्चेवा तदाशुभफलं ज्ञेयम् । यदिलग्नस्वामिसमगृहेवर्ततेतदाशुभाशुभफलाभावः । यदिलग्नंपापग्रहाधिकवर्गशालिस्यादथवास्वामीपापग्रहः सन्शत्रुगृहेनीचेवा तदाशुभंफलंज्ञेयम् । एवंसर्वेष्वपि भावेषुलग्नादि द्वादशभावेषुचवर्गचक्रंद्वादशवर्गिकाकार्यातांदृष्ट्वातद्भावस्यशुभाशुभफलमनयैवरीत्याऊहनीयंविचारणीयम् ॥ इतिद्वादशवर्गिका ॥ ४८ ॥

शरीरवर्णचिह्नायुर्वयोमानंसुखासुखम् ॥ जातिः शीलंचमतिमाँल्लग्नात्सर्वंविचिंतयेत् ॥ ४९ ॥ सुवर्णरूप्यरत्नानिधातुर्द्रव्यंससाधने ॥ विक्रमेभ्रातृभृत्याध्वापित्र्यस्खलनसाहसम् ॥ ५० ॥

अथलग्नेकिंविचार्यमित्यतआह । शरीरेति । वर्षलग्नंप्रश्नलग्नंचांगीकृत्यशरीरादिसर्वं विचार्यम् । तद्यथा । स्वशरीरंकृशंपुष्टंच वर्णः रक्तः श्वेतः शुकतनुनिभइत्यादि चिह्नं मशकादि आयुर्जीवनंकियत् वयोमानंबाल्यंयौवनंवार्द्धकमितिसुखम् असुखंदुःखं जातिः ब्राह्मणादिः शीलमाचरणम् एवंमतिमान्बुद्धिमान्लग्नात्सर्वंविचिंतयेत ॥ ४९ ॥ अथ धनभवनेकिंविचार्यमित्यतआह । सुवर्णेति । सुवर्णरूप्यरत्नानि धातुः गैरिकादिः द्रव्यंकांस्यादि सखामैत्रीविचारः धनेधनभवनेएतावद्विचार्यम् । अथसहजभवनेकिंविचार्यमित्यतआह । विक्रमेइति । विक्रमेसहजभवनेएतावद्विचार्यम् भ्रातासहजः भृत्यःसेवकः अध्वायानं पित्र्यंपितुः सबंधि स्खलनंकार्यभ्रंशः साहसंसाहसकर्म एतानिसहजभवने विचार्याणि ॥ ५० ॥

पितृवित्तंनिधिःक्षेत्रंगृहंभूमिश्चतुर्यतः ॥ पुत्रेमंत्रधनोपायगर्भविद्यात्मजेक्षणम् ॥ ५१ ॥ रिपौमातुलमांद्यारिचतुष्पाद्बंदभीव्रणान् ॥ द्यूनेकलत्रवाणिज्यनष्टविस्मृतिसंकथा ॥ हृताध्वकलिमार्गादिचिंत्यंद्यूनेग्रहोऽशुभः ॥ ५२ ॥

अथचतुर्थभवनेकिंविचार्यमित्यतआह । पितृवित्तमिति । पितृवित्तंपितुर्द्रव्यम् निधिः निक्षिप्तवस्तु क्षेत्रंकृष्यादि गृहम् भूमिः तुर्यतः चतुर्थभवनेएतावद्विचार्यम् । अथपंचमभवनेकिंविचार्यमित्यतआह । पुत्रेइति । पुत्रेपंचमभवनेएतावद्विचार्यम् । मंत्रः धनोपायः गर्भः विद्या आत्मजः पुत्रः एतेषामीक्षणमवलोकनंकार्यम् ॥ ५१ ॥ अथषष्ठभवनेकिंविचार्यमित्यतआह । रिपाविति । रिपौषष्ठभवनएतावद्विचार्यम् मातुलः मांद्यंरोगः अरिःशत्रुः चतुष्पाद्गवादिः बंदः पराश्रयः भीर्भयम्व्रणः क्षतम् इति । अथसप्तमभवनेकिंविचार्यमित्यआह । द्यूनइति । द्यूनेसप्तमभवनेएतावद्विचार्यम् कलत्रंजाया वाणिज्यं वणिक्कर्म नष्टंनष्टवस्तु विस्मृतिः विस्मरणमेतेषांसंकथाकथनं हृतंहृतद्रव्यंतस्यअध्वामार्गविचारः कलिः कलहविचारः मार्गादियात्राविचारः द्यूनेसप्तमभवनेशुभः पापोवाविद्यमानोग्रहः अशुभः अनिष्टफलदः ॥ ५२ ॥

मृत्यौचिरंतनंद्रव्यंमृतवित्तंरणोरिपुः ॥ दुर्गस्थानंमृतिर्नष्टंपरीवारोमनोव्यथा ॥ ५३ ॥ धर्मेरतिस्तथापंथाधर्मोपायंविचिंतयेत् ॥ व्योम्निमुद्रांपरंपुण्यंराज्यंवृद्धिंचपैतृकम् ॥ ५४ ॥

अथाष्टमभवनेकिंविचार्यमित्यतआह । मृत्याविति । मृत्यौअष्टमस्थानेएतावद्विचार्यम् । चिरंतनंद्रव्यप्राचीनद्रव्यम् । मृतवित्तंमृतस्यवित्तम् रणः संग्रामः रिपुःशत्रुः दुर्गस्थानं मृतिर्मरणम् नष्टंनष्टवस्तु परीवारः कुटुंबम् मनोव्यथामानसीव्यथा ॥ ५३ ॥

अथनवमभवनेकिंविचार्यमित्यतआह । धर्मेइति । धर्मेइति । धर्मेनवमस्थानेएतावद्वि- चार्यम् रतिःक्रीडा पंथाःयात्राविचारः धर्मोपायं धर्मसाधनं विचिंतयेत् । अथदशमभ- वनेकिंविचार्यमित्यतआह । व्योम्नीति । व्योम्निदशमभावेएतावद्विचार्यम् । मुद्रांराज मुद्रां मरंपुण्यमुत्कृष्टं राज्यं वृद्धिभागवृद्धिं पैतृकं पितुः संबंधि ॥ ५४ ॥

**आयेसर्वार्थधान्यार्घकन्यामित्रचतुष्पदाः ॥ राज्ञोवित्तंपरीवारो लाभोपायांश्चभूरिशः ॥ ५५ ॥ व्ययेवैरिनिरोधार्तिव्ययादिपरि- चिंतयेत् ॥ ५६ ॥**

अथैकादशभवनेकिंविचार्यमित्यतआह । आयेइति । आयेएकादशस्थाने एतावद्विचा- र्यम् सर्वार्थः सर्वद्रव्यप्रयोजनम् धान्यार्घःधान्यमौल्यम् कन्या मित्रं चतुष्पदः गजाश्वादि राज्ञःवित्तंराजद्रव्यंपरीवारःकुटुंबविचारः भूरिशः भूयांसः लाभोपायाःप्राप्त्युपायाः॥५५॥ अथव्ययभवनेकिंविचार्यमित्यतआह । व्ययेइति । व्ययेद्वादशभवनेएतावद्विचार्यम् वैरिनिरोधः शत्रुकृतावरोधः आर्तिःपीडा व्ययादि एतावद्विचिंतयेत् ॥ ५६ ॥

**लग्नांबुद्यूनकर्माणिकेंद्रमुक्तंचकंटकम् ॥ चतुष्टयंचात्रखेटोबली लग्नेविशेषतः ॥ ५७॥ लग्नकर्मास्ततुर्यायसुतांकस्थोबलीग्रहः ॥ यथाऽऽदिमंविशेषेणसत्रिवित्तेषुचंद्रमाः ॥ ५८ ॥**

अथ बलिष्ठग्रहस्यलक्षणमाह लग्नेति । लग्नं अंबुचतुर्थम् द्यूनंसप्तमम् कर्मदशमम् एतेषां स्थानानांकेंद्रंकंटकचतुष्टयंचेतिसंज्ञाः कृताः अत्रकेंद्रेस्थितः खेटोग्रहोबली ज्ञेयः तथापि चतुर्थसप्तमदशमस्थानापेक्षयालग्नसंस्थोग्रहोविशेषेणबलीज्ञेयः ॥ ५७ ॥ अथ ग्रहाणांशुभस्थानानिवदन्बलिष्ठयोगमाह । लग्नेति । लग्नं कर्मदशमम् अस्तंसप्तमम् तुर्यंचतुर्थम् आयमेकादशम् सुतंपंचमम् अंकंनवमम् एषुस्थानेषुग्रहोबली तत्र यथा- दिममादिस्थानमनतिक्रम्ययथादिममाग्रिमस्थानापेक्षया पूर्वपूर्वस्थो ग्रहो विशेषेण बलिष्ठः तद्यथा आदौनवमस्थोग्रहोबलिष्ठस्तदपेक्षया पंचमस्थोबलिष्ठस्तदपेक्षयाएकादशस्तदपे- क्षयाचतुर्थस्तदपेक्षयासप्तमस्तदपेक्षया दशमस्तदपेक्षया लग्नस्थो बलिष्ठइत्यर्थः । एतत्तु सर्वग्रहाणांसाधारणबलमुक्तम् । अथ चंद्रमाः सत्रिवित्तेषुतृतीयद्वितीयसहितेषुपूर्वोक्ते- षुस्थानेषुबलीज्ञेयः तत्र द्वितीयेबलिष्ठश्चंद्रस्तदपेक्षयातृतीयेबलिष्ठस्तदपेक्षयानवमस्थस्त- दपेक्षयापंचमस्ततः पूर्ववज्ज्ञेयः ॥ ५८ ॥

**कुजःसात्रिषुपृच्छायांसूतौचान्यत्राचिंतयेत् ॥ भावानवेत्थं शस्ताःस्युरिःफाष्टरिपवोऽशुभाः ॥ दीप्तांशातिक्रमेशस्ताइमेऽ-**

पातिविचिंतयेत् ॥ ५९ ॥ त्रिराशिपाःसूर्यसितार्किशुक्रादिने-
निशीज्येंदुबुधक्ष्माजाः ॥ मेषाच्चतुर्णांहरिभाद्विलोमंनित्यंपरेष्वा-
र्किकुजेज्यचंद्राः ॥ ६० ॥

| इदंत्रैराशिकस्वामियंत्रम्. | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | रा० |
| सू | शु | श | शु | गु | चं | बु | मं | श | मं | गु | चं | दिवा |
| गु | चं | बु | मं | र | शु | श | शु | श | मं | गु | चं | रात्रौ |

अथ भौमः कुजइति । कुजोभौमः सत्रिषुतृतीयस्थानसहितेषु प्रागुक्तेषु स्थानेषुबालिष्ठोज्ञेयः तत्र भौमस्तृतीयेबालिष्ठस्तदपेक्षयानवमस्थस्ततःपूर्ववज्ज्ञेयः एवमेत्रतस्थानस्थंग्रहंपृच्छायांप्रश्नलग्नेसूतौजन्मनिअन्यत्रवर्षलग्नादौचाचिंतयेत् इत्थममुनाप्रकारेण नवसंख्याकाभावाःशस्ताः शुभफलदाःस्युःग्रहाधिष्ठिताद्वादशाष्टमषष्ठभावाअशुभाःस्युःइमेद्वादशाष्टमषष्ठभावाआधिष्ठितग्रहदीप्तांशान् अतिक्रम्यवर्त्तन्ते तदातेऽपिभावाः शस्ताः शुभफलदातारःस्युरितिचिंतयेत् तत्राप्याधिष्ठितग्रहदीप्तांशमध्यइमेरिःफाष्टमरिपुभावायदि स्युस्तदैवानिष्टाइत्यर्थः ॥५९॥ अथ त्रैराशिकस्वामिनआह । त्रिराशिपाइति। दिनेदिवावर्षप्रवेशेमेषाच्चतुर्णां राशीनांसूर्यसितार्किशुक्राः स्वामिनः स्युः तद्यथा दिवावर्षप्रवेशेमेषलग्नं तदा सूर्यः वृषस्यशुक्रः मिथुनस्यार्किःशनिः कर्कस्यशुक्रः निशिरात्रौवर्षप्रवेशेमेषादीनां चतुर्णांराशीनामीज्येंदुबुधक्ष्माजाः स्वामिनः तद्यथा रात्रौमेषस्यस्वामी गुरुः वृषस्य चंद्रः मिथुनस्यबुधः कर्कस्यभौमः । एते हरिभात्सिंहाच्चतुर्णां राशीनांविलोमंविपरीतं ज्ञेयम् मेषादीनांयेदिनेशास्तेसिंहादीनांरात्रावीशाः येमेषादीनांरात्रीशास्तेसिंहादीनां दिनेशाइत्यर्थः तद्यथा दिनेसिंहलग्नस्यगुरुः कन्यायाश्चंद्रः तुलायाबुधःवृश्चिकस्यभौमः रात्रौसिंहस्यसूर्यः कन्यायाः शुक्रः तुलायाः शनिः वृश्चिकस्यशुक्रः परेषुधनुरादिषुचतुर्थराशिषु नित्यंसदा दिवारात्रौ वर्षप्रवेशे आर्किकुजेज्यचंद्राःस्वामिनः तद्यथा धनुषः शनिः मकरस्यभौमः कुंभस्यगुरुः मीनस्यचंद्रः दिवारात्रौवर्षप्रवेशेसतिधनुरादीनांदिनरात्रीशयोर्विपर्ययो नास्तीत्यर्थः ॥ ६० ॥

वर्षेशार्थंदिननिशाविभागोक्तास्त्रिराशिपाः ॥ पंचवर्गीबलाद्यर्थं
द्रेक्काणेशान्विचिंतयेत् ॥ ६१ ॥ जन्मलग्नपतिरब्दलग्नपो मुंथ-
हाधिपइतस्त्रिराशिपः ॥ सूर्यराशिपतिरह्निचंद्रमाधीश्वरोनिशि
विमृश्यपंचकम् ॥ ६२ ॥ बलीयएषांतनुमीक्षमाणः सवर्षपो
लग्नमनीक्षमाणः ॥ नैवाब्दपोदृष्ट्यतिरेकतः स्याद्बलस्यसाम्ये

विदुरेवमाद्याः ॥ ६३ ॥ दृगादिसाम्येप्यथ‍वानिर्बलत्वे वर्षाधिपः स्यान्मुथहेश्वरस्तु ॥ पंचापिचेन्नोतनुमीक्षमाणावीर्याधिकोऽब्दस्यविभुर्विचिंत्यः ॥ ६४ ॥

अथैतस्यप्रयोजनमाह । वर्षेशार्थमिति । एतेवर्षेशार्थंवर्षेशनिर्णयार्थंदिननिशाविभागेन त्रिराशिपाउक्ताः पंचवर्गीबलाद्यर्थंपूर्वोक्तान्द्रेक्काणेशान्विचिंतयेत् ॥ ६१ ॥ अथक्रमप्राप्तो-दाहरणप्रदर्शनार्थंवर्षतंत्रोक्तंचतुर्भिः श्लोकैर्वर्षेशनिर्णयमाह । तत्रादौ अधिकारिणश्चाह । जन्मेति । जन्मलग्नपतिः जन्मलग्नस्वामी । अब्दलग्नपोवर्षलग्नस्वामी मुंथहाधिपोमुंथहा स्वामी त्रिराशिपः त्रैराशिकस्वामी सूर्यसितार्किशुक्राइत्यादिनात्रैराशिकेश्वरोज्ञेयः अह्निदि-वावर्षप्रवेशेसूर्यराशिपतिर्दिनेशोज्ञेयः । निशिरात्रौवर्षप्रवेशेसति चंद्रमाधीश्वरः चंद्राधिष्ठित-राशीशोज्ञेयः सएवरात्रिस्वामीज्ञेयइत्यर्थः । अनयारीत्याग्रहपंचकंविमृश्याविचार्य ॥ ६२ ॥ एवंपंचाधिकारिणोज्ञात्वातेषांदृग्बलंपंचवर्गीबलंचज्ञात्वावर्षपतिनिर्णयमाह । बलीयइति । एषांपंचानामधिकारिणांमध्येयोग्रहोबलीपंचवर्ग्याबलाधिकस्तनुंलग्नमीक्षमाणः पश्यति सवर्षपोवर्षस्वामीज्ञेयः । यदाबलिष्ठोऽपिग्रहोलग्नमनीक्षमाणः लग्नंनपश्यतितदावर्षाधिपो नैवस्यात् । यदाबलस्यसाम्येपंचवर्ग्यांसर्वेतुल्यबलास्तदादृष्ट्यतिरेकतः स्यात् । यथायोऽ-धिकदृष्ट्यालग्नंपश्यतिसवर्षाधीशइतिएवमाद्याविदुः वदंति ॥ ६३ ॥ दृष्टिसाम्येचाह । दृगिति । सर्वेषां दृक्साम्येदृष्टिसाम्ये आदिशब्दाद्बलसाम्येऽपि अथवानिर्बलत्वेवर्षाधि-पोवर्षेश्वरः मुंथहेश्वरः स्यात् चेत्पंचाधिकारिणः सबलायद्यपितनुंलग्नंनेक्षमाणाः नपश्यंति त ापिवीर्याधिकः अंकतोयस्यैवंबलमाधिकंसएवाब्दस्य वर्षस्यविभुः स्वामीविचिंत्यः ६४॥

बलादिसाम्येरविराशिपोऽह्निनिशींदुराशीडितिकेचिदाहुः ॥ येनेत्थशालोऽब्दविभुः शशीसवर्षाधिपश्चंद्रभपोऽन्यथात्वे ॥ ६५॥ स्वजन्मलग्नात्प्रतिवर्षमेकैकराशिभोगान्मुथहाक्रमेण ॥ स्वजन्मलग्नंरवितष्टयातं शरद्युतंसाभमुखेन्थिहास्यात् ॥ ६६ ॥

अथकेनचिन्मतेनदृष्टिबलसाम्येवर्षाधिपेतिनिर्णयमाह । बलादीति । बलसाम्येआदि-शब्दाद्दृष्टिसाम्येच । अह्निदिवावर्षप्रवेशेरविराशिपः रव्याक्रांतराशीश्वरोज्ञेयःनिशिरात्रौवर्ष-प्रवेशेइंदुराशीट्चंद्राक्रांतराशीश्वरोवर्षाधीश्वरोज्ञेयइतिकेचिदाहुः । अथोत्तरार्द्धेविशेषमाह येनेत्थशालइति । यउक्तप्रकारेणशशीचंद्रः अब्दविभुः वर्षस्वामीजातःसयदियेनपंचाधि-कारिमध्यस्थितेनग्रहेणसहेत्थशालंकुरुते तदासएववर्षाधिपोवर्षस्वामीकल्प्यः । अन्यथा-त्वेइत्थशालयोगाभावेचंद्रभपश्चंद्राक्रांतराशीश्वरोवर्षाधिपोज्ञेयः ॥ ६५ ॥ अथमुंथानय-

नमाह । स्वेति । यदाजन्मजातंतस्मिन्समयेयल्लग्नंतदासैवमुथहा । सामुथहास्वजन्मलग्नात्प्रतिवर्षमेकैकराशिवृद्ध्याभ्रमति । तद्यथा । जन्मलग्नंकन्याजन्मसमयेतत्रैवमुथहा । द्वितीयवर्षे तुलायामित्यादिर्मुथहोत्पत्तिप्रकारइष्टवर्षेभवति । अथमुथहानयनम् । राश्यादिस्वजन्मलग्नंयातशरद्युतंजन्मकालाद्गतवर्षगणेनयुक्तं द्वादशभिस्तष्टंसाशेषप्रमिताभमुखाराश्यादिरिथिहा मुथहास्यात् । उदाहरणम् । जन्मलग्नम् ५ । १० । ५३ । ५० गतवर्षगणेनयुक्तम् ४२ । १० । ५३ । ५० द्वादशभिस्तष्टम् । शेषांकप्रमिताजाताराश्यादिर्मुथहा ६ । १० । ५३ । ५० ॥ ६६ ॥

**प्रत्यहंशरलिप्ताभिर्वर्धतेऽप्यानुपाततः ॥ सार्धमंशद्वयंमासइत्याहुःकोऽपिसूरयः ॥ ६७ ॥ भोग्याराहोर्लवास्तस्यमुखंपृष्ठंगतालवाः॥ ततः सप्तमभंपुच्छंविमृश्येतिफलंवदेत् ॥ ६८ ॥ श्रीगर्गान्वयभूषणंगणितविच्चिंतामणिस्तत्सुतोऽनंतोऽनंतमतिर्व्यधात्खलमतध्वस्त्यैजनुःपद्धतिम् ॥ तत्सूनुःखलुनीलकंठविबुधोविद्वच्छिवानुज्ञयासंतुष्ट्यैव्यदधाद्गृहप्रकरणंसंज्ञाविवेकेऽमलम् ॥ ६९ ॥**



## ॥ इति संज्ञातंत्रे ग्रहाध्यायः प्रथमः ॥ १ ॥

स्पष्टमिदंपद्यम् ॥ ६७ ॥ अथराहोर्मुखपृष्ठपुच्छानां लक्षणमाह । भोग्येति । यस्मिन्राशौराहुरस्तितेनवक्रगतिनायेभोग्याअंशास्तेमुखसंज्ञाः । येगतालवाः भुक्तलवास्तेपुच्छसंज्ञाः । ततः सप्तमंभवनंततोराहोः सप्तमं सप्तमराशिः पुच्छसंज्ञकइतिविमृश्यविचार्य मुथहायाः फलंवदेत् । अथोक्तप्रकारेण वर्षेशनिर्णयः तत्रादौजन्मलग्नेशोबुधः वर्षलग्नेशोभौमः । मुंथहेशोभृगुः । त्रैराशिकेशःसूर्यः । दिनेशः शनिः । पंचानांमध्ये बलिष्ठःशनिः पूर्णदृष्ट्यालग्नं पश्यति अतोवर्षेशः शनिः ॥ ६८ ॥ ६९ ॥

इति श्रीदिवाकरदैवज्ञात्मजविश्वनाथदैवज्ञविरचिते श्रीनीलकंठज्योतिर्वित्कृतसंज्ञातंत्रस्यव्याख्यानेग्रहाध्यायः प्रथमः ॥ १ ॥

---

## अथ षोडशयोगाऽध्यायः प्रारभ्यते ।

**सूर्योनृपोनाचतुरस्रमध्यंदिनेंद्राद्दिक्स्वर्णचतुष्पदोऽग्रः ॥ सत्त्वंस्थिरस्तिक्तपशुक्षितिस्तुपित्तंजरन्पाटलमूलवन्यः॥ १ ॥ वैश्यःशशी स्त्रीजलभूस्तपस्वीगोरोपराह्णांबुगधातुसत्त्वम् ॥ वायव्य-**

दिक्श्लेष्मभुजंगरूप्यस्थूलोयुवाक्षारशुभःसिताभः ॥ २ ॥ भौमस्तमः पित्तयुवोग्रवन्योमध्याह्नधातुर्यमदिक्चतुष्पात् ॥ नाराट्चतुष्कोणसुवर्णकारोदग्धाऽवनीव्यंगकटुश्चरक्तः ॥ ३ ॥ ग्राम्यःशुभोनीलसुवर्णवृत्तःशिश्विष्टकोचःसमधातुजीवः॥श्मशानयोषोत्तरदिक्प्रभातंशूद्रःखगःसर्वरसोरजोज्ञः ॥ ४ ॥

अथग्रहाणांस्वरूपम् ॥ तत्रादौसूर्यस्यस्वरूपमाह ॥ सूर्यइति । सूर्यएतादृशो ज्ञेयः । नृपः क्षत्रियः । ना पुरुषग्रहः । चतुरस्रः चतुष्कोणाकृतिः । मध्यंदिनं मध्याह्नकालेप्रबलः । इंद्रादिक्पूर्वदिक्स्वामी । स्वर्णं सुवर्णद्रव्यस्वामी चतुष्पदामश्वगजादीनांप्रभुः । उग्रःक्रूरः । सत्त्वं सत्त्वप्रधानः । स्थिरःस्थिरस्वभावः । तिक्तः तिक्तरसप्रियः । पशुक्षितिः पशुभूमिचारी । पित्तं पित्तप्रकृतिः । जरन् वृद्धः । पाटलः श्वेतरक्तमिश्रितवर्णः । मूलं मूलोत्पन्नस्यधान्यादेरधिष्ठाता । वन्यो वनचारी । एवंगुणविशिष्टःसूर्यः ॥ १ ॥ अथ चंद्रस्वरूपमाह ॥ शशीचंद्रः वैश्यः वैश्यजातिः । स्त्रीः स्त्रीग्रहः । जलभूरार्द्रभूमिचारी । तपस्वी तपोयुक्तः गौरः । गौरवर्णः । अपराह्णःअपराह्णकालेप्रबलः । अंबुगो जलचारी । धातुर्गैरिकादिः । सत्त्वं सत्त्वप्रधानः वायव्यदिग्वायव्यदिक्स्वामी । श्लेष्मा श्लेष्मप्रधानः । भुजंगः भुजंगस्वामी । रूप्यं रूप्यद्रव्यस्वामी । स्थूलोऽतिपुष्टः । युवा तरुणः । क्षारः लवणरसप्रधानः । शुभः शुभग्रहः । सिताभः शुभ्रवर्णः । एवंविधश्चंद्रोज्ञेयः ॥ २ ॥ अथभौमस्वरूपमाह ॥ भौमइति । एतादृशोभौमोज्ञेयः तमः तमोगुणप्रधानः । पित्तं पित्तप्रकृतिः । युवा तरुणः । उग्रः क्रूरः । वन्यो वनचारी । मध्याह्नः मध्याह्नकालेप्रबलः । धातुः गैरिकादिः । यमदिक् दक्षिणदिक्स्वामी । चतुष्पाचतुष्पदानामश्वादीनांप्रभुः । ना पुरुषग्रहः । राट् राजा । चतुष्कोणः चतुष्कोणाकृतिः । सुवर्णकारः सुवर्णकाराणांस्वामी । दग्धाऽवनी ज्वलितभूमिचारी । व्यंगः किंचिदंगरहितः । कटुः कटुरसप्रियः । रक्तस्ताम्रवर्णः वा रक्तवर्णद्रव्यस्वामी ॥ ३ ॥ अथ बुधस्वरूपमाह ॥ ग्राम्यइति । ग्राम्यः ग्रामचारी । शुभः सौम्यः । नीलः नीलवर्णः । सुवर्णद्रव्यस्वामी । वृत्तोवर्तुलाकृतिः । शिशुर्बालकः । इष्टकोचःइष्टकोचसंचारी । समधातुः वातपित्तकफात्मकः जीवो मनुष्यादिः । श्मशानं यत्रशवदहनंभवतितत्स्थलचारी । योषा स्त्रीग्रहः । उत्तरदिगुत्तरदिक्स्वामी । प्रभातं प्रातःकालेसबलः । शूद्रः शूद्रजातिः । खगः पक्षिजातिः सर्वरसः कट्वादिसकलरसप्रधानः । रजो रजोगुणप्रधानः । ज्ञो बुधः एवंगुणविशिष्टोज्ञेयः ॥ ४ ॥

गुरुःप्रभातेनृशुभेशदिग्द्विजःपीतोद्विशद्ग्राम्यसुवृत्तजीवः॥ वाणिज्यमाधुर्यसुराढ्यशोवृद्धःसुरत्नंसमधातुसत्त्वम् ॥ ५ ॥ शुक्रः

शुभः स्त्रीजलगोऽपराह्णः श्वेतः कफी रूप्यरजोऽम्लमूलम्॥ विप्रोऽ-
ग्निदिङ्मध्यवयो रतीशो जलावनिः स्निग्धरुचिर्द्विपाच्च ॥ ६ ॥

अथ गुरुस्वरूपमाह ॥ गुरुरिति । एतादृशो गुरुः । प्रभाते प्रातःकाले प्रबलः । ना पुरुषग्रहः । शुभः सौम्यग्रहः । ईशादिगीशानदिक्स्वामी । द्विजो ब्राह्मणः । पीतः पीतवर्णः । द्विपात् द्विपदानां स्वामी । ग्राम्यः ग्रामचारी । सुवृत्तो वर्तुलाकृतिः । जीवो मनुष्यादिः । वाणिज्यं वणिक्कर्मकर्ता । माधुर्यं मधुररसप्रियः । सुरालयेशो देवतागृहस्वामी । वृद्धः वृद्धग्रहः । सुरत्नं शोभनरत्नद्रव्यस्वामी । समधातुर्वातपित्तकफात्मकः । सत्त्वं सत्त्वगुणप्रधानः ॥ ५ ॥ अथ शुक्रस्वरूपमाह ॥ शुक्रइति । शुक्रएतादृशो ज्ञेयः । शुभः शुभग्रहः । स्त्रीग्रहः । जलगो जलचारी । अपराह्णः अपराह्णकाले प्रबलः । श्वेतः शुभ्रवर्णः । कफी कफप्रकृतिः । रूप्यं रूप्यद्रव्यस्वामी । रजः रजोगुणप्रधानः । अम्लः अम्लरसप्रियः । मूलं मूलोत्पन्नस्य धान्यादेः स्वामी । विप्रो ब्राह्मणः । अग्निदिगाग्नेयदिक्स्वामी । मध्यवयाः तरुणः । रतीशः क्रीडारसप्रधानः । जलावनिः जलभूमिचारी । स्निग्धरुचिः श्लक्ष्णकांतिः द्विपाद्द्विपदानां मनुष्यादीनां स्वामी ॥ ६ ॥

शनिर्विहंगोऽनिलवन्यसंध्याशूद्रांगनाधातुसमः स्थिरश्च ॥
क्रूरः प्रतीचीतुवरोऽतिवृद्धोत्करक्षितीड्दीर्घसुनीललोहम् ॥ ७ ॥

अथ शनिस्वरूपमाह ॥ शनिरिति । शनिरेतादृशः विहंगः पक्षिजातिः । अनिलो वायुचारी । वन्यो वनचारी । संध्या संध्याकाले प्रबलः । शूद्रः शूद्रजातिः । अंगना स्त्रीग्रहः । धातुसमः वातपित्तकफात्मकः । स्थिरः स्थिरस्वभावः । क्रूरः पापग्रहः । प्रतीची पश्चिमदिक्स्वामी । तुवरः कषायरसप्रियः । अतिवृद्धः अत्यन्तवृद्धग्रहः । उत्कराक्षिती उत्करभूस्वामी । दीर्घः दीर्घाकृतिः । सुनीलः सुष्ठुनीलवर्णः । लोहं लोहस्यस्वामी ॥ ७ ॥

राहुस्वरूपं शनिवन्निषादजातिर्भुजंगोऽस्थिपनैर्ऋतीशः ॥
केतुः शिखी तद्वदनेकरूपः खगस्वरूपात्फलमूह्यमित्थम् ॥ ८ ॥

अथ राहुस्वरूपमाह ॥ शनिवत्तत्र किंचिद्विशेषोऽस्तीत्याह । राह्विति । निषादजातिश्चांडालविशेषः । भुजंगः सर्परूपः । अस्थिपोऽस्थिस्वामी । नैर्ऋतीशः नैर्ऋतीदिक्पतिः अथ केतुस्वरूपं शनिराहुवत्परंत्वेतावान्विशेषः ॥ केतुः ॥ शिखी शिखावान् । अनेकरूपः नानाविधरूपः । इत्थममुना प्रकारेण ग्रहस्वरूपात्फलमूह्यं ज्ञेयम् ॥ ८ ॥

दृष्टिः स्यान्नवपंचमे बलवती प्रत्यक्षतः स्नेहदा पादोनाऽखिलकार्य-
साधनकरी मेलापकाख्योच्यते ॥ गुप्तस्नेहकरी तृतीयभवभे कार्य-
स्य संसिद्धिदा त्र्यंशोना कथिता तृतीयभवने षड्भागदृष्टिर्भवे ॥ ९ ॥

अथदृष्टिमाह ॥ तत्रग्रहाणांचतुर्विधादृष्टिः । एकाप्रत्यक्षस्नेहाद्वितीयागुप्तस्नेहा तृतीयागुप्तवैराचतुर्थीप्रत्यक्षवैरा । तत्रादौस्नेहदृष्टिमाह ॥ दृष्टिरिति । कुंडल्यां ग्रहाः स्वाक्रांतस्थानान्नवपंचमेनवमस्थानस्थंग्रहं पंचमस्थानस्थंग्रहंच पश्यति सादृष्टिर्बलवती प्रत्यक्षतः स्नेहदाप्रीतिदा पादोनासादृष्टिः चतुर्थांशन्यूनापंचचत्वारिंशत्कलात्मिका ४५ अखिलानांसमस्तानांकार्याणांसाधनंसंपत्तिंकरोति मेलापकाख्यापरस्परप्रीतिकारिणी ॥ इत्येकादृष्टिः । अथस्वाक्रांतस्थानात् ग्रहस्तृतीयस्थानस्थंग्रहमेकादशस्थानस्थंग्रहंचयत्पश्यतिसादृष्टिर्गुप्तस्नेहकरीकार्यस्यसंसिद्धिदाभवति । सादृष्टिस्तृतीयभवनेऽयंशोनाचत्वारिंशत्कलात्मिका ४० कथिता । भवेएकादशस्थानेषड्भागः षडंशोदशकलात्मिकादृष्टिःस्यात ॥ ९ ॥

**दृष्टिः पादमिताचतुर्थदशमेगुप्तारिभावास्मृताऽन्योऽन्यंसप्तमभे तथैकभवनेप्रत्यक्षवैराऽखिला ॥ दुष्टंदृक्त्रितयंक्षुताह्वयमिदंकार्यस्यविध्वंसदंसंग्रामादिकलिप्रदंदृशइमाः स्युर्द्वादशांशांतरे ॥ १० ॥**

अथग्रहाणांशत्रुदृष्टिमाह । दृष्टिःपादमितेति ॥ स्वाक्रांतस्थानात्ग्रहश्चतुर्थस्थानस्थंग्रहं दशमस्थानस्थंग्रहंचयत्पश्यति सादृष्टिर्गुप्तारिभावा अप्रकाशितशत्रुभावास्मृता । पादमिताचतुर्थांशमितापंचदशकलात्मिकादृष्टिः । तथाऽन्योऽन्यं परस्परंसप्तमभेसप्तमराशौ तथैकभवनेएकराशावपिग्रहोयत्पश्यति सादृष्टिःप्रत्यक्षवैरा । अखिलासंपूर्णदृष्टिः षष्टिः ६० कलात्मिकास्यात् । इदंदुष्टंदृक्त्रितयं चतुर्थदशमरूपमेवंसमसप्तकरूपंद्वितीयमेकराशिगतंतृतीयमेवमिदंदृष्टित्रयंक्षुताह्वयंसकलशुभकर्मनाशकम् । इदमपिदृष्टित्रयंकार्यस्याभीष्टस्यविध्वंसदम् । किंच संग्रामादिसंग्रामोयुद्धंतत्प्रभृतिककलिप्रदंयुद्धकारकंक्लेशंप्रददाति ॥ इमादृशोद्वादशांशांतरेद्रष्टृदृश्यांतरंद्वादशभागानाधिकं तदायथोक्तंफलदात्र्यःस्युः ॥ १० ॥

**अपास्यपश्यंनिजदृश्यखेटादेकादिशेषेध्रुवलिप्तिकाःस्युः ॥ पूर्णं खवेदास्तिथयोऽक्षवेदाः खंषष्टिरभ्रंशरवेदसंख्या ॥ ११ ॥ तिथ्यः खचंद्रावियदभ्रतर्काः शेषांकयातैष्यविशेषघातात् ॥ लब्धंखरामे ३० रधिकोनकैष्येस्वर्णंध्रुवेताः स्फुटदृष्टिलिप्ताः ॥ १२ ॥**

दृष्टिध्रुवांकाः सांतरा लख्यंते.

| राशयः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ध्रुवांकाः | ० | ३० | १५ | ४५ | ० | ६० | ० | ४५ | १५ | ३० | ० | ६० |
| अंतरांकाः | ४० | २५ | ३० | ३५ | ६० | ६० | ४५ | ३० | ५ | १० | ६० | ६० |
| ऋण.धन | धन | ऋ. | ध. | ऋ. | ध. | ऋ. | ध. | ऋ. | ध. | ऋ. | ध. | ऋ. |

अथगणितागतदृष्टिसाधनमाह ॥ अपास्येति । तिथ्यइतिच । योग्रहः पश्यतिसद्रष्टा यंपश्यतिसदृश्यम् इत्यवलोक्य पश्यंद्रष्टारं ग्रहं निजदृश्यखेटात् अपास्यशोध्य यद्राश्या-

दिशेषांतिभ्रति । यस्मिन्नेकादिशेषात्मकेध्रुवाः स्थिराः लिप्तिका दृष्टिकलाः पूर्णमित्यादिकाःस्युः । तद्यथा । द्रष्टृरहितदृश्यग्रहस्य राशिस्थानेएकस्मिञ्छेषेपूर्णशून्यंदृष्टिः ॥ द्विशेषेखवेदाश्चत्वारिंशत् ४० त्रिशेषेतिथयः पंचदश १५ । चतुःशेषेऽक्षवेदाः ४५ पंचचत्वारिंशत् । पंचशेषेखंशून्यम् ० । षट्शेषेषष्टिः ६० । सप्तशेषेअभ्रंशून्यम् अष्टशेषेशरवेदसंख्या पंचचत्वारिंशत् ४५ । नवशेषेतिथ्यः पंचदश १५ दशशेषेखचंद्राः १ एकादशशेषेवियच्छून्यम् ० । द्वादशशेषेऽभ्रतर्काः षष्टिः ६० । शेषांशेतिद्रष्टृरहितदृश्यस्यराशिस्थानेयोंकः प्राप्तः सस्थाप्यः यातैष्ययोर्गतगम्ययोर्विशेषांतरं कार्यम् । तद्यथा । राशिस्थानेयोंकः प्राप्तः सयातसंज्ञकः । तस्याग्रिमांकोयः सएष्यसंज्ञकः । तयोरंतरंकार्यम् । तेनांतरेणशेषांशाः गुण्याः ततःखरामैस्त्रिंशद्भिः ३० भक्ते यल्लब्धंकलादिकंतत् ध्रुवेराशिस्थानेप्राप्तांकेस्वर्णकार्यम् । कदाचाधिकोनकैष्येसतियदाग्रिमोध्रुवः प्राग्ध्रुवादधिकोभवेत् तदाधनम् । यदोनोऽग्रिमध्रुवहीनोभवेत्तदाऋणमेवंसतिताः स्फुटादृष्टिलिप्ताः कलाःस्युः । उदाहरणम् । द्रष्टाचंद्रः ५ । २२ । ९ । ४७ दृश्योरविः ९ । ७ । ३० । ६ द्रष्टृरहितदृश्यः ३ । १५ । २० । १९ । अस्यराशिस्थानेत्रयोंकाः त्रयाणामधः पंचदशध्रुवांकः प्राप्तः १५ अग्रिमोंकः पंचचत्वारिंशत् ४५ अनयोरंतरेण ३० शेषांकाः १५ । २० । १९ गुणिताः जाताः ४६० । ९ । ३० त्रिंशद्भक्ताः लब्धम् १५ । २० इदमाग्रिमस्यांकस्याधिकत्वात्पंचदश १५ मध्येयुतंजातास्तयोपरिचंद्रस्यकलात्मिकादृष्टिः ३० । २० एवंसर्वग्रहाणामपिज्ञेयम् ॥ ११ ॥ १२ ॥

ग्रहदृष्टियंत्रम्.

| | र | चं | मं | बु | गु | शु | श |
|---|---|---|---|---|---|---|---|
| र | ०<br>० | ३०<br>२१ | १४<br>५ | ९<br>३२ | ४४<br>१० | ४<br>१९ | १५<br>४४ |
| चं | ३०<br>२० | ०<br>० | २१<br>२१ | २२<br>१५ | २२<br>२५ | ३८<br>१ | ३०<br>४१ |
| मं | १४<br>५ | १३<br>४४ | ०<br>० | ५५<br>२७ | २९<br>५४ | १९<br>५८ | ११<br>१७ |
| बु | ९<br>३३ | १३<br>२१ | ५५<br>२८ | ०<br>० | २५<br>२१ | २४<br>३१ | १०<br>५४ |
| गु | ४४<br>१० | २२<br>२६ | २९<br>५४ | २५<br>२१ | ०<br>० | १<br>४१ | १३<br>४७ |
| शु | १७<br>१७ | १०<br>२४ | १९<br>५८ | २४<br>३१ | ६<br>४४ | ०<br>० | [illegible]<br>५४ |
| श | १५<br>४१ | ३०<br>४९ | ३३<br>३३ | ३५<br>२७ | २१<br>१ | २६<br>५६ | ०<br>० |

**पश्यन्मित्रदृशासुहृद्रिपुदृशाशत्रुः समस्त्वन्यथा।तिथ्यर्काष्टनगांकशैलखचराः १५ । १२ । ८ । ७ । ९ । ७ । ९ सूर्यादिदीप्तांशकाः ॥ चक्रेवामदृगुच्यतेबलवती मध्याद्यथावेश्मनीत्येकर्क्षेऽपिदृगुच्यतेऽर्थजननीत्येकेविदुःसूरयः १३॥**

अथग्रहमैत्रीचक्रमाह ॥ पश्यन्निति ॥ योग्रहोयंग्रहं मित्रदृशामित्रदृष्ट्यानवपंचमतृतीयैकादशदृष्ट्या पश्यति सग्रहस्तंप्रति सुहृन्मित्रंज्ञेयः । योग्रहोरिपुदृशाशत्रुदृष्ट्या चतुर्थदशमैकसप्तमदृष्ट्या पश्यति स तं प्रति शत्रुर्ज्ञेयः । अन्यथा मित्रशत्रुदृष्ट्यभावेपरिशेषाद्द्वितीयषष्ठाष्टमद्वादशस्थानेषुसमताभवति । अत्रार्थेसंमतिवाक्यम् । यथाच रोमकः । मित्रंतृतीयपंचमनवमैकादशगतोऽपियोयस्य ॥

धनमूर्तीरिपुरिःफेषु च समो ग्रहः स्यादिति ज्ञेयम् ॥ १ ॥ शत्रुस्तथैकतुर्येजायास्थाने तथा दशमे ॥ ताजिकहिल्लाजमते नैतादृक्कथितमस्माभिः ॥२॥ अत्र मित्रसमशत्रुविचारे नवपंचमादिस्थाने दृष्टिरेव ग्राह्या । अत्र सर्वेष्वपि स्थानेषु यद्यपि गणितागतदृष्टिरायाति तथापि सा न ग्राह्या । कुतः दृष्ट्यभावे समतोक्ता गणितागतदृष्टौ सत्यां समताया अभावः स्यादिति हेतुरिति केचित् । वस्तुतस्तु अत्र ग्रहयोरेकपंचसप्तैकादशांतरयोस्तुल्यभागाद्यवयवयोर्गणितागतदृष्टेरभावः यथा द्रष्टा चंद्रः १ । ३ । २० । ५० दृश्यो बुधः २ । ३ । २० । ५ । वा बुधः ६ । ३ । २० । ५० । वा बुधः ८ । ३ । २० । ५० एवं कदाचित् ० । ३ । २० । ५० एवं कदाचित्संभवतीति ग्रंथांतरे समानोक्ता ॥ अथ सूर्यादीनां दीप्तांशानाह ॥ तिथीति । सूर्यस्य तिथयः पंचदश १५ । चंद्रस्यार्काः द्वादश १२ । भौमस्याष्टौ ८ । बुधस्य नगाः सप्त ७ । गुरोरंका नव ९ । शुक्रस्य शैलाः सप्त ७ । शनेः खचराः नव ९ । सूर्यादीनां ग्रहाणामेते दीप्तांशका ज्ञेयाः ॥ अथ दृष्टौ कश्चिद्विशेष उच्यते ॥ चक्र इति ॥ चक्रे लग्नादिद्वादशराशिचक्रे वामदृग्बलवती ज्ञेया । दक्षिणदृष्ट्यपेक्षयेत्यर्थः । वामस्य वामस्थानस्थग्रहस्य दृक् वामदृक् । वामभागस्थग्रहस्य दक्षिणभागस्थग्रहोपरि या दृष्टिः सा बलवती । लग्नादिषष्ठांतं दक्षिणविभागः । सप्तमादिद्वादशांतं वामविभागः ॥ तदुक्तं बृहज्जातके । कंटगित्यादिश्लोके वाममुदितैरिति राशिभिरुदितैर्दृश्यभागावस्थितैर्वामांगविभागः लग्नस्योदितभागास्तथा द्वादशैकादशदशमनवमाष्टमाः तथा सप्तमस्य राशेर्लग्नोदिततुल्यभागाः एष भाग उदितः शेषोऽनुदितैः अर्थादनुदितैरदृश्यैर्दक्षिणो विभागः तत्र लग्नानुदितभागाः तथा द्वितीयतृतीयचतुर्थपंचमषष्ठाः सप्तमराशेर्लग्नोदिततुल्यविभाग इत्यनुदितो विभागः एष दक्षिणो विभाग इति । भट्टोत्पलः चक्रे वामदृगुच्यते बलवतीत्यत्र किंचिदेकमुदाहरणमाह मध्यादिति मध्याद्दशमस्थानाद्वेश्मनि चतुर्थस्थाने या दृष्टिः सा बलवतीत्युक्तं भवति दशमस्थानस्थितग्रहस्य चतुर्थस्थानस्थितग्रहोपरि या दृष्टिः सा बलवतीत्यर्थः । चतुर्थस्थानस्थितग्रहस्य दशमस्थानस्थितग्रहोपरि या दृष्टिः सा निर्बलेत्यर्थत्वात्सूचितम् ॥ सप्तमादिद्वादशस्थानस्थितानां ग्रहाणां लग्नादिषष्ठांतस्थानस्थितेषु ग्रहेषु या दृष्टिः सा बलवतीति निर्दिष्टोऽर्थः । समरसिंहस्याप्ययमेवार्थः । तद्यथा चक्रस्य वामदृष्टेर्दक्षिणदृष्टिर्बलीयसी ज्ञेया ॥ भूकेंद्रोपरि दृष्टिर्मध्यात्सबलेति सर्वतोऽप्यूह्यमिति । वामदृष्टिरित्यत्र सप्तमीतत्पुरुषः समासः । वामे दृष्टिर्वामदृष्टिः । दक्षिणे दृष्टिर्दक्षिणदृष्टिः । दक्षिणभागस्थितानां ग्रहाणां या वामभागस्थग्रहेषु दृष्टिस्तदपेक्षया वामभागस्थग्रहाणां दक्षिणभागस्थग्रहोपरि या दृष्टिः सा बलवतीत्यर्थः । अत्रोदाहरणम् ॥ भूकेंद्रेति ॥ मध्याद्दशमस्थानाद्भूकेंद्रोपरि चतुर्थोपरि या दृष्टिः सा बलवती । एवं सर्वतोऽपि सप्तमादिद्वादशांतस्थानस्थितानां लग्नादिषष्ठांतस्थानस्थितेषु ग्रहेषु या दृष्टिः सा बलवतीत्यूह्यं विचार्यम् ॥ श्रीकेशवदैवज्ञस्याप्ययमेवार्थः । तद्यथा । परार्द्धखगदृक्प्राग्ज्यार्द्धदृक्तोऽधिकेति । परार्द्धखगस्य दृक् । लग्नादिषष्ठांतं पूर्वार्द्धम् । सप्तमादिद्वादशांतं परार्द्धमिति ।

अथैकस्थानदृष्टौमतांतरमाह । एकर्क्षेपीति । एकर्क्षेएकराशिस्थितयोर्दृश्यद्रष्ट्रोःपरस्परं याद्दग्दृष्टिः साअर्थजननी अत्यंतलाभपूर्वकशुभफलदात्रीज्ञेया इत्येकेसूरयः पंडितास्ताजिकशास्त्रवेत्तारोविदुः ॥ १३ ॥

पुरः पृष्ठेस्वदीप्तांशैर्विशिष्टंदृक्फलंग्रहः ॥ दद्यादतिक्रमेतेषांमध्यमंदृक्फलंविदुः ॥१४॥ प्रागिक्कवालोपरइंदुवारस्तथेत्थशालोऽपरईसराफः ॥ नक्तंततः स्याद्यमयामणाऊकंबूलतोगैरिकबूलमुक्तम् ॥ १५ ॥ खल्लासरंरदमथोदुफालिकुत्थंचदुत्थोत्थदिवीरनामा ॥ तंबीरकुत्थोदुरफश्चयोगाः स्युः षोडशैषांकथयामिलक्ष्म ॥ १६ ॥

अथपूर्वोक्तानांदीप्तांशानांप्रयोजनमाह ॥ पुरइति ॥ अनवमादिस्थानदृष्टौसत्यांग्रहो द्रष्टास्वदीप्तांशैः कृत्वापुरोऽग्रेपृष्ठेपश्चाद्वाऽवस्थितेग्रहेविशिष्टमुत्कृष्टंनवमादिस्थानस्थं दृक्फलं दृष्टिफलं दद्यात् ॥ तेषांदीप्तांशानामतिक्रमेदृष्टिफलं मध्यमंसाधारणंदद्यादिति विदुः ॥ १४ ॥ अथषोडशयोगाव्याख्यायंते तत्र तेषांनामानि श्लोकद्वयेनाह प्रागिति । खल्लेतिच । प्राक्प्रथमोयोगःइक्कवालः १ । अपरइंदुवारः २ । तथेत्थशालः ३ । अपरः ईसराफः ४ । ततोनक्तंस्यात् ५ । यमया ६ । मणाऊ ७ कंबूलं ८ । गैरिकबूलं ९ । खल्लासरं १० । रद्दं ११ । दुफालिकुत्थं १२ । दुत्थोत्थदिवीरं १३ तंबीरः १४ कुत्थः १५ । दुरफः १६ । एतेषोडशयोगाःस्युः एषामिक्कवालादीनांलक्ष्मलक्षणंकथयामि ॥ १५ ॥ ॥ १६ ॥

चेत्कंटकेपणफरेचखगाः समस्ताः स्यादिक्कवालइतिराज्यसुखाप्तिहेतुः॥आपोक्लिमेयदिखगाः सकिलेंदुवारोनस्याच्छुभः क्वचनताजिकशास्त्रगीतः ॥१७॥ शीघ्रोऽल्पभागैर्घनभागमंदेग्रस्तेनिजंतेजउपाददीत ॥ स्यादित्थशालोऽयमथोविलिप्ताल्पिताद्धहीनोयदिपूर्णमेतत् ॥ १८ ॥

अथेक्कवालेंदुवारयोर्द्वयोर्लक्षणमाह ॥ चेदिति ॥ लग्नचतुर्थसप्तमदशमस्थानानांकंटकसंज्ञाउक्ताकथिता ॥ कंटकचतुष्टयंकेंद्रइति पर्यायास्तदनंतरं द्वितीयपंचमाष्टमैकादशानांस्थानानांपणफरसंज्ञाउक्ताकथिता ॥ तदनंतरंतृतीयषष्ठनवमद्वादशानांस्थानानामापोक्लिमसंज्ञाउक्ता । चेत्समस्ताः सर्वग्रहाः केंद्रेपणफरेचस्युःतदासइक्कवालाख्योयोगःस्यात्सइक्कवालयोगोराज्यसुखयोराप्तिर्लब्धिस्तस्याःहेतुः । अत्यंतशुभफलदइत्यर्थः । आपो–

क्तिमेषादिसर्वे खगाः ग्रहाःस्युस्तदेंदुवारनामकस्ताजिकशास्त्रेगीतःकथितोयोगःस्यात् । कि लइतिनिश्चयेन । सयोगः क्वचनकुत्रापिवर्षमासप्रवेशादौशुभानस्यात् ॥ १७ ॥ अथमुथशिलयोगस्यलक्षणमाह ॥ शीघ्रइति ॥ ययोर्द्वयोर्ग्रहयोर्मुथशिलविचारः क्रियतेतयोर्मध्येयस्याधिकागतिःसशीघ्रगतिग्रहः द्वितीयः मंदगतिर्ग्रहः शीघ्रः शीघ्रगतिर्ग्रह अल्पभागैः स्वल्पांशैरुपलक्षितोभवति घनाबहवः भागाःअंशाःयस्यासौघनभागःतादृशेबह्वंशेमंदेमंदगतिग्रहे अग्रस्थेसति एतत् । उक्तंभवतिशीघ्रगतिग्रहस्यभागापेक्षयामन्दगतिग्रहस्याधिकभागाभवंति । तदा शीघ्रगतिग्रहःनिजंस्वीयंतेजः सामर्थ्यंमंदगतिग्रहायउपाददीत ददाति तर्ह्ययम् इत्थशालाख्योयोगः स्यात् ॥ अस्यैवनामांतरंमुथशिलमिति । शीघ्रगतिग्रहात् शीघ्रग्रहदीप्तांशांतर्गतांतरभागैरधिकेमंदेमुथशिलयोगइतिपर्यवसितोऽर्थः । अथपूर्णमुथशिलयोगमाह । यदिशीघ्रगतिग्रहः मंदगतिग्रहात् विलिप्ताएकविकलामात्रन्यूनोऽथवालिप्तार्धहीनःत्रिंशद्विकलान्यूनोपिभवेत्तदा एतन्मुथशिलंपूर्णांविंशतिविंशोपकात्मकंजातंस्यात् ॥ यदाद्वयोर्विकलांतावयवेनतुल्यताभवतितदापूर्णमुथशिलमित्यर्थतःसिद्धम् ॥ १८ ॥

**शीघ्रोयदाभांत्यलवस्थितः सन्मंदेऽग्यभस्थेनिदधातितेजः ॥**
**स्यादित्थशालोऽयमथैषशीघ्रदीप्तांशकांशैरिहमंदपृष्ठे ॥ १९ ॥**
**तदाभविष्यद्गणनीयमित्थशालंत्रिधैवंमुथशिलमाहुः ॥**
**लग्नेशकार्याधिपयोर्यथैषयोगस्तथाकार्यमुशंतिसंतः ॥ २० ॥**

अथअदृष्टौमुथशिललक्षणमाह । शीघ्रइति । तदेतिपद्यार्द्धेनच । यदाशीघ्रः शीघ्रगतिग्रहः भांत्यलवस्थितः राशेरंतिमांशेत्रिंशत्तमेंशेस्थितः सन्मंदेमंदगतिग्रहेऽग्र्यभस्थेअग्रिमराशौसतिशीघ्रग्रहस्यदीप्तांशावधितदाशीघ्रगतिग्रहः मंदगतिग्रहायतेजोनिदधाति । अयमित्थशालयोगः स्यात् । अथभविष्यन्मुथशिलयोगउच्यते । अथेति । एषशीघ्रगतिग्रहः स्वदीप्तांशेभ्योऽधिकांशैः कृत्वा मंदगतिग्रहात् पृष्ठे स्थितः सन् मंदगतिग्रहेयदानिजं तेजः दातुकामो भवति तदा इत्थशालं मुथशिलयोगोऽभविष्यत् अग्रे भविष्यतीति गणनीयं ज्ञेयम् । एवं त्रिधा त्रिप्रकारकं मुथशिलमाहुः । अथ मुथशिलयोगानां फलमाह । लग्नेशेति लग्नेशः लग्ने स्वामी यद्भावस्य प्रश्नः क्रियते तद्भावस्वामी कार्याधिपः । अनयोर्यथामुथशिलयोगः तथा संतः अतिशिष्टाः कार्यमुशंति । तद्यथा । केनचिदागत्य प्रश्नः कृतः मम पुत्रस्त्रीराज्यलाभादिसुखं भविष्यति नवेति । तत्र लग्नस्वामी प्रश्नकर्ता ज्ञेयः तत्तद्भावाधीशश्च कार्यस्वामी । तत्र पुत्रप्राप्तिचिंता पंचमभावात् । स्त्रीप्राप्तिचिंता सप्तमभावात् । राज्यप्राप्तिचिंता दशमभावात् । लाभचिंता एकादशभावात् । एवं सर्वत्र ज्ञेयम् । तत्र लग्नेशस्य राज्याद्यभीष्टकार्यभावेशस्य च मुथशिलयोगो यथा भवति तथा तद्भावप्राप्तिर्वक्तव्या ।

तयोर्वर्तमानो मुथशिलययोगश्चेत्तदा तद्भावसंबंधिसुखमिदानीं वर्ततइति वाच्यम् । यदि तयोः पूर्णमुथशीलयोगस्तदा संपूर्णं तद्भावसंबंधिसुखं वाच्यम् । यदि तयोः भविष्यन्मुथशिलयोगस्तदा तद्भावसौख्यमग्रे भविष्यतीति वाच्यम् ॥ १९ ॥ २० ॥

**लग्नेशकार्याधिपतत्सहाया यत्र स्युरस्मिन्पतिसौम्यदृष्टे ॥ तदा बलाढ्यं कथयंति योगं विशेषतः स्नेहदृशाऽपि संतः ॥ २१ ॥**
**स्वर्क्षादिसत्स्थानगतः शुभैश्चेद्युतेक्षितोभूद्भविताऽथवास्ते ॥ तदा शुभं प्रागभवत्सुपूर्णमग्रे भविष्यत्यथ वर्तते च ॥ २२ ॥**

अथ दृष्टिविचारमाह-लग्नेशेति । लग्नेशः लग्नस्वामी कार्याधिपः कार्यस्वामी च तत्सहायो नाम लग्नेशमित्रं कार्येशमित्रं च एते चत्वारो यत्र यस्मिन् राशौ स्युः भवंति अस्मिन् राशौ पतिः स्वामी सौम्यः शुभग्रहः आभ्यां दृष्टे सति तदा प्रागुत्पन्नं मुथशिलयोगं बलाढ्यम् उत्कृष्टफलदं कथयंति । तत्रापि संतः अतिशिष्टाः स्नेहदृशा स्नेहेन दृष्ट्या विशेषतः सबलमिति आहुः ॥ २१ ॥ अथाऽन्यमपि फलविचारमाह-स्वर्क्षेति । लग्नाधिपः कार्याधीशश्च स्वर्क्षादिषु स्वगृहस्वोच्चस्वहद्दास्वत्रैराशिपस्वमुसल्लहेषु । अथवा सत्स्थानेषु शुभग्रहस्थानेषु गतो विद्यमानः सन् शुभैः शुभग्रहैः युतेक्षितश्चेदभूत् तदा प्राक् पूर्वं शुभं शुभफलं संपूर्णमभवज्जातमिति वक्तव्यम् । यदा लग्नपकार्याधीशौ स्वर्क्षादिसत्स्थानगौ शुभैर्युतेक्षितौ चेद्भवितारौ तदा शुभफलमग्रे भविष्यतीति वाच्यम् ॥ यदा लग्नपकार्याधीशौ स्वर्क्षादिसत्स्थानगौ शुभग्रहैर्युतेक्षितौ चेद्भवतः तदा शुभफलमिदानीं वर्त्तत एवेति वक्तव्यम् ॥ २२ ॥

**व्यत्यस्तमस्माद्विपरीतभावेऽथेष्टर्क्षतोऽनिष्टग्रहं प्रपन्नः ॥ अभूच्छुभं प्रागशुभं त्विदानीं संयातुकामेन च भावि वाच्यम् २३॥**
**शीघ्रो यदा मंदगतेरथैकमप्यंशमभ्येति तदेसराफः ॥ कार्यक्षयो मूसरिफे खलोत्थे सौम्येन हिल्लाजमतेन चिंत्यम्॥२४॥**

अथ शुभफलमाह-व्यत्यस्तामिति। अस्मात्स्वर्क्षादिसत्स्थानगत इति पूर्वोक्तादर्थाद्विपरीतभावे दुष्टस्थाने सति व्यत्यस्तमन्यथा ज्ञेयम् । तद्यथा । स लग्नाधीशः कार्याधीशो वा स्वशत्रुक्षेत्रगतः स्वनीचगृहगतो वा स्वशत्रुहद्दादिष्वशुभेषु पापग्रहस्थानेषु वा गतः सन् पापग्रहैर्युतो दृष्टो वा चेदभूत्तदा प्राक्पूर्वमेवाऽशुभमभवत्॥ यदा लग्नाधीशः कार्याधीशो वा दुष्टस्थानगतः सन् पापग्रहैर्युतेक्षितो वा चेदास्ते तदेदा-



नीमनिष्टं वर्तत एवेति वाच्यम् ॥ अथ तृतीयमुथशिलयोगे फलविशेषविचारमाह--अथेति । यदा लग्नेशः कार्येशो वा इष्टर्क्षगतः मित्रराशेः सकाशादनिष्टगृहं शत्रुगृहं प्रपन्नः प्राप्तः तदा प्राक् पूर्वं शुभं शुभफलमभूज्जातामिति वक्तव्यम् । इदानीमशुभफलं वर्तत इति वाच्यं संयातुकामेन । तद्यथा । लग्नाधीशः कार्याधीशो वा मित्रगृहे वर्तते । अग्रे शत्रुगृहं प्रति आयास्यति तदा अशुभफलं भावि वाच्यमग्रे भविष्यतीति वाच्यम् ॥ २४॥ अथेसराफयोगस्य लक्षणमाह– शीघ्र इति । यदा मंदगतेः मंदगतिग्रहस्यैकमप्यंशं शीघ्रः शीघ्रगतिग्रहोऽभ्येति । अतिक्रम्याग्रे गच्छति । तदा ईसराफः ईसराफाख्यो योगः स्यात् अपरः पर्यायो मूसरीफाख्य इति । खलोत्थे शीघ्रगतिमंदगतिग्रहयोः पापयोः संबंधेन जाते मुसरीफे योगे सति कार्यक्षयो वाञ्छितकार्यनाशः स्यात् ॥ तस्मिन्नीसराफयोगे सौम्ये शुभेग्रहोत्पन्ने कार्यक्षयो न नास्ति इदं । फलं हिल्लाजमतेन चिंत्यं ज्ञेयम् २४

**लग्नेशकार्याधिपयोर्न दृष्टिर्मिथोऽथ तन्मध्यगतोऽपि शीघ्रः ॥**
**आदाय तेजो यदि पृष्ठसंस्थान्नयसेदथान्यत्र हि नक्तमेतत् ॥ २५ ॥**

अथ नक्तयोगस्य लक्षणमाह--लग्नेशेति । लग्नेशः लग्नस्वामी । कार्याधिपः कार्यस्वामी । अनयोर्मिथः परस्परं दृष्टिर्नास्ति अथ तन्मध्यगतोपि शीघ्रः यदितयोर्लग्नाधीशकार्याधीशयोर्मध्ये यः कश्चिच्छीघ्रगतिग्रहो भवति । तादृशो मध्यवर्ती पृष्ठसंस्थाच्छीघ्रग्रहात् तेजः आदाय गृहीत्वाऽन्यत्रान्यस्मिन्मंदगतिग्रहे न्यसेत् अर्पयति तन्नक्तं नक्तनामयोगः स्यात् ॥ २५ ॥

**स्त्रीलाभपृच्छा तनुरस्ति कन्या स्वामी बुधः सिंहगतो दशांशैः॥**
**सूर्यांशकैर्देवगुरुः कलत्रे दृष्टिस्तयोर्नास्ति मिथोऽथ चंद्रः॥२६॥**
**चापे वृषे चोभयदृश्यमूर्तिः शीघ्राऽष्टभागैरथवा भवांशैः ॥**
**आदाय तेजो बुधतो ददौ यज्जीवायलाभःपरतः स्त्रियाः स्यात्॥२७॥**




अथाऽस्य नक्तयोगस्योदाहरणमाह-स्त्रीलाभेति । चापइति च । केनाचित्प्रष्टा यस्मिन्कस्मिन्समये आगत्य पृच्छा प्रश्नः कृतः मम स्त्रीप्राप्तिर्भविष्यति नवेति । तस्मिन्समये तनुर्लग्नं कन्यास्ति । तस्य स्वामी बुधः सिंहगतः सिंहराशौ द्वादशस्थाने दशांशैर्दशभिरंशैरुपलक्षितोस्ति तथा देवगुरुः बृहस्पतिः सूर्यांशकैर्द्वादशभिरंशैरुपलक्षितः सन् कलत्रे सप्तमस्थानेऽस्ति तयोर्बुधजीवयोर्मिथः परस्परं षडष्टस्थान-

-स्थितत्वाद्दृष्टिर्नास्त्येव । अथ चंद्रः शीघ्रः शीघ्रगतिग्रहः उभयोर्बुधजीवयोर्मध्यगतः सन् चापे धनुषि अथवा वृषभराशौ अस्ति । कीदृशः उभयदृश्यमूर्तिः । उभाभ्यां बुधजीवाभ्यां दृश्या मूर्तिः स्वरूपं यस्य बुधजीवदृष्टः । पुनः कीदृशः । अष्टभागैरथवा भवांशैः एकादशभिरंशैः उपलक्षितः । एतादृशश्चंद्रः बुधतः तेजः सामर्थ्यमादाय गृहीत्वा जीवाय गुरवे यद्दौ ददाति स्म । तस्माल्लग्नस्वामिनो बुधस्य तेजोपहारात्स्वप्रयत्नेन स्त्रीप्राप्तिर्न भवतीति वक्तव्यम् । कुतः तृतीयेन मध्यस्थचंद्रेण तेजोपहारात्तस्मात्तृतीयमध्यस्थप्रयत्नेन स्त्रियाः प्राप्तिर्वक्तव्या । नक्तयोगोयम् ॥ २६ ॥ २७ ॥

यमयायोगोयम् ।




अंतःस्थितो मंदगतिस्तु पश्येद्दीप्तांशकैर्द्वावथ शीघ्रतस्तु ॥ नीत्वा महो यच्छति मंदगाय कार्यस्य सिद्ध्यै यमयः प्रदिष्टः ॥ २८ ॥ राज्याप्तिपृच्छा तुललग्ननाथो मेषेसितस्त्वष्टलवैर्वृषस्थः ॥ चंद्रो रसांशैर्यदि राज्यनाथो दृष्टिस्तयोर्नास्ति गुरुस्तु मंदः २९ दिगंशकैः कर्कगतस्तु पश्यन्नुभौ महो दीप्तलवैः सचांद्रम् ॥ ददौ सिताये‌ति पदस्य लाभोऽमात्येन भावीति विमृश्य वाच्यम् ॥ ३० ॥

अथ यमयायोगलक्षणमाह--अंतःस्थित इति । द्वौ लग्नाधीशकार्याधीशौ परस्परं न पश्यतः अनयोर्लग्नाधीशकार्याधीशयोरंतःस्थितो मध्ये वर्त्तमानो मंदगतिर्ग्रहः स्वदीप्तांशैः कृत्वा द्वौ लग्नाधीशकार्याधीशौ स्थानदृष्ट्या पश्येत् ॥ अथ च मंदगामी ग्रह शीघ्रतः लग्नाधीशकार्याधीशयोर्मध्ये यः शीघ्रगतिग्रहः तस्मान्महस्तेजो नीत्वा गृहीत्वा मंदगाय मंदगतिग्रहाय यच्छति । लग्नपकार्यपयोर्मध्ये यो मंदगतिर्ग्रहस्तस्मै यच्छति ददाति स यमायाख्यो योगः वांछितकार्यस्य सिद्ध्यै प्रदिष्टः कथितः ॥ २८ ॥ अथास्य यमयायोगस्योदाहारणम् । राज्येति । दिगंशकैरिति च । मम राज्यप्राप्तिर्भविष्यति नवेति पृच्छायां प्रश्ने लग्नं तुला । तस्य नाथः स्वामी सितः शुक्रः । मेषे सप्तमस्थाने गतोऽष्टलवैरुपलक्षितोऽस्ति । तथा राज्यनाथः राज्यभवनं दशमं तस्य नाथः स्वामी चंद्रः रसांशैः षडंशैरुपलक्षितः सन् वृषभस्थोऽष्टमस्थानगतो भवति । तयोर्लग्नाधीशराज्यनाथयोः परस्परं द्विर्द्वादशस्थानस्थितत्वात् दृष्टिर्नास्त्येव । गुरुः बृहस्पतिर्मंदो मंदगतिग्रहदिगंशको दशभिरंशैः परिमितः कर्कगतः कर्के स्थितो दशमस्थानस्थितः सन् उभौ लग्नाधीशकार्याधीशौ स्थानदृष्ट्या पश्यन् सन् उभाभ्यां चन्द्रशुक्राभ्यामधिकैः स्वदीप्तांशैः कृत्वा स चांद्रं चंद्रसंबंधि महः तेजो गृहीत्वा सिताय शुक्राय ददौ ददाति । अतः कारणात् पदस्य स्थानस्य राज्यस्य लाभोऽमात्येन मंत्रिणा भावि भविष्यति । इति विमृश्य विचार्य वाच्यं वक्तव्यम् । यमयायोगोऽयम् ॥ २९ ॥ ३० ॥




वक्रः शनिर्वा यदि शीघ्रखेटात्पश्चात्पुरस्तिष्ठति तुर्यदृष्ट्या ॥ एकर्क्षसप्तर्क्षभुवा दृशा वा पश्यन्नथांशैरधिकोनकैश्चेत् ॥ ३१ ॥ तेजोहरेत्कार्यपदेत्थशालीस्थितोऽपि क्षाऽसौ मणऊशुभो न ॥ स्त्रीलाभपृच्छा तनुरस्ति कन्याऽत्र ज्ञोदिगंशैस्तिथिभिः सुरेज्यः ॥३२॥ कलत्र्गः खेऽवनिजो भवांशैः पूर्वं बुधो भौमहृतः स्वतेजाः ॥ जीवेन पश्चान्मिलतीति लाभो नार्यास्तु नो पृष्ठऽगतेऽथवास्मिन् ॥ ३३ ॥

अथ मणऊयोगलक्षणमाह—वक्रइति । तेजो हरेदिति च । अस्मिन्मणऊयोगे लग्नाधीशकार्याधीशयोः परस्परं स्थानदृष्टिरपेक्षिता । यदि शीघ्रखेटात् लग्नाधीशकार्याधीशयोर्मध्ये यः शीघ्रखेटः शीघ्रगतिग्रहोंशादिस्तस्मात्पश्चात्पूर्वं पुरः अग्रे वांशैरेव वक्रो भौमः शनिर्वा तिष्ठति तादृशो भौमः शनिर्वा तुर्यदृष्ट्या चतुर्थस्थानदृष्ट्या वैकर्क्षसप्तर्क्षभुवा अथवा एकराशिजातया दृष्ट्या तथा सप्तमस्थानजातया दृशा दृष्ट्या वा चेदंशैरधिकोनकैः । तद्यथा । शीघ्रग्रहस्य भागापेक्षयाऽधिकैरूनकैर्वांशैः शीघ्रगतिग्रहस्य दीप्तांशमध्यवर्तिभिः पश्यन् सन् शीघ्रगतिग्रहस्य तेजो हरेत् । कीदृशः कार्यपदेत्थशाली स्थितः । कार्यपदं वाञ्छितकार्यस्य स्थानमर्थात्कार्यस्थानाधीशेन सह मुथशिलकारी संस्थितोऽपि वर्त्तमानश्चेद्भवति तदा असौ मणऊनामयोगः स्यात् । स शुभो न कार्यकर्ता न भवेदित्यर्थः । अथोदाहरणम् । स्त्रीलाभेति कलत्रग इति च । मम स्त्रीप्राप्तिर्भविष्यति नवेति पृच्छायां प्रश्ने तनुर्लग्नं कन्यास्ति । तस्य स्वामी ज्ञो बुधः । अत्र कन्यायां दिगंशैर्दशभिरंशैरुपलक्षितोऽस्ति तथा सुरेज्यो गुरुः तिथिभिः पंचदशभागैरुपलक्षितः सन् कलत्रगः कलत्रं स्त्रीभवनं तत्र गच्छतीति सप्तमस्थानेऽस्तीत्यर्थः । तथा अवनिजो भौमः खे दशमस्थाने भवांशैरेकादशभिरंशैरुपलक्षितोऽस्ति अथ भौमस्तुर्यदृष्ट्या बुधं पश्यति । तस्माद् बुधात् । एकांशेनाधिको भूत्वाऽग्रस्थितो जातस्ततोऽग्रे गत्वा भौमेन हृतं स्वतेजो यस्य तादृशः तेजोरहितो बुधः पूर्वं प्रथमतः कृतः पश्चादनंतरं जीवेन कार्याधीशेन सह शीघ्रगतित्वान्मिलति इति हेतोः नार्याः जायायाः लाभः प्राप्तिर्नो नास्तीति वक्तव्यम् । अयमेको योगः । अथापरः अथवा यथावस्थिते पूर्वस्मिन्योगे बुधापेक्षया भौमः स्थितः सन् पृष्ठतो भवति । एवमस्मिन् भौमे पृष्ठगते सति असौ मणऊयोगः कार्यनाशको भवति । मणऊयोगोऽयम् ॥ ३१ ॥ ॥ ३२ ॥ ३३ ॥

**यदीत्थशालोस्त्युभयोः स्वदीप्तहीनाधिकांशैः शनिभूसुतौ चेत् ॥**
**एकर्क्षगौ लग्नपकार्यपौ स्तस्तेजोहरौ कार्यहरौ निरुक्तौ ॥ ३४ ॥**
**राज्याप्तिपृच्छातुललग्ननाथः कर्के सितोंशैस्तिथिभिर्दिगंशैः ॥**
**वृषे शशी भूपलवैः कुजश्च इन्दयोर्भां हरते च राज्यम् ॥ ३५ ॥**




अथ मणऊयोगभेदमाह–यदीत्थशालइति । यद्युभयोर्लग्नेशकार्येशयोर्मुथशिलयोगोस्ति तथा शनिभूसुतौ एकर्क्षगौ लग्नाधीशकार्याधीशयोर्मध्ये केनचित्सह एकराशिगतौ स्तः । स्वदीप्तहीनाधिकांशैः स्वशब्देन लग्नाधीशकार्याधीशावुच्येते तयोर्ये दीप्तांशकास्तदपेक्षया न्यूनैरधिकैर्वा दीप्तांशमध्यवर्तीभिः शनिभौमयोरंशैः कृत्वा लग्नपकार्यपयोः लग्नाधीशकार्याधीशयोस्तेजोहरौ संतौ कार्यहरौ कार्यनाशकौ निरुक्तौ ॥ ३४ ॥ अथोदाहरणम् । राज्याप्तिपृच्छेति । मम राज्यप्राप्तिर्भविष्यति नवेति पृच्छायां प्रश्ने तुलालग्नं तस्य नाथः स्वामी सितः शुक्रः कर्के दशमे स्थाने तिथिभिः पंचदशांशैरुपलक्षितोस्ति । राज्यभवनाधीशः शशी चंद्रो वृषे उच्चस्थः सन्नष्टमतः सदिगंशैर्दशभिरंशैरुपलक्षितोऽस्ति । कुजो वृषस्थः सन् भूपलवैः षोडशांशैरुपलक्षितोऽस्ति । चकाराच्छनिरपि वृषस्थः सन् भूपलवैः १६ उपलक्षितोऽस्तीति ज्ञातव्यम् । भौमो द्वयोर्लग्नाधीशकार्याधीशयोरित्थशाले परस्परमुथशिलयोगे सति भां तेजो हरन् राज्यं हरति ॥ पुनर्मणऊयोगोऽयम् ॥ ३५ ॥

**लग्नकार्येशयोरित्थशालेत्रेन्द्वित्थशालतः ॥ कंबूलं श्रेष्ठमध्यादिभेदैर्नानाविधं स्मृतम् ॥ ३६ ॥**

अथाष्टमषोडशभेदभिन्नं कंबूलयोगं वक्तुकामः सामान्यतः कंबूलयोगलक्षणमाह–लग्नकार्येशयोरित्थेति । अत्र लग्नाधीशकार्याधीशयोरित्थशाले परस्परमुथशिलयोगे सति अनयोर्मध्ये केनचिदेकेन साकमिन्द्वित्थशालतः इंदुश्चंद्रः इत्थशालतः मुथशिलं चेत्करोति तदा कंबूलं कंबूलनामा योगः स्यात् लग्नेशकार्येशयोर्मध्ये केनचिदेकेन सह चंद्रमुथशिले कंबूलं भवतीत्युक्तं ताजिकभूषणे। यथा “निशाकरो योगकरग्रहाभ्यामेकेन चेन्मुत्थशिलं करोति । कंबूलयोगः कथितस्तदानीं पूर्णो हि मध्योऽधमकस्त्रिधाऽसौ” ॥ सममध्यमयोर्मध्यमत्वेन गणना त्रिधा इत्युक्तम् । अन्यच्च । द्वयोर्मुथशिले विधुः केनचित्स्यात्तयोर्मुथशिलः स कंबूलयोग इति । तत्कंबूलं सामान्यतस्त्रिविधं श्रेष्ठमध्या-

दि । श्रेष्ठम् । मध्यमम् । आदिशब्देनाधमम् । एतैर्भेदैर्नानाविधं स्मृतम् । लग्नेशकार्येशचंद्राणां चतुर्विधाधिकारभेदेन षोडशप्रकारकमित्यर्थः । तद्यथा उत्तमोत्तमम् १ उत्तममध्यमम् २ उत्तमम् ३ उत्तमाधमम् ४ मध्यमोत्तमम् ५ मध्यममध्यमम् ६ मध्यमम् ७ मध्यमाधमम् ८ उत्तमम् ९ मध्यमम् १० मध्यममध्यमम् ११ अधमम् १२ अधमोत्तमम् १३ अधममध्यमम् १४ अधमम् १५ अधमाधमम् १६ एतेषां प्राकट्यार्थं चक्रं लिख्यते ॥ तत्र स्वगृहे स्वोच्चाधिकारश्चोत्तमः स्वहद्दास्वद्रेक्काणस्वनवांशाधिकारो मध्यमः । स्वशत्रुस्वनीचाधिकारोऽधमः । एतत्स्थानत्रितयराहित्यं समाधिकारः उक्तं च मनुष्यजातके " कंबूलमीषद्धितयेत्थशाले चंद्रोऽपि चेन्मुत्थशिलं विधत्ते । मिथः स्वगेहोच्चगतौ प्रधानं मध्यं त्रिकाद्येत्वधमं परर्क्षे ॥ " सम्रसिंहेप्युक्तमस्ति ॥ ३६ ॥

| | लग्नाधीशकार्यौ० | लग्नाधीशकार्यौ० | लग्नाधिकारस्थौ | लग्नाधिकारस्थौ |
|---|---|---|---|---|
| उत्तमाधिकारश्चंद्रः | मध्यमाधिकारस्थौ | मध्यमाधिकारस्थौ | समाधिकारस्थौ | अधमाधिकारस्थौ |
| मध्यमाधिकारश्चंद्रः | उत्तमाधिकारस्थौ | मध्यमाधिकारस्थौ | समाधिकारस्थौ | अधमाधिकारस्थौ |
| समाधिकारश्चंद्रः | उत्तमाधिकारस्थौ | मध्यमाधिकारस्थौ | समाधिकारस्थौ | अधमाधिकारस्थौ |

**यदींदुःस्वगृहोच्चस्थस्तादृशौ लग्नकार्यपौ ॥ इत्थशालीकबूलं तदुत्तमोत्तममुच्यते ॥३७॥ स्वीयहद्दाद्रेक्काणांकभागस्थेनेत्थशालतः ॥ मध्यमोत्तमकंबूलं हीनाधिकृतिनोत्तमम् ॥ ३८ ॥**

उत्तमोत्तमाभिः संज्ञाभिस्तानेव भेदानाह–तत्रादौ उत्तमोत्तमकंबूललक्षणमाह । यदींदुरिति । यदि इंदुश्चंद्रः स्वगृहोच्चस्थः स्वगृहे स्वोच्चे वा भवति तादृशौ लग्नकार्यपौ तादृशेन स्वगृहस्वोच्चस्थितेन वा लग्नाधीशेन तथा स्वगृहस्थेनोच्चस्थितेन वा कार्याधीशेन परस्परकृतमुथशिलेन सह इत्थशालीमुथशिलं करोति । तदा तत्कंबूलमुत्तमोत्तममुच्यते । त्रयाणामुत्तमाधिकारप्राप्तत्वात् । अयं प्रथमो भेदः । अत्र षोडशकंबूलयोगेषु लग्नेशकार्येशयोरेकाधिकारत्वं परस्परमुथशिलं च नियतम् । चंद्रमुथशिलं तु लग्नेशकार्येशयोर्मध्ये केनचिदेकेन सहापेक्षितम् ॥ ३७ ॥ अथोत्तममध्यमकेवलोत्तमयोः कंबूलयोर्लक्षणमाह–स्वीयेति । अथ स्वीयहद्दाद्रेक्काणांकभागस्थेन स्वहद्दायां स्वद्रेक्काणेवा स्वनवांशे वा लग्नाधीशेन कार्याधीशेन च परस्परं कृतमुथशिलेन च स्वगृहगस्वोच्चराशिगतो

उत्तममध्यमकंबूल



वा चंद्रश्चेन्मुथशिलं करोति तदोत्तममध्यमं कंबूलं स्यात् । कुतः चंद्रस्योत्तमाधिकारप्राप्तत्वात् । इतरयोर्मध्यमाधिकारप्राप्तत्वात् । ग्रंथकर्त्रा तु मध्यमोत्तममित्युक्तम् कुतः छंदोभंगभयात् । अत्रोदाहरणम् । मम भाग्यं भविष्यति नवेति प्रश्ने तुलालग्नं तस्य स्वामी भृगुर्दशमे स्वहद्दायां दशांशः १० भाग्यभवनाधीशो बुधः सप्तमे स्वहद्दायां चतुर्दशांशः १४ अनयोः परस्परमुथशिलम् । चंद्रः कर्के स्वगृहे अष्टादशांशस्ताभ्यां मुथशिलीत्युत्तममध्यममेतत्कंबूलमत्यल्पायाससाध्यं भाग्यं फलिष्यति एवं स्वद्रेष्काणस्वनवांशस्थाभ्यामुदाहरणानि एषूह्यानि । एवं हीनाधिकृतिना हीनाः गताः उत्तममध्यमाधमाधिकाराः यस्य तादृशेन लग्नाधीशेन कार्याधीशेन परस्परमुथशिलेन स्वगृहस्थः स्वोच्चस्थोवा शशी चेन्मुथशिलं करोति तदोत्तममेव कंबूलंभवति । कुतः केवलं चंद्रस्योत्तमाधिकारप्राप्तत्वात् । इतरयोः समाधिकारप्राप्तत्वात् । उदाहरणम् राज्याप्तिप्रश्ने लग्नं मिथुनं तस्य स्वामी बुधः समस्य गृहे तिष्ठति । राज्यभवनाधीशो गुरुः समस्य गृहे कन्यायामस्ति चंद्रस्तूच्चे वृषे । एवं त्रयाणां परस्परमुथशिलयोगे सत्युत्तमकंबूलं जातं तेन राज्यप्राप्तिरुत्तमा वक्तव्या ॥ ३८ ॥

**उत्तमाधमता नीचरिपुगेहस्थितेनचेत् ॥ स्वद्रेष्काणांशगश्चंद्रः स्वभोच्चस्थेत्थशालकृत् ॥ ३९ ॥ मध्यमोत्तममेतच्च पूर्वस्मान्न विशिष्यते ॥ स्वहद्दादिपदस्थेन कंबूलं मध्यमध्यमम् ॥ ४० ॥**

अथ श्लोकार्द्धेनोत्तमाधमकंबूललक्षणमाह--उत्तमेति । स्वनीचराशिगतेन स्वशत्रुराशिगतेन वा लग्नाधीशेन कार्याधीशेन च परस्परं मुथशिलयोगे सति स्वगृहगतः स्वोच्चराशिगतो वा चंद्रः तयोरन्यतरेण चेत् मुथशिलं करोति तदोत्तमाधमता उत्तमाधमाख्यं कंबूलं स्यात् । कुतः चंद्रस्योत्तमाधिकारप्राप्तत्वात् । इतरयोरधमाधिकारप्राप्तत्वात् । अत्रोदाहरणम् । स्त्रीप्राप्तिप्रश्ने तुलालग्नं तत्स्वामी शुक्रः कन्यायां दशांशः १० नीचे स्त्रीभवनाधीशो भौमः कर्के नीचे पंचदशांशश्चंद्रोऽपि कर्के स्वगृहे द्वादशांशः १२ एषां परस्परं मुथशिलयोगः उत्तमाधमकंबूलाख्यो जातोऽतः स्त्रीप्राप्तिरीषदायाससाध्या । अथ मध्यमोत्तमकंबूललक्षणमाह—स्वद्रेष्काणेति । स्वद्रेष्काणे स्वनवांशके वा स्थितः सन् स्वभोच्चस्थेन स्वगृहगतेन स्वोच्चराशिगतेन वा लग्नाधीशेन कार्याधीशेन च परस्पर कृतमुथशिलेन इत्थशालकृतमुथशिलं चेत्करोति । तदैतत् कंबूलं मध्यमोत्तमाख्यं स्यात् । कुतः चंद्रस्य मध्यमाधिकारप्राप्तत्वात् । इतरयोरुत्तमाधिकारप्राप्तत्वात् एतन्मध्यमोत्तमं कंबूलं पूर्वस्मात् पूर्वोक्तात् उत्तममध्यमकंबूलान्न विशिष्यते न किंचिद्विशिष्टफलदमित्यर्थः । अत्रोदाहरणम् । स्त्रीप्राप्तिप्रश्ने तुलालग्नं तस्य स्वामी शुक्रः लग्ने स्वगृहे चतुर्विंशत्यंशः २४ सप्तमभावो मेषः तत्स्वामी भौमः मेषे स्वगृहे अष्टाविंशत्यंशः २८ चंद्रस्तु वृषकर्कौ विहाय मकरस्थे नवमांशे द्वाविंशत्यंशेः २२ तत्रैषां मुथशिलं पर-

स्परमभूदिति मध्यमोत्तमाख्यं कंबूलम् । अत्र स्त्रीप्राप्तिरुत्तमा । अथ श्लोकार्द्धेन मध्यमाधमकंबूललक्षणमाह–स्वहद्दादिपदस्थेनेति । स्वहद्दायां स्वद्रेक्काणे वा स्वनवांशे वा स्थितेन लग्नाधीशेन कार्याधीशेन च परस्परकृतमुत्थशिलेन स्वद्रेक्काणे स्वनवांशे वा स्थितश्चंद्रो मुत्थशिलं चेत्करोति तदा मध्यमध्यमं कंबूलं स्यात् । कुतः सर्वेषां मध्यमाधिकारप्राप्तत्वात् । अत्रोदाहरणम् । संततिप्रश्ने मिथुनलग्नं तस्य स्वामी बुधस्तुलायां स्वहद्दायामष्टमांशः ८ सुतभवनाधीशः शुक्रो मिथुने स्वहद्दायामष्टमांशः ८ चद्रस्तु कर्के प्रथमे द्रेक्काणे स्वीयनवांशे चास्ति अत्र त्रयाणामपि परस्परं मुथशिलयोगाच्च मध्यमध्यमाख्यं कंबूलं तेन संततिप्राप्तिर्मध्यममध्यमा भवति ॥ प्रयत्नेन साध्येत्यर्थः॥३९॥४०॥

**मध्यमं च कंबूलं स्याद्धीनाधिकृतिखेटजम् । मध्यमाधमकंबूलं नीचारिभगखेटजम् ॥ ४१ ॥ इंदुः पदोनः स्वर्क्षोच्चस्थितेनाप्युत्तमं तु तत् ॥ स्वहद्दादिगतेनापि पूर्ववन्मध्यमुच्यते ॥ ४२ ॥**

अथ श्लोकार्द्धेन मध्यमकंबूललक्षणमाह--मध्यममिति । हीना रहिता अधिकृतयोऽधिकारा येषां ते हीनाधिकृतयस्ते च ते खेटाश्च तेभ्यो जातं मुत्थशीलम् । एतदुक्तं भवति । स्वोत्तममध्यमाधिकाररहितेन अर्थात्समाधिकारप्राप्तेन लग्नाधीशेन कार्याधीशेन च कृतपरस्परमुत्थशिलेन स्वमध्यमाधिकारस्थः शशी चेत् मुथाशिलं करोति तदा मध्यमकंबूलं स्यात् । कुतः चंद्रस्य मध्यमाधिकारप्राप्तत्वात् । इतरयोः समाधिकारप्राप्तत्वात् । अत्रोदाहरणम् । संततिप्रश्ने वृषलग्नं तत्पतिः शुक्रः । समस्य हद्दायां चतुरंशः सन् मकरेऽस्ति । पंचमभवनाधीशो बुधः समस्य हद्दायां पंचांशः सन् तुलायामस्ति । चंद्रस्तु स्वे द्रेक्काणे कर्के त्र्यंशोऽस्ति। परस्परमेतन्मुथशिले कृते मध्यमकंबूलं जातं तेन संततिप्राप्तिरायाससाध्येत्यर्थः । अथ श्लोकार्द्धेन मध्यमाधमकंबूललक्षणमाह–मध्यमाधमेति । लग्नाधीशेन कार्याधीशेन च स्वनीचक्षेत्रे स्वशत्रुक्षेत्रे वा स्थितेन कृतपरस्परमुथशिलेन स्वद्रेक्काणे स्वनवांशे वा स्थितश्चंद्रो मुथशिलं चेत्करोति तदा मध्यमाधमाख्यं कंबूलं स्यात् ॥ कुतः चंद्रस्य मध्यमाधिकारप्राप्तत्वात् । इतरयोरधमाधिकारप्राप्तत्वात् । अत्रोदाहरणम् । भाग्यप्राप्तिप्रश्ने मेषलग्नं तस्य स्वामी भौमः कर्के नीचेऽस्ति नवमभवनस्वामी गुरुर्मकरे नीचे चंद्रः कर्के स्वद्रेक्काणे एषां परस्परमुथशिलयोगसत्त्वान्मध्यमाधमं कंबूलं जातं भाग्ये प्राप्तिरायाससाध्या भवति ॥ ४१ ॥ अथापरमुत्तमकंबूललक्षणमाह–इंदुरिति । इंदुश्चंद्रः । पादोन अधिकाररहितः स्वगृहस्वोच्चस्वद्रेक्काणस्वनवांशस्वनीचस्वशत्रुक्षेत्ररूपाधिकाररहितः । किंतुसमगृहादिगतः । स्वर्क्षोच्चस्थितेन स्वराशिगतेन स्वोच्चराशिगतेन वा लग्नाधीशेन कार्याधीशेन च परस्परमुथशिलेन चेन्मुथशिलवान् भवति तदोत्तममेव कंबूलं स्यात् । कुतः चंद्रस्याधिकारशून्य-

त्वात् । इतरयोरुत्तमाधिकारप्राप्तत्वात् । अत्रोदाहरणम् । धनलाभप्रश्ने तुलालग्नं लग्नाधीशः शुक्रः लग्ने स्वगृहे । धनाधीशो भौमो मकरे उच्चे । चंद्रः समद्रेक्काणे मिथुनेऽस्ति ।एषां परस्परमुथशिलयोगसत्त्वात् कंबूलं समोत्तमं जातमिति भाग्यप्राप्तिरुत्तमा। अथापरं मध्यमकंबूललक्षणं श्लोकार्द्धेनाह--स्वहद्दादीति। स्वहद्दायां स्वद्रेक्काणे वा स्वनवांशे वा स्थितेन लग्नाधीशेन कार्याधीशेन च कृतपरस्परमुथशिलेन समाधिकारश्चंद्रश्चेन्मुथशिली तदा कंबूलं मध्यमं स्यात्। कुतश्चंद्रस्याधिकाररहित्यादितरयोः मध्यमाधिकारप्राप्तत्वात् । एतत्पूर्वोक्तमध्यमकंबूलतुल्यफलदम् ॥ उदाहरणम् ॥ धनलाभप्रश्ने तुलालग्नं तस्य स्वामी शुक्रः । सिंहस्वहद्दायां दशांशः १० धनभावाधीशो भौमः वपुषि स्वहद्दायां दशांशः १० चंद्रस्तु मध्यमद्रेक्काणे मिथुने दशांशः तत्रैषां परस्परं मुथशिलयोगोऽस्ति । तस्मान्मध्यसमेतत्कंबूलं भवति । तेन धनलाभो मध्यमो भवति ॥ ४२ ॥

**पादोनेनापि मध्यं स्यादिति युक्तं प्रतीयते ॥ नीचारिस्थेनेत्थशालेऽधमकंबूलमुच्यते ॥ ४३ ॥ नीचशत्रुभगश्चंद्रः स्वभोच्चस्थेत्थशालकृत् ॥ अधमोत्तमकंबूलं पूर्वतुल्यफलप्रदम् ॥ ४४ ॥**

पुनः प्रकारांतरेण मध्यमकंबूललक्षणमाह-श्लोकार्द्धेन पादोनेनेति । पादोनेन उत्तममध्यमाधिकाररहितेन लग्नाधीशेन कार्याधीशेन च कृतपरस्परमुथशिलेन समाधिकारश्चंद्रश्चेन्मुथशिली तदा मध्यमकंबूलं स्यादित्यस्माभिर्युक्तं युक्तिसहं प्रतीयते । कुतः सर्वेषां समाधिकारप्राप्तत्वात् । उदाहरणम् । धनलाभप्रश्ने लग्नं मेषः तत्स्वामी भौमः सिंहे दशांशः १० धनेशः शुक्रः कुंभे दशांशः१० चंद्रस्तुलायां दशांशः १० एषां परस्परं मुथशिलयोगे जाते सति मध्यमकंबूलम् । तेन लब्धिर्मध्यमा । नोत्कृष्टा नापकृष्टा चेत्यर्थः । अथाधमकंबूलं श्लोकार्द्धेनाह-नीचारिस्थेनेत्थशाले इति । स्वनीचराशिगते स्वशत्रुराशिगतेन वा लग्नाधीशेन कार्याधीशेन च कृतपरस्परमुथशिलेन समाधिकारस्थितश्चंद्रश्चेन्मुथशिलं करोति । तदाधमाख्यं कंबूलं स्यात् । कुतश्चंद्रस्य समाधिकारप्राप्तत्वात् । इतरयोरधमाधिकारप्राप्तत्वात् । उदाहरणम् । पुत्रप्रश्ने मिथुनलग्नं तस्य स्वामी बुधः मीने नीचे । पुत्रभावाधीशः शुक्रः कन्यायां नीचे । चंद्रस्त्वधिकाररहितः । अत्र त्रयाणां परस्परं मुथशिलयोगादधमं कंबूलं स्यात् । तेन पुत्राप्तिचिंता अधमाऽधमफला । ईषत्कष्टसाध्येति यावत् ॥ ४३ ॥ अथाधमोत्तमकंबूललक्षणमाह-नीचशत्र्विति । यदि चंद्रो नीचराशिगतः शत्रुराशिगतो वा। स्वगृहगतेन स्वोच्चगतेन वा लग्नाधीशेन कार्याधीशेन च परस्परं कृतमुथशिलेन चेन्मुथशिली भवति । तदा अधमोत्तमकंबूलं स्यात् । कुतः चंद्रस्याऽधमाधिकारप्राप्तत्वात् । इतरयोरुत्तमाधिकारप्राप्तत्वात् । एतत्पूर्वमुक्तस्य कंबूलयोगस्य तुल्यं फलं प्रददाति । उदाहरणम् । सुखप्राप्तिप्रश्ने लग्नं सिंहः तत्स्वामी सूर्यः मेषे उच्चे । सुखभव-

नाधीशो भौमः मकरे उच्चे । चंद्रो नीचे वृश्चिके । एवं . त्रयाणां परस्परं मुथशिल जाते सति अधमोत्तमसंज्ञकं कंबूलमभूदिति । सुखप्राप्तिरीषदायाससाध्याभवति ॥ ४४ ॥

**चंद्रो नीचारिगेहस्थः स्वहद्दादिगतो न चेत् ॥ इत्थशाली कंबूलं तदुच्यतेऽधममध्यमम् ॥ ४५ ॥ इंदुर्नीचारिगेहस्थः पादोनेन-त्थशालकृत् ॥ कंबूलं मध्यमं ज्ञेयं पूर्वतुल्यफलप्रदम् ॥ ४६ ॥**

अथाधममध्यमकंबूललक्षणमाह—चंद्र इति । यदि चंद्रो नीचगृहगतः शत्रुगृहगतो वा स्वहद्दायामादिशब्देन स्वद्रेक्काणेवा स्वनवांशे वा लग्नाधीशेन कार्याधीशेन च परस्परं कृतमुथशिलेन चेदित्थशाली मुथशिली भवति । तदाऽधममध्यमकंबूलमुच्यते । कुतः चंद्रस्याधमाधिकारत्वादितरयोर्मध्यमाधिकारप्राप्तत्वात् । उदाहरणम् ॥ पुत्रप्राप्तिप्रश्ने कन्यालग्नं तत्स्वामी बुधः मकरे स्वहद्दायां ३्यंशः । पुत्रभावाधीशः शनिस्तु मीने स्वहद्दायां पंचांशोऽस्ति । चंद्रस्तु नीचे वृश्चिके ३्यंशः एषां त्रयाणां परस्परमुथशिलयोगे जाते साति । अधममध्यमकंबूलं जातम् । तेन संततिप्राप्तिरत्यायाससाध्या ज्ञेया ॥४५॥ अथान्यदधमकंबूललक्षणमाह इंद्विति । यदींदुश्चंद्रः स्वनीचराशिगतः स्वशत्रुराशिगतो वा पादोनेन उत्तममध्यमाधिकाररहितेन लग्नाधीशेन कार्याधीशेन च कृतपरस्परमुथशिलेन चेन्मुथशिलीभवति । तदाऽधमाख्यं कंबूलंज्ञेयम् । कुतः चंद्रस्याधमाधिकारप्राप्तत्वात् । इतरयोः समाधिकारप्राप्तत्वात् । एतत्पूर्वमुक्तस्य कंबूलयोगस्य तुल्यं फलं प्रददाति । उदाहरणम् । राज्याप्तिप्रश्ने वृषलग्नं तत्स्वामी शुक्रः षडंशः सिंहे । राज्याधीशः शनि-र्वृषे दशांशः १० चंद्रस्तु नीचे वृश्चिके ३्यंशोऽस्ति । एषां मुथशिलयोगे जातेऽधमकंबू-लं तेन राज्यप्राप्तिः कष्टसाध्या ॥ ४६ ॥

**नीचारिभस्थखेटेन नीचारिभगतः शशी ॥ इत्थशाली कंबूलं तदधमाधममुच्यते ॥४७॥ मेषे रविः कुजो वापि वृषे कर्केऽथवा शशी ॥ तत्रेत्थशाली कंबूलमुत्तमोत्तमकार्यकृत् ॥ ४८ ॥ वृश्चिकस्थः शशी भौमः कर्के तत्रेत्थशालतः ॥ अधमाधम-कंबूलं कार्यविध्वंसदुःखदम् ॥ ४९ ॥**

अथाधमाधमकंबूललक्षणमाह नीचारिभस्थेति । स्वनीचराशिगतेन स्वशत्रुराशिगते-न वा लग्नाधीशेन कार्याधीशेन च परस्परकृतमुथशिलेन स्वनीचराशिगतः स्वशत्रुराशिग-तो वा शशी चेन्मुथशिलंकरोति तदा कंबूलमधमाधममुच्यते । कुतः चंद्रस्येतरयोश्चाध-माधिकारप्राप्तत्वात । उदाहरणम् । पुत्रलाभप्रश्ने लग्नं धनुः तस्य स्वामी गुरुः मकरे नीचे । पुत्रभावाधीशो भौमः कर्के नीचे । चंद्रोऽपि मीने वृश्चिके । अत्र त्रयाणांपर-

स्परमुथशिलयोगेऽधमाधमकंबूलाख्ययोगस्तेन संततिलाभो नास्त्येवेति वाच्यम् ॥ ४७॥ एवं षोडशकंबूलभेदा उक्ताः ॥ अथ प्रागुक्तानां कंबूलभेदानां मध्ये उत्तमोत्तमकंबूलयोगोदाहरणमाह मेषेइति अत्रापत्यप्रश्ने मेषलग्नं तत्स्वामी भौमः मेषे स्वगृहे । पंचमभावाधीशो रविर्मेषेस्वोच्चे । अनयोर्लग्नाधीशकार्याधीशयोः परस्परमुथशिलयोगे सति चंद्रस्य वृषः उच्चं कर्क स्वगृहम् । अनयोर्मध्येकचिद्विद्यमानश्चंद्रश्चेन्मुथशिलं करोति । तदाकंबूलमुत्तमोत्तमकार्यकृत्वांछितफलदमित्यर्थः ॥ ४८ ॥ अथांतिमकंबूलयोगस्याधमाधमाख्यस्योदाहरणमाह—वृश्चिकस्थ इति । पुत्रलाभप्रश्ने धनुर्लग्नं लग्नाधीशो गुरुर्मकरे नीचे । पुत्रभावाधीशो भौमः कर्के नीचे । वृश्चिकस्थः चंद्रो नीचे । तत्र चंद्रभौमाभ्यां गुरुभौमाभ्यां च मुथशिलयोगाज्जातं कंबूलमधमाधमाख्यं तद्वांछितकार्यविध्वंसदं दुःखं च ददाति ॥ ४९ ॥

**एवं पूर्वोक्तभेदानामुदाहरणयोजना । उक्तलक्षणसंबंधादूहनीया विचक्षणैः ॥ ५० ॥ मेषस्थेऽब्जे शनीत्यादि दृष्टांतान्मन्दशीघ्रयोः ॥ एकक्षावस्थितावित्थशालादीनपरे जगुः ॥ ५१ ॥**

अथाद्यंतिमयोः कंबूलभेदयोर्दिशा अंतरालवर्तिनां कंबूलभेदानामुदाहरणान्यूह्यानीत्याह—एवमिति । एवं पूर्वोक्तभेदानां विचक्षणैर्दैवज्ञैरुदाहरणयोजना उक्तलक्षणसंबंधात्प्रागुक्तलक्षणयोजना ऊहनीया विचार्या उदाहरणानि नोक्तानि । कुतः लक्षणवाक्यानां स्पष्टार्थत्वात् ॥ ५० ॥ अथात्र केचित्कंबूललक्षणे शीघ्रमंदगतिग्रहयोरेकराशिस्थयोरेव मुथशिलयोगमाहुः । तन्मतमुपन्यस्यति । मेषराशिस्थेऽब्जे चंद्रमसि मेषस्थेनैव शनिना सह मुथशिलयोगकृतेसति । तदा एतदुत्पन्नं कंबूलं मध्यमाधमसंज्ञं जातमित्यादिदृष्टांतवशात् शीघ्रमंदगतिग्रहयोरेकराश्यवस्थितत्वात् । एवं मुथशिलयोगादीनपरे जगुः । आदिशब्देनेसराफादयः । तथाच समरसिंहः "मेषस्थेऽब्जे शनिना कर्कस्थे भूभुवा स्त्रियां कविना । मकरस्थे गुरुणा सह मीनस्थे ज्ञेन न शुभं च ॥ १ ॥" अस्यार्थः । मेषराशिस्थेऽब्जे चंद्रमसि स्थानांतरस्यानुक्तत्वान्मेषस्थेनैव शनिना सह कृतमुथशिले सति मध्यमाधमसंज्ञकं कंबूलं जातम् । कुतः अत्रहि चंद्रोमेषे स्वगृहोच्चाधिकारे नास्ति स्वद्रेक्काणस्तु न संभवति प्रायः स्वनवांशोऽस्ति । शनिस्तु नीचस्थ एव । तथा । कर्कस्थे चंद्रे भूभुवा मंगलेन कर्काख्यनीचस्थानगतेन कृतपरस्परमुथशिले सत्युत्तमाधमकंबूलंजातम् । कुतः अत्र हि चंद्रः स्वगृहस्थः । भौमो नीचस्थः । तथा स्त्रियां कन्यास्थे चंद्रे कविना शुक्रेण कन्याख्यनीचराशिगतेन सह मुथशिले कृते सति मध्यमाधमकंबूलं जातम् । कुतः चंद्रः स्वनवांशेऽस्ति शुक्रो नीचेऽस्ति । अत्रापि चंद्रस्य स्वद्रेक्काणस्तु न संभवति । तथा मकरस्थे चंद्रे गुरुणा मकराख्यनीचराशिगतेन सह

मुथशिले सति मध्यमाधमकंबूलं जातम् । कुतः अत्र चंद्रः स्वद्रेक्काणे स्वनवांशे चास्ति गुरुर्नीचे । अत्रापि स्वद्रेक्काणस्तु न संभवति । तथा मीनस्थे चंद्रे बुधेन मीनाख्यनीचस्थितेन मुथशिले सति मध्यमाधमकंबूलं जातम् । कुतः अत्र चंद्रः स्वद्रेक्काणे स्वनवांशेऽस्ति । बुधो नीचेऽस्ति । इदमुदाहरणपंचकं शुभं न शुभफलदं नेत्यर्थः ॥५१॥

**तदयुक्तं नीचगस्य नीचेन रिपुणा रिपोः ॥ इत्थशालं कार्यनाशीत्युक्तं तत्र यतः स्फुटम् ॥ ५२ ॥ लग्नकार्यपयोरित्थशाले चेकोस्ति नीचगः ॥ स्वर्क्षादिपदहीनोऽन्योऽत्रेंदुः कंबूलयोगकृत् ॥ ५३ ॥**

अथैषां मतं दृष्टांतेनैव दूषयति—तदयुक्तमिति । शीघ्रमंदगतिग्रहयोरेकराशिस्थयोरेव मुथशिलादियोगो विचार्य इति यत् केषांचिन्मतं तदयुक्तं न युक्तिसहमित्यर्थः । कुतः इत्यत आह । नीचगस्येति । लग्नाधीशकार्याधीशयोर्मध्ये केनाचिदेकेन ग्रहेण स्वनीचराशिगतेन स्वनीचराशिगतस्य तदितरग्रहस्य चेदित्थशालं तत्कार्यनाशीत्युक्तम् । नहि द्वयोरेकं नीचस्थानं भवति । तथा रिपुणा रिपोर्लग्नेशकार्येशयोः परस्परवैरे सति यन्मुथशिलं तत्कार्यनाशीत्युक्तम् । यतः कारणात्तत्र समरसिंहकृतताजिकसंज्ञातंत्रे स्फुटं प्रकटार्थमुक्तमस्ति । तद्वाक्यं च—"यदि नीचो नीचेन च मुथशिलकारी तथा रिपुर्द्विषता । तत्कंबूलं नेष्टं चंद्रोपि विनाशकोऽमुष्मिन् ॥ १ ॥" अत्र द्वितीयो योगः एकराशिस्थयोरपि संभवतीति न दूषणगत्वेनोपन्यसनीयः । ग्रंथकर्त्रा तु आकरग्रंथसंदर्भवशाल्लिखितः ॥ ५२ ॥ अथ प्रकारांतरेण फलोत्पत्तिज्ञानार्थं कंबूलयोगस्य भेदांतरमाह—लग्नकार्येति ॥ पूर्वं तु लग्नाधीशकार्याधीशयोरभिन्नाधिकारस्थितयोश्चंद्रेण मुथशिले कंबूलमुक्तम् । इदानीं तु तयोरप्याधिकारभेद उच्यते ॥ यत्र लग्नाधीशकार्याधीशयोर्मुथशिलयोगो विचार्यते । तत्र तयोर्मध्ये एकः स्वनीचगतोऽस्ति । अन्यः द्वितीयः स्वर्क्षादिपदहीनः स्वगृहे स्वोच्चे स्वहद्दायां स्वद्रेक्काणे स्वनवांशे स्वनीचे स्वशत्रुक्षेत्रे वा न भवति । अर्थात्समाधिकारगतोस्ति । अत्र समाधिकारगतश्चंद्रश्चेन्मुथशिलं करोति । तदापि कंबूलाख्यो योगः स्यात् ॥ ५३ ॥

**तत्र कार्याल्पता ज्ञेया यथा जात्यन्यमर्थयन् ॥ अन्यजातिः पुमानर्थं तथैतत्कवयो विदुः ॥ ५४ ॥**

अथ सदृष्टांतमेतस्य फलमाह—तत्रेति । तत्र तादृशे कंबूलयोगे कार्याल्पता ज्ञेया । तत्र दृष्टांतः । अन्यजातिः पुमान् जात्यन्यं विजातीयमर्थयन् प्रार्थयन् सन् यथा अर्थं स्वल्पं लभते इत्यध्याहारः । तथैतत्कंबूलं कवयः पंडिता विदुर्जानंति अर्थाद्यदा सजातीयमर्थयते तदा तस्मै लज्जावशात् बह्वपि कदाचित्प्रयच्छतीत्यर्थः ॥ ५४ ॥

यस्याधिकारः स्वर्क्षादिः शुभोनाप्यशुभापि च ॥ केनाप्यदृश्यमूर्तिश्च सशून्याध्वग इष्यते ॥ ५५ ॥ लग्नकार्येशयोरित्थशाले शून्याध्वगः शशी ॥ उच्चादिपदशून्यत्वान्नेत्थशालोऽस्य केनचित् ॥ ५६ ॥ यद्यन्यर्क्षं प्रविश्यैष स्वर्क्षोच्चस्थेत्थशालवान् ॥ गैरिकंबूलमेतत्तु पदोनेनाशुभं स्मृतम् ॥ ५७ ॥

अथ गैरिकंबूलं वक्तुकामस्तदुपयोगित्वेन शून्यमार्गगग्रहलक्षणमाह-यस्येति । यस्य ग्रहस्य स्वर्क्षादिस्वगृहस्वोच्चस्वहद्दास्वद्रेष्काणस्वनवांशात्मकः शुभः शुभफलदोधिकारो नास्ति । अशुभोपि नीचशत्रुराशिगतः अशुभः अशुभफलदोधिकारोपि नास्ति । पुनः केनापि शुभग्रहेण पापेन वाऽदृश्यमूर्त्तिरदृष्टः शून्याध्वगः शून्यमार्गग इष्यते उच्यते । अत्रार्थे संमतिर्नास्ति समरसिंहेनानुक्तत्वात् ॥ ५५ ॥ अथ शून्यमार्गगलक्षणं प्रतिपाद्य गैरिकंबूललक्षणमाह श्लोकद्वयेन लग्नकार्येति । लग्नाधीशकार्याधीशयोरित्थशाले सति तत्र शशी चंद्रश्चेच्छून्याध्वगः शून्यमार्गगो भवति । शून्यमार्गगः कथं जात इत्यत आह । उच्चादिपदशून्यत्वात् स्वोच्चम् आदिशब्देन स्वगृहस्वद्रेक्काणस्वनवांशस्वनीचस्वशत्रुभमेतत्स्थानस्य शून्यत्वाद्रहितत्वादित्यर्थः ॥ ५६ ॥ अत एतादृशचंद्रस्य केनाचिल्लग्नाधीशकार्याधीशयोर्मध्ये केनचिदेकेन मुथशीलयोगश्चेन्न भवति एतादृशश्चंद्रो यदि राश्यंते वर्तमानः सन्नन्यर्क्षमग्रिमराशिं प्रविश्य यस्मिन्राशौ प्रविष्टः स राशिर्यस्य ग्रहस्य स्वगृहं स्वोच्चं वा स ग्रहमास्मिन् यदि तिष्ठेत्तेन ग्रहेण सह यदि चंद्रो मुथशिलं करोति तदा गैरिकंबूलसंज्ञको योगो भवति । एतद्गैरिकंबूलं पूर्वोक्तकंबूलभेदतुल्यफलदं ज्ञातव्यम् । विशेषर्यदि तु अन्यराशिगतश्चंद्रस्तद्राशिस्थेन ग्रहेण पदोनेन स्वगृहाद्याधिकाररहितेन मुथशिलं करोति तदा तद्गैरिकंबूलमशुभमनिष्टफलदं स्मृतम् ॥ ५७ ॥

लप्स्ये सुखमितिप्रश्ने सिंहलग्ने रविः क्रिये ॥ अष्टांशैः सुखपः कुंभे भौमोंशैः रविभिस्तयोः ॥ ५८ ॥ इत्थशालोस्ति तत्रेंदुः कन्यायां चरमेंशके ॥ स्वर्क्षादिपदहीनस्य नेत्थशालस्य केनचित् ॥५९॥ स स्वोच्चगेन शशिनान्यर्क्षस्थेनेत्थशालकृत्॥ गैरिकंबूलमन्येन सहायाल्लाभदायकम् ॥ ६० ॥

अथास्य गैरिकंबूलस्योदाहरणं श्लोकत्रयेणाह-लप्स्यइति । अहं सुखं सौख्यं लप्स्ये प्राप्स्यामि नवेति प्रश्ने क्रियमाणे सति तस्मिन्काले सिंहलग्नमस्ति । तस्य स्वामी सूर्यः क्रिये मेषे अष्टांशैरष्टाभिरंशैरुपलक्षितोस्ति । सुखभवनं चतुर्थं वृश्चिकाख्यं तस्य स्वामी

भौमः कुंभे रविभिर्द्वादशांशैरुपलक्षितोस्ति । तयोर्लग्नाधीशकार्याधीशयोः सूर्यभौमयोः परस्परं मुथशिलयोगोस्ति । तत्रास्मिन् योगे सति इंदुश्चंद्रः कन्यायां चरमेंशके त्रिंशपरिमितेंशेस्ति । अत्र विद्यमानस्य स्वक्षादिशुभाधिकारहीनस्याऽस्य चंद्रस्य लग्नाधीशकार्याधीशयोर्मध्ये केनचिदेकेन मुथशिलयोगो नास्ति । परंतु चंद्रस्तुलागृहं गंतुकामोऽस्ति तत्तुलागृहं शनेरुच्चमस्ति अतः तुलास्थेन शनिना सह शीघ्रगामित्वात् अन्यराशिस्तुला तत्र गतश्चंद्रो मुथशिलकारी भवति एतदेवंविधं ग्रहसंस्थानं गैरिकंबूलाख्यं जातम् । अथास्य फलमुच्यते । अन्येन तृतीयेन सहायभूतेन लभं वाञ्छितकार्यसिद्धिरूपं ददाति । उदाहरणकुंडली यथा अस्मिन्नेव योगे तुलाराशौ बुधादिस्तिष्ठति यस्यैकोप्यधिकारः शुभोऽशुभो नास्ति तत्र गतश्चंद्रो बुधादिना कृतमुथशिलश्चेत्तदा अनिष्टफलगैरिकंबूलं ज्ञेयम् अत्रोदाहरणे संमतिर्नास्ति समरसिंहेनानुक्तत्वात् ॥ ५८ ॥ ५९ ॥ ६० ॥

**शून्येऽध्वनींदुरुभयोर्नेत्थशालेन वा युतिः ॥ खल्लासरो न शुभदः कंबूलफलनाशनः ॥ ६१ ॥ अस्तनीचारिपुवक्रहीनभा दुर्बलो मुथशिलं करोति चेत् ॥ नेतुमेष न विभुर्यतो महोंऽते मुखेऽपि न स कार्यसाधकः ॥ ६२ ॥ केंद्रस्थ आपोक्लिमगं युनक्ति भूत्वादितो नश्यति कार्यमंते ॥ आपोक्लिमस्थो यदि केंद्रयातं विनश्य पूर्वं भवतीह पश्चात् ॥ ६३ ॥ मंदस्वभोच्चादिपदे स्थितश्चेत्पदोनशीघ्रेण कृतेत्थशालः ॥ तत्रापि कार्यं भवतीति वाच्यं वक्रादिनिर्वीर्यपदेन चेत्स्यात् ॥ ६४ ॥**

अथ खल्लासरयोगस्य लक्षणमाह–शून्य इति ॥ अत्र केनचिदेकेनेति पदमध्याहार्यम् । समरसिंहेनाप्युक्तत्वात् । लग्नाधीशकार्याधीशयोर्मुथशिलयोगस्त्वपेक्षित एव । तत्र पूर्वोक्तलक्षणेन चंद्रः शून्येऽध्वनि शून्यं मार्गगोस्ति । एतादृशश्चंद्र उभयोर्लग्नाधीशकार्याधीशयोर्मध्ये केनाचिदेकेन सह मुथशिलयोगवान्न भवति । अथवा तादृशश्चंद्रस्तेन लग्नाधीशेन कार्याधीशेन वा युतोपि नास्ति । स योगः खल्लासरनामको ज्ञेयः । अयं न शुभदः । कीदृशः । कंबूलफलनाशकः मुथशिलयोगे सति केवलयोगे वा कंबूलं पूर्णं भवति । अत्र तु केनापि सह मुथशिलयोगाभावात् युत्यभावाद्वा कंबूलफलं नाशयति ॥ ६१ ॥ अथ रद्दयोगलक्षणमाह–अस्तेति । यो ग्रहोऽस्तंगतः स्यादथवा नीचगतः स्यादथवा स्वशत्रुगृहे स्यादथवा वक्री स्यादथवा हीनाऽत्यल्पा भाः दीप्तिर्यस्य स तेजोरहित इत्यर्थः । एतादृशो ग्रहो दुर्बलो ज्ञेयः । यदि दुर्बलो ग्रहः केनापि भावस्वामिना सह मुथशिलं चेत्करोति । स ग्रहोंऽते मुखेप्यादावपिं तद्भावकार्यसाधको न भवति । यतः कारणादेष ग्रहो महस्तेजो नेतुं न विभुः समर्थो

न भवति ॥ ६२ ॥ अथ द्वादशस्य रद्दसंज्ञस्य निर्बलग्रहस्य स्थानविशेषे स्थित्वा समयविशेषेण फलपाकमाह-केंद्रस्थ इति । कार्याधीशो यो दुर्बलो ग्रहः केंद्रस्थः सन्नापोक्लिमगमापोक्लिमस्थानगतं लग्नाधीशं ग्रहं युनक्ति मुथशिलं करोति । तदा विशिष्टं कार्यमादितः प्रथमतो भूत्वांऽतेऽपरिणामे नश्यति नष्टं भवति । यदि आपोक्लिमस्थो ग्रहः केंद्रस्थानगतं ग्रहं युनक्ति मुथशिलं करोति । तदा पूर्वं प्रथमतः विनश्य नाशं प्राप्य पश्चात्प्रांते विशिष्टं कार्यं भवतीति वाच्यम् ॥ ६३ ॥ अथ दुष्फालिकुत्थयोगलक्षणमाह-मंदस्वेति । मंदो मंदगतिग्रहः स्वभोच्चादिस्वक्षेत्रे स्वोच्चे आदिशब्देन स्वहद्दायां स्वद्रेष्काणे स्वनवांशे वा स्थितः सन् पदोनेन शीघ्रेण स्वभोच्चादिशुभाधिकाररहितेन शीघ्रगतिग्रहेण कृतेत्थशालश्चेद्भवति तत्राभीष्टं कार्यं भवतीति वाच्यम् । चेच्छीघ्रगतिग्रहः वक्रादिनिर्वीर्यपदे प्रागुक्तास्तनीचरिपुवक्रहीनभा इत्यादिनिर्बलस्थानेषु चेन्न स्यात् ॥ ६४ ॥

**वीर्योनितौ कार्यविलग्ननाथौ स्वर्क्षादिगेनान्यतरो युनक्ति ॥ अन्यौ यदा द्वौ बलिनौ तदान्यसाहाय्यतः कार्यमुशंति संतः ॥ ६५ ॥ बली राश्यंतगोन्यर्क्षगामी दीप्तांशकैर्महः ॥ दत्तेऽन्यस्मै कार्यकरस्तंबीरो लग्नकार्यपोः ॥ ६६ ॥ लग्नेऽथ केंद्रे निकटेपि वास्य विलग्नदर्शी स्वगृहोच्चहद्दे॥ मुसल्लहे स्वेनिजहद्दगो वाबली ग्रहो मध्यगतिस्त्वशीघ्रः ॥ ६७ ॥**

अथ दुत्थोत्थदिवीरयोगमाह-वीर्योनिताविति । यदा लग्नाधीशकार्याधीशौ वीर्योनितौ अस्तनीचरिपुवक्रहीनभा इत्याद्युक्तरीत्या निर्बलौ स्याताम् । तयोर्लग्नाधीशकार्याधीशयोर्मध्ये कश्चिदेकस्तृतीयेन ग्रहेण स्वर्क्षादिगेन स्वगृहोच्चस्वहद्दादिगतेन सह युनक्ति मुथशिलं करोति । तदान्यसाहाय्यतस्तृतीयो यः कश्चित्सहायभूतस्तत्सकाशात्कार्यं संतः अतिशिष्टा उशंति वांछंति । अथवा यदान्यौ यौ कौचिद्द्वौ ग्रहौ बलिनौ स्वगृहोच्चादिगौ संतौ लग्नाधीशकार्याधीशयोर्मध्ये केनचिदेकेन सह युक्तः मुथशिल कुरुतस्तदाप्यन्यसाहाय्यतः कार्यमुशंति संत इति ॥ ६५ ॥ अथ तंबीरयोगस्य लक्षणमाह-बलीति । यदा लग्नकार्यपयोः लग्नाधीशकार्याधीशयोः परस्परं मुथशिलयोगो न भवेत्तदाऽनयोर्मध्ये कश्चन बली ग्रहः राश्यंतगः स्वाक्रांतराश्यंतिमांश २९ वर्ती सन् यदान्यर्क्षगामी अग्रिमराशिगमनकामः स्वदीप्तांशकैरन्यस्मै अग्रिमराशिविद्यमानाय ग्रहाय महस्तेजो दत्ते स तंबीरयोगः । अग्रिमराशिगतो ग्रहश्चेत् स्वगृहादिबलयुक्तस्तदायं योगः कार्यकरोऽभीष्टकार्यकर्ता स्यात् ॥ ६६ ॥ अथ कुत्थलक्षणमाह-अत्र कुत्थशब्देन यवनभाषया बली ग्रह उच्यते तत्रबलमनेकप्रकारं तत्र कांश्चि-

त्प्रकारान् प्रथमश्लोकेनाह—लग्नइति। अत्र ग्रहो बलीत्यन्वयः। तत्रापि सर्वापेक्षया लग्नस्थो बली। तदभावे केन्द्रस्थश्चतुर्थसप्तमदशमस्थानेषु बली परंतु लग्नस्थापेक्षया न्यूनबलः। तदभावेऽस्य केन्द्रस्य निकटे पणफरे द्वितीयपंचमैकादशस्थानेषु बली। केंद्रस्यापेक्षयान्यूनबलः तदभावे ग्रहो विलग्नदर्शी विलग्नं पश्यतीति विलग्नदर्शी तृतीयनवमस्थो बलवान् भवति यद्वा निकटोपि वास्य विलग्नदर्शीति विशेषणविशेष्यभावः। अस्य केंद्रस्य निकटे पणफरे आपोक्लिमे च स्थितः सन् विलग्नदर्शी तृतीयपंचमनवमैकादशस्थः स बलवानित्यर्थः। अन्येषु षडष्टद्वादशवर्जितपणफरापोक्लिमानां निकटपदेन संग्रहः षडादिष्वपि गणितागतदृष्टौ सोऽपि कथंचिद्बली इत्यर्थ इत्याहुः। तथा यो ग्रहः स्वगृहे स्वोच्चे स्वद्रेक्काणे स्वमुसल्लहे स्वनवांशे स्वहद्दायां वा वर्तमानो बली। तथा मध्यगतिः 'नंदाक्षा भुजगा रवेः' इत्याद्युक्तमध्यगतितुल्यः स्पष्टगतिर्ग्रहो बलवान् भवति। तथा अशीघ्रो न शीघ्रो अशीघ्रो मध्यगत्यपेक्षयाऽल्पगतिर्ग्रहो बली ॥ ६७ ॥

**कृतोदयो मार्गगतिः शुभेन युतेक्षितः क्रूरखगस्य दृष्टया ॥ क्षुताख्यया नाधिगतो न युक्तः क्रूरेण सायं च सितेंदुभौमाः ॥ ६८ ॥ यदोदयंते परात्रिभागे जीवार्कजावह्निनराः सवीर्याः ॥ अन्ये निशीनस्य नवैकभागे स्थिताः स्थिरर्क्षे च बलेन युक्ताः ॥ ६९ ॥ स्त्रियश्चतुर्थात्पुरुषा वियद्वाद्वषट्कगा ओजभगाः पुमांसः ॥ समे परे स्युर्बलिनो विमृश्य विशेषमेतेषु फलं निगद्यम् ॥ ७० ॥**

अथान्यान्प्रकारानाह—कृतोदय इति। यो ग्रहः कृतोदयः उदितः स बली तथा मार्गगतिर्मार्गी ग्रहो बली। तथा शुभेन शुभग्रहेण युतः ईक्षितो वा स बली। तथा क्रूरखगस्य पापग्रहस्य क्षुताख्यया चतुर्थदशमसप्तमैकराशिदृष्ट्या नाधिगतः न दृष्टः स बली। तथा क्रूरेण न युक्तः पापग्रहेण युक्तो न भवति स बली। एवं सामान्यतो ग्रहबलमुक्त्वा इदानीं समयबलमाह—सायंचसितेंदुभौमा इति। इदमग्रिमश्लोकेन संबध्यते ॥ ६८ ॥ अथान्यप्रकारमाह। यदेति सितेंदुभौमाः शुक्रचंद्रभौमाः सायं संध्याकाले यदोदयंते तदा बलिनः जीवार्कजौ गुरुशनी अपरात्रिभागे अर्धरात्रादुपरि भागे बलिनौ तथा नराः पुरुषग्रहाः सूर्यभौमगुरवोऽह्नि [दिवसे] बलिनः अन्ये ग्रहाः चंद्रबुधशुक्रशनयो निशि रात्रौ बलिष्ठाः। तथा इनस्य सूर्यस्य नैकभागस्थिताः सूर्यो यद्राशिनवांशे तस्मिन्नेव नवांशे यदि ग्रहा न स्युस्तदापि बलिनो भवंति तस्मादन्ये निशीनस्य नवैकभागे स्थिताः इति पाठः साधीयान्। अन्ये निशीनस्य तथै-

कभाग इत्यपि पाठः । उक्तं च समरसिंहेन 'सूर्यस्य नैकभागे स्थिरराशौ वा तदात्र ते बलिनः' इति अत्र सूर्यस्य चैकभागे इति पाठं धृत्वा एकभागे एकराशिनवांशे इति व्याख्यानं कुर्वंति तन्न अस्तमितस्याप्येवं संभवात् । न चास्तमितः क्वचित् ग्रन्थे बली श्रूयते । प्रत्युत अस्मिन्नेव ग्रन्थे निर्बलः श्रूयते । तत्मात्सूर्यस्य नैकभाग इति युक्तः पाठः । तथा स्थिरर्क्षे च वृषसिंहवृश्चिककुंभराशिस्थाः ग्रहाः बलेन युक्ताः बलिष्ठा ज्ञेयाः॥६९॥ अथान्यान्प्रकारानाह-स्त्रिय इति । स्त्रियः स्त्रीग्रहाश्चतुर्थाच्चतुर्थभावमारभ्य भषट्कगाः षड्राशिगताः बलिनः चतुर्थाद्यावन्नवमांतम् तावन्मध्ये वर्त्तमाना बलिनः स्युरित्यर्थः । पुरुषाः पुरुषग्रहाः वियद्भावाद्दशमभावमारभ्य षड्राशिगताः बलिनः स्युः । दशमाद्यावत्तृतीयं तावन्मध्ये वर्तमाना बलिनः स्युरित्यर्थः । तथा ओजभगा विषमराशिस्थाः पुमांसः पुरुषग्रहा बलिष्ठाः । अपरे स्त्रीग्रहाः समे समराशौ बलिनः स्युः । एतेषु पूर्वोक्तेष्वनेकेषु बलभेदेषु विशेषं शुभाधिकाररूपं विमृश्य विचार्य फलं शुभं निगद्यं वक्तव्यम् ॥ ७० ॥

**लग्नात्षष्ठाष्टमेंत्येऽनृजुररिगृहगो नीचगो वक्रगामी क्रूरैर्युक्तोस्तगो वा यदि च मुथशिली क्रूरनीचारिभस्थैः ॥ क्षुद्दृष्ट्या क्रूरदृष्टो व्ययरिपुमृतिगैरित्थशालं विधित्सुः कुर्वन्वा निर्बलोयं स्वगृहनगभगो राहुपुच्छास्यवर्ती ॥ ७१ ॥ अनीक्षमाणस्तनुमस्तभागास्थितः स्वभोच्चादिपदैश्च शून्यः ॥ क्रूरेसराफी न स वीर्ययुक्तः कार्यं विधातुं न विभुर्यतोऽसौ ॥७२ ॥**

अथ दुरप्फलक्षणमाह-अत्र यवनभाषया दुरप्फशब्देन नैर्बल्यमुच्यते । तच्चानेकप्रकारम् । तत्र कियतः प्रकारान् प्रथमश्लोकेनाह-लग्नादिति । अत्र निर्बलोयमित्यर्थः । लग्नाद्वर्षलग्नान्मासदिनप्रश्नलग्नाद्वा यः कश्चिद्ग्रहः षष्ठे स्थानेऽथवाऽष्टमेऽथवांत्ये द्वादशे वर्त्तमानः सन् निर्बलो भवति तथानृजुर्वक्रगतिग्रहो निर्बलः । तथा अरिगृहगः शत्रुराशिस्थो निर्बलः । तथा नीचगः नीचराशिगतः निर्बलः । तथा वक्रगामी वक्राभिलाषी ग्रहो निर्बलः । तथा क्रूरैः पापग्रहैर्युक्तो ग्रहो निर्बलः। तथास्तगः अस्तंगतो ग्रहो निर्बलः। तथा यदि क्रूरनीचारिभस्थैः मुथशिली यदि कश्चिद्ग्रहः क्रूरग्रहेण नीचराशिगतेन शत्रुराशिगतेन वा ग्रहेण मुथशिली मुथशिलं करोति स निर्बलः। तथा क्रूरेण क्षुद्दृष्ट्या चतुर्थदशमसप्तमैकस्थानगतदृष्ट्या दृष्टश्चेन्निर्बलः तथा व्ययरिपुमृतिगैर्द्वादशषष्ठाष्टमस्थानस्थितैर्ग्रहैः सहेत्थशालं विधित्सुः कर्तुमिच्छति । अथवा कुर्वन्मुथशिलं करोति स निर्बलः । तथा स्वगृहनगभगः स्वगृहात् ग्रहस्य यद्गृहं यथा मेषो भौमस्य तस्मान्नगभगः सप्तमं यत्स्थानं तत्र गतो ग्रहो निर्बलः तद्यथा ग्रहाधिष्ठितो राशिः स चेत् ग्रहस्य स्वगृहात्सप्तमो भवति तदा निर्बल इत्यर्थः ।

तथा राहुपुच्छास्यवर्त्ती राहोः पुच्छं राहुभुक्तांशा आस्यं मुखं राहुभोग्यांशाः तत्र तिष्ठति यो ग्रहः स निर्बलः ॥ ७१ ॥ अथान्यानशुभप्रकारानाह अनीक्षमाण इति । यो ग्रहस्तनुं लग्नमनीक्षमाणो नेक्षते स निर्बलः । तथा अस्तभागस्थितः सूर्यो यद्राशिनवांशेऽस्ति तस्मात्सप्तमो यो नवांशः तत्र स्थितो ग्रहो निर्बलः । उक्तं च समरसिंहेन "सूर्यास्तभागसंस्थं" इति । तथा यो ग्रहः स्वभोच्चादिपदैः स्वगृहस्वोच्चस्वहद्दास्वद्रेक्काणस्वनवांशाख्यैः पदैरधिकारैः शून्यो रहितः स निर्बलः । तथा यो ग्रहः क्रूरेसराफी पापग्रहेण सह ईसराफं योगं करोति स ग्रहो वीर्ययुक्तो न भवति । यतोऽसौ ग्रहः कार्यं मनोभिलषितं विधातुं कर्तुं न विभुः न समर्था भवति ॥ ७२ ॥

**चंद्रः सूर्याद्द्वादशे वृश्चिकाद्ये खंडे नेष्टोंत्ये तुलायां विशेषात् ॥ राशीशेनादृष्टमूर्तिर्न सर्वैर्दृष्टो ज्ञेयः शून्यमार्गः पदोनः ॥ ७३॥ क्षीणो भांते नो शुभो जन्मकाले पृच्छायां वा चंद्र एवं विचिंत्यः ॥ शुक्ले भौमः कृष्णपक्षेर्कसूनुः क्षुदृष्ट्येंदुं वीक्षते नो शुभोऽसौ ॥ ७४ ॥ शुक्ले दिवा नृगृहगोर्कसुतः शशांकं कृष्णे कुजो निशि समर्क्षगतः प्रपश्येत् ॥ दोषाल्पतां वितनुतेऽपरथा बहुत्वं प्रश्नेथवा जनुषि बुद्धिमतोहनीयम् ॥ ७५ ॥**

इति षोडशयोगाः ।

एवं सर्वेषां ग्रहाणां सामान्यतः दुरप्फमुक्त्वा इदानीं चंद्रस्याऽत्यंतदुरप्फविशेषमाह—चंद्र इति । सूर्यात्सूर्याधिष्ठितराशेः सकाशात् द्वादशे स्थाने यदि चंद्रो भवति स निर्बलः तथा वृश्चिकाद्ये खंडे पूर्वार्द्धे नेष्टः अशुभफलदः निर्बलः । तथा तुलायाः तुलाराशेः अंत्ये उत्तरार्द्धे विशेषान्नेष्टः निर्बलः । तथा राशीशेन चंद्रो यस्मिन् राशावस्ति तद्राशीश्वरेण अदृष्टमूर्तिर्नदृष्टस्तथा सर्वैर्ग्रहैर्न दृष्टः स निर्बलः तथा शून्यमार्गः प्रागुक्तलक्षणलक्षितशून्यमार्गगश्चेचंद्रो भवति तदा पादोनो निर्बलो ज्ञेयः॥७३॥ अथान्यदुरप्फं चंद्रस्याह—क्षीणइति चंद्र इत्यनुवर्त्तते । क्षीणः अर्द्धोनः कृष्णाष्टमीमारभ्य शुक्लाष्टमीपर्यंतमिति । यावत्कृष्णैकादशीमारभ्य दर्शांतपर्यंतं क्षीण इति केचित् । तथा भांते राशेरंते राशेरंतिमनवांशे वर्त्तमानः सन् नो शुभो दुष्टफलदः स्यात् निर्बल इत्यर्थः । एवममुना प्रकारेण चंद्रो जन्मकाले तथा पृच्छायां प्रश्नलग्ने विचिंत्यः वा शुक्ले शुक्लपक्षे भौमः कृष्णपक्षेऽर्कसूनुः शनैश्चरः एतौ क्षुदृष्ट्या चतुर्थदशमसप्तमैकस्थानदृष्ट्या चेदिन्दुं वीक्षेते पश्यतस्तदासौ चंद्रः नो शुभः शुभफलदो न भवति ॥ ७४ ॥ अथ शुभस्यापि चंद्रस्य केनचिद्योगविशेषेण दोषाल्पतामाह शुक्ल इति ॥ शुक्ले शुक्लपक्षे दिवा दिवसे नृगृहगः पुरुषराशयो मेषमिथुनसिंहादयस्तेषु गतोऽर्कसुतः शनिर्यदि शशांकं चंद्रं पश्येत्तदा दुरप्फदोष स्याल्पता

न्यूनत्वं वितनुते। अपरथा अन्यथा यद्यर्कसुतो न पश्येत्तदा दुरफदोषस्य बहुत्वं बाहुल्यं वितनुते। तथा कृष्णे कृष्णपक्षे निशि रात्रौ समर्क्षगतः समराशयो वृषकर्क-कन्यादयस्तेषु गतः कुजो यदि चंद्रं प्रपश्येत्तदाल्पतां दुरफदोषस्य न्यूनत्वं वितनुते यदि भौमो न प्रपश्येत्तदा दोषबहुत्वं वितनुते। सर्वमिदं प्रश्ने प्रश्नलग्नेऽथवा जनुषि जन्मलग्ने बुद्धिमता ऊहनीयं विचार्यम्। अर्थाद्वर्षलग्नादिष्वपि विचार्यमिति। एवं षोडशयोगाः समाप्ताः ॥ ७५ ॥

**नंद ९ त्रि ३ षड् ६ लग्न १ भवर्क्ष ११ पुत्र ५ व्यया १२ इनाद्धर्षपदं स्वभोच्चम् ॥ त्रिभं त्रिभं लग्नभतः क्रमेण स्त्रीणां नृणां रात्रिदिने च तेषु ॥ ७६ ॥ श्रीगर्गान्वयभूषणं गणितविच्चिंतामणिस्तत्सुतोऽनंतोनंतमतिर्व्यधात्खलमतध्वस्त्यै जनुः पद्धतिम् ॥ तत्सूनुः खलु नीलकंठविबुधो विद्वच्छिवाज्ञया योगान्षोडशहर्षभानि च तथा संज्ञाविवेकेऽभ्यधात् ॥ ७७ ॥**

**इति संज्ञातन्त्रे षोडशयोगाध्यायो द्वितीयः ॥**

अथ सर्वग्रहाणां चत्वारि हर्षस्थानान्याह–नंदत्रिषडिति। तत्र प्रथमं हर्षस्थानमुच्यते। इनात्सूर्यमारभ्य सर्वेषां ग्रहाणां नंद इत्यादिहर्षस्थानानि क्रमेण भवंति.लग्नादिति संबंधः। तद्यथा। लग्नान्नवमस्थः सूर्यो हर्षितः। चंद्रस्तृतीयस्थः। भौमः षष्ठस्थः। लग्नस्थो बुधः। गुरुरेकादशस्थः। शुक्रः पंचमस्थः। शनिर्व्ययस्थो हर्षद इत्यर्थः। अथ द्वितीयं हर्षस्थानमुच्यते। स्वभोच्चमिति। यदा ग्रह स्वगृहे भवति अथवा स्वोच्चे भवति तदा हर्षितो ज्ञेयः। स्वगृहे यद्बलं तदेव स्वोच्चे उभयत्रापि पंचविंशोपका बलं न तु द्विगुणम्। अथ तृतीयं हर्षस्थानमुच्यते। त्रिभमिति। लग्नभतो लग्नराशेः सकाशात् त्रिभं त्रिभं राशित्रयं राशित्रयं क्रमेण स्त्रीणां स्त्रीग्रहाणां नृणां पुरुषग्रहाणां हर्षपदं भवति। अयमर्थः। लग्नाद्द्वितीयतृतीयराशिषु वर्तमानाः स्त्रीग्रहाः हर्षिताः। ततस्त्रिषु राशिषु चतुर्थपंचमषष्ठस्थानेषु वर्तमानाः पुरुषग्रहाः हर्षिताः। पुनरपि सप्तमाष्टनवमस्थानेषु स्त्रीग्रहा हर्षिताः। पुनर्दशमैकादशद्वादशस्थानेषु पुरुषग्रहा हर्षिताः। अथ चतुर्थं हर्षस्थानमुच्यते। रात्रीति। तेषां स्त्रीपुरुषग्रहाणां रात्रिदिने रात्रिदिवसयोर्हर्षदत्वम्। अयमर्थः। रात्रौ वर्षप्रवेशे स्त्रीग्रहाणां हर्षदत्वम्। दिवा वर्षप्रवेशे पुरुषग्रहाणां हर्षदत्वम्। तेषु चतुर्षु स्थानेषु स्थिता ग्रहाः बलिनो भवंति। इह ताजिके चंद्रशनिशुक्रबुधा नार्यः स्त्रीग्रहाः। रविभौमगुरवः पुरुषग्रहाः। अत्र नपुंसका न संति। अत्र विंशति २० विंशोपकाः परमबलम्। तत्र चत्वारि हर्ष-

स्थानानि इति कारणाच्चतुर्भिर्भक्तं लब्धाः पंचविंशोपकाः एवं चतुर्षु स्थानपदेषु प्रत्येकं पंचविंशोपकाः बलं ते स्थाप्याः । अस्योदाहरणम् । सूर्यादिग्रहाः लग्नात्त्रंद इत्यादिस्थानेषु न संति । अतः प्रथमं हर्षपदं न प्राप्तम् । अत्र गुरुः स्वगृहे शनिः स्वोच्चेस्ति अतो द्वितीयं हर्षपदं प्राप्तम् तत्र बलं पंचविंशोपकाः । लग्नात्सप्तमाष्टमनवमस्थाः स्त्रीग्रहाः शनिशुक्रबुधाः संति दशमस्थाने पुरुषग्रहः सूर्यस्तिष्ठति । अतस्तेषां तृतीयं हर्षपदं प्राप्तम् । अत्रापि बलं पंचविंशोपकाः अत्र दिवा वर्षप्रवेशः अतः पुरुषग्रहाणां रविभौमगुरूणां चतुर्थं हर्षपदं प्राप्तम् अत्रापि बलं पंचविंशोपकाः एवं सर्वेषां ग्रहाणां हर्षस्थानानि तेषु प्रत्येकं बलानि तदैक्यानि लिख्यंते ॥ ७६ ॥ ७७ ॥

| | र | चं | म | बु | गु | शु | श |
|---|---|---|---|---|---|---|---|
| स्थान. | ० | ० | ० | ० | ० | ० | ० |
| उ. स्व. | ० | ० | ० | ० | ५ | ० | ५ |
| त्रि. | ५ | ० | ० | ५ | ० | ५ | ५ |
| दि. | ५ | ० | ५ | ० | ५ | ० | ० |
| योगः | १० | ० | ५ | ० | १० | ५ | १० |

इति श्रीदिव्यकरदैवज्ञात्मजविश्वनाथदैवज्ञविरचिते नीलकंठज्योतिर्वित्कृतसंज्ञातंत्रे षोडशयोगाध्यायो द्वितीयः सव्याख्योदाहृतिः समाप्तः ॥

---

अथ सहमाध्यायस्तृतीयः प्रारभ्यते ।

पुण्यं १ गुरु २ ज्ञान ३ यशो ४ थ मित्रं ५ माहात्म्य ६ माशा च ७ समर्थता च ८ ॥ भ्राता ९ ततो गौरव १० राज ११ तात १२ माता १३ सुतो १४ जीवित १५ मंबु १६ कर्म १७ ॥ १ ॥ मांद्य च १८ मन्मथ १९ कला २० परतः क्षमोक्तं २१ शास्त्रं २२ सबंधुसहमं २३ त्वथ वंदकं च २४ ॥ मृत्योश्च सद्म २५ परदेश २६ धना २७ न्यदारा २८ स्यादन्यकर्म २९ सवणिक्‌ ३० त्वथ कार्यसिद्धिः ३१ ॥ २ ॥ उद्वाह ३२ सूति ३३ संतापः ३४ श्रद्धा ३५ प्रीति ३६ बलं ३७ तनुः ३८ ॥ जाड्य३९ व्यापारसंहमे४० पानीयपतनं ४१ रिपुः ४२ ॥ ३॥ शौर्यो ४३ पाय ४४दरिद्रत्वं४५गुरुतां४६बुपथाभिधम्॥ ४७ बंधनं ४८ दुहिता ४९ श्वश्च ५० पंचाशत्सहमानि हि ॥ ४ ॥

| शुद्धाः ग्रहाः | | | | | | | |
|---|---|---|---|---|---|---|---|
| र | चं | भं | बु | गु | शु | श | ल |
| ९ | ५ | ८ | ८ | ८ | ७ | ६ | ० |
| ७ | २२ | १४ | १२ | २९ | २४ | ६ | १८ |
| ३० | ९ | ३२ | १६ | ३५ | ३४ | ४६ | ३ |
| ६ | ४७ | ३६ | [illegible] | २३ | ४८ | ५४ | ५४ |

अथ सहमानयनमाह-तत्रादौ चतुर्भिः श्लोकैः पंचाशत्सहमान्याह-पुण्यमिति ॥ स्पष्टार्थः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

सूर्योनचंद्रान्वितमह्नि लग्नं वन्द्विर्कयुक्तं निशि पुण्यसंज्ञम् ॥ शोध्यर्क्षशुद्ध्याश्रयभांतराले लग्नं न चेत्सैकभमेतदुक्तम् ॥ ॥ ५ ॥ व्यत्यस्तमस्माद्गुरुविद्ययोस्तु संसाधनं पुण्यवियुक्सुरेज्यः ॥ दिवाविलोमं निशि पूर्ववत्तु यशोभिधं तत्सहमं वदंति ॥ ६ ॥ पुण्यसद्म गुरुसद्मतस्त्यजेद्व्यत्ययो निशि सितान्वितं च तत् ॥ सैकतातनुवदुक्तरीतितो मित्रनामसहमं विदुर्बुधाः ॥ ७ ॥ पुण्याद्विलोमं शोधयेदुक्तवत्स्यान्माहात्म्यं तन्नक्तमस्माद्विलोमम् ॥ शुक्रं मंदादह्नि नक्तं विलोममाशाख्यं स्यादुक्तवच्छेषमूह्यम् ॥ ८ ॥

अथ पुण्यसहमसाधनमाह-सूर्योनेति । अह्नि दिवसे वर्षप्रवेशश्चेत्तदा चंद्रमध्ये रविः शोध्यः । निशि रात्रौ चेत्तदा सूर्याचंद्रः शोध्यः । लग्नं योज्यं राश्यादि पुण्यसंज्ञं सहमं भवेत् । अथ सर्वत्र सहमानयने विशेषसंस्कार उच्यते ॥ शोध्यर्क्षेति ॥ शोध्यर्क्षशुध्याश्रयभयोरंतराले लग्नराशिश्चेन्नास्ति तदा सहमे एको राशिर्योज्य इति । तद्यथा । यो ग्रहः शोध्यते न्यूनः क्रियते स शोध्यः । तस्य ऋक्षं राशिः शोध्यग्रहराशेः सकाशादित्यर्थः । शुद्ध्याश्रयभं यावत् । तद्यथा यस्मिन् ग्रहे शोध्यो ग्रहः शोध्यते स शुद्ध्याश्रयो ग्रहः तस्य भं राशिः अनयोः शोध्यशोधकयोरंतराले मध्ये चेल्लग्नं न भवति तदोक्तं राश्यादिपुण्यसहमं सैकभमेकराशिसहितं कार्यम् । यदि शोध्यशोधकयोर्मध्ये लग्नं भवति । तदैकराशिर्न योज्य इत्यर्थतः सिद्धम् । अशोध्यर्क्षशुध्याश्रये ग्रहे इत्युपलक्षणं भावसहमेपि बोध्यम् । अग्रे उक्तमस्ति वित्तपमर्थभावादिति पुण्याद्विलोमिति क्षेत्रग्रहऋक्षभादिभवनमेते राशिपर्यायाल्लग्नमिति योजकोपलक्षकं ज्ञेयम् ॥ उदाहरणम् । सूर्यः ९ । ७ । ३० । ६ चंद्रमध्ये ५ । २२ । ९ । ४७ शोधितः शेषम् ८ । १४ । ३९ । ४१ लग्नं ० । १८ । ३ । ५४ युतं जातं पुण्यम् ९ । २ । ४३ । ३५ ॥ ५ ॥ अथ गुरुविद्यायशःसहमानां साधनमाह-व्यत्यस्तामिति । अस्मात्पुण्यसहमसाधनाद्व्यत्यस्तं विपरीतं गुरुविद्ययोः सहमयोस्तु संसाधनं कार्यम् । तद्यथा दिवा रविमध्ये चंद्रः शोध्यः लग्नं योज्यम् । रात्रौ वर्षप्रवेशश्चेत्तदा चंद्रमध्ये रविः शोध्यः लग्नं योज्यम् ते गुरुविद्यासहमे भवतः पुण्यसहमेन वियुक् ऊनः सुरेज्यो गुरुः कार्यो दिवा । निशि रात्रौ विलोमं विपरीतं पुण्यसहममध्ये गुरुः शोध्यः पूर्व-

वदेति लग्नयोगः ॥ शोध्यर्क्षेत्यादि संस्कारश्च सर्वत्र सहमे कार्यः । तद्यशोभिधं यशः सहमं बुधा वदंति ॥ उदाहरणम् । रविमध्ये ९ । ७ । ३० । ६ चंद्रः ५ । २२ । ९ । ४७ शोधितः शेषम् ३ । १५ । २० । १९ लग्नयुतम् ४ । ३ । २४ । १३ सैकं जातं गुरुसहमम् ५ । ३ । २४ । १३ इदमेव विद्यासहमम् ५ । ३ । २४ । १३ पुण्यसहमम् ९ । २ । ४३ । ३५ गुरुमध्ये ८ । २९ । ३५ । १३ शोधिते शेषम् ११ । २६ ५१ । ३८ लग्नयुतं यशःसहमम् ० । १४ । ५५ । ३२ ॥ ६ ॥ अथ मित्रसहमसाधनमाह–पुण्यसद्मेति । दिवा गुरुसद्मतः गुरुसहमतः पुण्यसद्म पुण्यसहमं त्यजेत् । निशि रात्रौ व्यत्ययो विपरीतं पुण्यसहममध्ये गुरुसहमं शोधयेत् । ततः सितेन शुक्रेणान्वितं युक्तं कार्यम् । अत्र लग्नयोगो न कार्यः । शुक्रयुक्तत्वात्तनुवत् उक्तरीतितः सैकता कार्या । सा यथा । शोध्यर्क्षद्व्याश्रयभांतराले शुक्रो न, चेदिति तद्बुधाः मित्रनामसहमं विदुः उदाहरणम् । पुण्यसहमं ९।२४।३।३५ गुरुसहममध्ये ५।३।२४। १३ शोधिते शेषं ८।०।४०।३८ शुक्रेण ७।२४।३१।४८ युतं सैकं जातं मित्रसहमम् ३।२५।१२।२६ ॥ ७ ॥ अथ माहात्म्याशासहमयोरानयनमाह–पुण्यादिति । पुण्यसहमाद्भौमं शोधयेत् दिवा ततः उक्तवल्लग्नयोगसैकता च कार्या । नक्तं रात्रौ अस्माद्विलोमं विपरीतं भौममध्ये पुण्यसहमं शोध्यम् तन्माहात्म्यसहमं स्यात् । अथाह्नि दिवसे मंदाच्छनिमध्ये शुक्रं विशोधयेत् । नक्तं रात्रौ विलोमम् । शुक्रमध्ये शनिः शोध्यः । शेषं लग्नयोगाद्युक्तवदूह्यगुक्तरीत्या ज्ञेयम् । तदाशासहममिच्छासहमं स्यात् । उदाहरणम् । पुण्यसहममध्ये ९ । २ । ४३ । ३५ । भौमे ८ । १४ । ३२ । ३६ । शोधिते शेषम् । ० । १८ । १० । ५९ लग्नयुतं सैकं जातं माहात्म्यसहमम् २ । ६ । १४ । ५३ शनिमध्ये ६।६।४६।५४ शुक्रे ७।२४।३१।४८ शोधिते शेषम् १० । १२ । १५ । ६ लग्नयुतं जातमाशासहमम् ११ । ० १९ । ० ॥ ८ ॥

**सामर्थ्यमारात्तनुपं विशोध्य नक्तं विलोमं तनुपे कुजे तु ॥**
**जीवाद्विशुध्येत्सततं पुरावद्भ्रातार्किहीनाद्गुरुतः सदाह्यः ॥ ९ ॥**
**दिने गुरोश्चंद्रमपास्य नक्तं रविक्रमादर्कविधू च देयौ ॥ रीत्योक्तया गौरवमर्कमार्केरपास्य वामं निशि राजतातौ ॥ १० ॥**

अथ सामर्थ्यभ्रातृसहमयोरानयनमाह–सामर्थ्यमिति । आराद्भौमात्तनुपं लग्नस्वामिनं विशोध्य दिवसे नक्तं रात्रौ लग्नस्वामिमध्ये भौमं विशोधयेत् लग्नयोगः सैकता च पूर्ववत्तत्सामर्थ्यसहमं स्यात् । लग्नस्वामी चेद्भौमस्तदा किं कार्यमत आह–तनुपे इति । लग्नस्वामिनि भौमे सति जीवाद्विशुध्येत् सततं दिवारात्रौ च तत्सामर्थ्यसहमं स्यात् । अथ सदाहोरात्रमार्किहीनात् शनिरहिताद्गुरुतः पुरावत्प्राक्संस्कारसहितात् भ्राता भ्रातृ

सहमं स्यात्। उदाहरणम्। भौमात्तनुपं विशोध्य इत्युक्तम्। अत्र लग्नस्वामी भौमोऽस्ति। अतः कारणात् गुरुमध्ये ८।२९।३५।१३ भौमे ८।१४।३२।३६ शोधिते शेषम् ०। १५।२।३७ लग्नयुतं सैकं जातं सामर्थ्यसहमम् २।३।६।३१ गुरुमध्ये ८।२९। ३५।१३ शनौ ६।६।४६।५४ शोधिते शेषम् २।२२।४८।१९। लग्नयुतं सैकं जातं भ्रातृसहमम् ४।१०।५२।१३ ॥ ९ ॥ अथ गौरवराजतातसहमानयनमाह-दिन इति। दिने दिवसे गुरुमध्ये चंद्रः शोध्यः रविर्योज्यः नक्तं रात्रौ गुरुमध्ये रविः शोध्यश्चंद्रयोगः कार्यः उक्तया रीत्या सैकता च कार्या तद्गौरवसहमं भवति यद्यथा शोध्यर्क्षशुद्ध्याश्रयभांतराले क्रमेण दिवारात्रौ सूर्यचंद्रौ नचेत्तदा सैकता कार्येत्यर्थः। दिने वर्षप्रवेशे आर्कः शनिमध्ये अर्कं सूर्यं विशोध्य निशि रात्रौ वामः विपरीतं सूर्यमध्ये शनिमपास्य लग्नयोगः सैकता च कार्या राजतातसहमे भवतः। उदाहरणम्। गुरुमध्ये ८।२९।३५।१३। चंद्रे ५।२२।९।४७। शोधिते शेषम् ३।७।२५।२६। रविणा ९।७।३०।६ युतं सैकं जातं गौरवसहमम् १।१४।५५।३२। शनिमध्ये ६।६।४६।५४। सूर्ये शोधिते ९। ७।३०।६ शेषम् ८।१९।१८।४८। लग्नं युतं जातं राजसहमं ९।७। २२।४२ तातसहमं च ९।७।२२।४२ ॥ १० ॥

**मातेंदुतोपास्य सितं विलोमं नक्तं सुतोऽहर्निशमिंदुमीज्यात् ॥**
**स्याज्जीविताख्यं गुरुमार्कितोह्नि वामं निशीदं सममम्बयाम्बु ॥**
**॥ ११ ॥ कर्मज्ञमारान्निशि वाममुक्तं रोगाख्यमिंदुं तनुतः सदैव ॥ स्यान्मन्मथो लग्नपमिंदुतोऽह्नि वामं निशींदुं तनुपं सदार्कात् ॥ १२ ॥**

अथ मातृपुत्रजीवितांबुसहमानामानयनमाह-मातेति। दिवसे इंदुतश्चंद्रमध्ये सितं शुक्रमपास्य संशोध्य विलोमं नक्तं रात्रौ शुक्रमध्ये चंद्रः शोध्यः लग्नयोगः। सैकता च कार्या तन्मातृसहमं स्यात्। अहर्निशं दिवारात्रौ वर्षप्रवेशे सति गुरुमध्ये चंद्रः शोध्यः लग्नयोगः सैकता च कार्या तत्पुत्रसहमं स्यात् ॥ अथाह्नि दिवसे शनिमध्ये गुरुः शोध्यः इदं निशि वामं गुरुमध्ये शनिः शोध्यः लग्नयोगः सैकता च कार्या तज्जीविताख्यं सहमं स्यात् ॥ अंबया समं च मातुः सहमतुल्यमंबुसहमम्। उदाहरणम्। चंद्रमध्ये ५।२२।९।४७ शुक्रे शोधिते ७।२४।३१।४८ शेषम् ९। २७।३७।५९ लग्नयुतं जाते मातृसहमं १०।१५।४१।५३ गुरुमध्ये चंद्रे शोधिते शेषम् ३।७।२५।२६ लग्नयुतं सैकं जातं पुत्रसहमम् ४।२५।२९।२०। शनिमध्ये गुरौ शोधिते शेषम् ९।७।११।४१ लग्नयुतं जातं जीविताख्यं सहमम्

९।२५।१२।३५ मातुः सहममेवांबुसहमम् १०।१९।४१।५३ ॥ ११ ॥ अथकर्मरोगमन्मथसहमानामानयनमाह–कर्मज्ञामिति । दिवा भौमध्ये बुधः शोध्यः निशि रात्रौ वामं बुधमध्ये भौमः लग्नयोगः शोध्य सैकता च कार्या तत्कर्मसहमं स्यात् । सदैव दिवारात्रौ च तनुतः लग्नमध्ये चंद्रः शोध्यः लग्नयोगः सैकता च कार्या तद्रोगसहमं स्यात् । दिवसे चंद्रमध्ये लग्नस्वामी शोध्यः वामं निशि लग्नस्वामि मध्ये चंद्रः 'शोध्यः लग्नयोगः सैकताच कार्या तन्मन्मथो मदनस्तस्य सहमं स्यात् इंदुतनुपं लग्नस्वामी चंद्रश्चेत्तदाऽहोरात्रमर्काल्लग्नस्वामी चंद्रः शोध्यः लग्नयोगसैकता च कार्या मन्मथसहमं स्यात् । उदाहरणम् । भौममध्ये बुधे शोधिते शेषं ० । २ । १६ । २८ लग्नयुतं सैकं जातं कर्मसहमम् १ । २० । २० । २२ लग्नमध्ये चंद्रे शोधिते शेषं ६ । २५ । ५४ । ७ लग्नयुतं जातं रोगसहमम् ७ । १३ । ५८ । १ चंद्रमध्ये लग्नस्वामिनि भौमे शोधिते शेषं ९ । ७ । ३७ । ११ लग्नयुतं जातं मदनसहमम् ९।२५।४१।५ ॥ १२ ॥

**कलिक्षमेरुतो गुरुतो विशुद्धे कुजो विलोमं निशि पूर्वरीत्या ॥ शास्त्रं दिने सौरिमपास्य जीवाद्वामं निशि ज्ञस्य युतिः पुरावत्॥ ॥ १३ ॥ दिवानिशं ज्ञाच्छशिनं विशोध्य बंध्वाख्यमेतन्निशि बंदकं स्यात ॥ वामं दिवैतन्मृतिरष्टमर्क्षादिंदुं विशोध्योक्तवदार्कियोगात् ॥ १४ ॥**

अथ कलिक्षमाशास्त्रसहमानामानयनमाह– कलिक्षमे इति । दिवा गुरुमध्ये भौमः शोध्यः पूर्वरीत्योति लग्नयोगः सैकता च कार्या तत्कलिसहमं क्षमासहमं च भवतः ॥ दिने गुरुमध्ये शनिः शोध्यः रात्रौ शनिमध्ये गुरुः शोध्यः ज्ञस्य युतिः बुधयोगः कार्यः पुरावदिति शोध्यर्क्षशुद्धचाश्रयांतराले बुधो न चेत्तदा सैकता च कार्या । तच्छास्त्रसहमं स्यात् । उदाहरणम् । गुरुमध्ये भौमे शोधिते शेषम् ० । १५ । २ । ३७ । लग्नयुतं सैकं जातं कलिसहमम् । २ । ३ । ६ । ३१ क्षमासहमं च २ । ३ । ६ । ३१ गुरुमध्ये शनौ शोधिते शेषम् । २ । २२ । ४८ । १९ । बुधयुतं जातं शास्त्रसहमम् ११ । ५ । ४ । २७ ॥ १३ ॥ अथ बंधुबंदकमृत्युसहमानामानयनमाह–दिवानिशमिति । दिवा रात्रौ वर्षप्रवेशे सति बुधमध्ये चंद्रः शोध्यः लग्नयोगः सैकता च कार्या । तद्बंधुसहमं स्यात् । निशि वर्षप्रवेशश्चेदेतद्बंधुसहमं बंदकसहमं स्यात् दिवा वामं विपरीतं चंद्रमध्ये बुधः शोध्यः लग्नयोगः सैकता च कार्या तदा बंदकं स्यात् ॥ दिवारात्रौ वर्षप्रवेशे सति अष्टामर्क्षादष्टमभावमध्ये चंद्रः शोध्यः शनिर्योज्यः उक्तवत्सैकता च कार्या मृतिसहमं स्यात् । उदाहरणम् । बुधमध्ये चंद्रे शोधिते शेषम् २ । २० । ६ । २१ । लग्नयुतं सैकं जातं बंधुसहमम् ४ । ८ । १० । १५ । चंद्रमध्ये बुधे शोधिते शेषम् ९ । ९ । ५३ । ३९ लग्नयुतं जातं बंदकसहमम् ९ ।

२७ । ५७ । ३३ अष्टमभावमध्ये ७ । १३ । ४९ । ३० । चंद्रे शोधिते शेषम् १ । २१ । ३९ । ४३ शनियुतं जातं मृत्युसहमम् ७ । २८ । २६ । ३७ ॥ १४ ॥

**देशांतराख्यं नवमाद्विशोध्य धर्मेश्वरं संततमुक्तवत्स्यात् ॥ अहर्निशं वित्तपमर्थभावाद्विशोध्य पूर्वोक्तवदर्थसद्म ॥ १५ ॥ सितादपास्यार्कमथान्यदाराह्वयं सदा प्राग्वदथान्यकर्म ॥ चंद्राच्छनिं वाममथो निशायां शश्वद्वणिज्यं दिनबंदकोक्त्या ॥ १६ ॥ शनेर्दिवार्कं निशि चंद्रमार्कं विशोध्य सूर्येंदुभनाथ योगात् ॥ स्यात्कार्यसिद्धिः सततं विशोध्य मंदं सितात्स्यात्तु विवाहसद्म ॥ १७ ॥ गुरोर्बुधं प्रोज्झ्य भवेत्प्रसूतिर्वामं निशींदुं शनितो विशोध्यः ॥ षष्ठं क्षिपेदुक्तदिशा सदैव संतापसद्माऽऽरमपास्य शुक्रात् ॥ १८ ॥**

अथ देशांतरार्थसहमयोरानयनमाह-देशांतरेति ॥ सततं दिवारात्रौ वर्षप्रवेशे सति नवमान्नवमभावमध्ये धर्मेश्वरं नवमभावस्वामिनं विशोध्य उक्तवल्लग्नयोगः सैकता च कार्या तद्देशांतरसहमं स्यात् । अहर्निशं दिवारात्रौ वर्षप्रवेशे सति अर्थभावाद्धनभवाद्वित्तपं धनस्वामिनं विशोध्य पूर्वोक्तवल्लग्नयोगः सैकता च कार्या अर्थसहमं स्यात् । उदाहरणम् । नवमभावमध्ये ८ । ९ । २६ । ३८ । नवमभावस्वामिनं गुरुं । ८ । २९ । ३५ । १३ विशोध्य शेषं ११ । ९ । ५१ । २५ लग्नयुतं जातं देशांतरसहमं ११ । २७ । ५५ । १९ धनभावमध्ये १ । १३ । ४९ । ३० धनभावस्वामिनं शुक्रं विशोध्य शेषं ५ । १९ । १७ । ४२ लग्नयुतं जातं द्रव्यसहमम् ६ । ७ । २१ । ३६ ॥ १५ ॥ अथ परदारान्यकर्मवणिक्सहमानामानयनमाह-सितादपास्यार्कमिति । सदाहोरात्रं शुक्रमध्ये सूर्यः शोध्यः प्राग्वदिति लग्नयोगः सैकता च कार्या अन्यदाराह्वयं सहमं स्यात् । अथ दिवसे चंद्रमध्ये शनिं विशोध्य वामं निशायां शनिमध्ये चंद्रः विशोध्यः लग्नयोगः सैकता च कार्या अन्यकर्मसहमं स्यात् । शश्वद्दिवारात्रौ दिने बंदकसहममित्युक्तयारीत्या साध्यं तद्वणिक्सहमं स्यात् । तद्यथा दिवारात्रौ वर्षप्रवेशे सति चंद्रमध्ये बुधः शोध्यः लग्नयोगः सैकता च कार्या वणिक्सहमं स्यात् । उदाहरणम् । शुक्रमध्ये सूर्ये शोधिते शेषम् १० । १७ । १ । ४२ । लग्नयुतं जातं परस्त्रीसहमम् ११ । ५ । ५ । ३६ चंद्रमध्ये शनौ शोधितं शेषम् ११ । १५ । २२ । ५३ ॥ लग्नयुतं जातमन्यकर्मसहमम् ० । ३ । २६ । ४७ । चंद्रमध्ये बुधे शोधिते शेषम् ९।९।५३। ३९ लग्नयुतं जातं वणिक्सहमम् ९।२७।५७।३३ ॥१६॥ अथ कार्यसिद्धिविवाहसहमयोरानयनमाह-शनेरिति । दिवसे शनिमध्येऽर्कं विशोध्य सूर्यराशिस्वामी योज्यः रात्रौ शनिमध्ये चंद्रः शोध्यः

चंद्रराशिस्वामी ग्रहो योज्यः । सैकता च कार्या तत्कार्यसिद्धिसहमं स्यात् । सततं दिवारात्रौ वर्षप्रवेशे सति शुक्रमध्ये शनिः शोध्यः सैकता च कार्या तद्विवाहसहमं स्यात् उदाहरणम् ॥ शनिमध्ये सूर्ये शोधिते शेषं ८।२९।१६।४८ सूर्यराशिस्वामी शनिस्तेन युतं जातं कार्यसिद्धिसहमं ३।६।३।४२ शुक्रमध्ये शनौ शोधिते शेषं १।१७।४४।५४ लग्नयुतं सैकं जातं विवाहसहमम् ३।५।४८।४८ ॥ १७ ॥ अथ प्रसवसंतापसहमयोरानयनमाह गुरोरिति दिवसे गुरुमध्ये बुधः शोध्यः निशि वामं बुधमध्ये गुरुः शोध्यः लग्नयोगः सैकता च कार्या तत्प्रसूतिसहमं स्यात् । सदैव दिवारात्रौ शनिमध्ये चंद्रः शोध्यः षष्ठं क्षिपेत् षष्ठभावो योज्यः उक्तदिशा सैकता कार्या तत्संतापसहमं स्यात् । आरमपास्य शुक्रादित्यग्रिमश्लोकेन संबंधः ॥ उदाहरणम् । गुरुमध्ये बुधे शोधिते शेषम् ०।१७। १९।५ लग्नयुतं सैकं जातं प्रसूतिसहमम् २।५।२२।५९ । शनिमध्ये चंद्रे शोधिते शेषं ०।१४।३७।७ रिपुभावेन ५।१३ ४५।१६ युतं सैकं जातं संतापसहमम् ६।२८। २२।२३॥१८ ॥

**श्रद्धा सदा प्रोक्तदिशाऽथ पुण्यं विद्याख्यतः प्रोज्झ्य सदा पुरोक्त्या ॥ प्रीत्याख्यमुक्तं बलदेहसंज्ञं यशः समे जाड्यमपास्य भौमात् ॥ १९ ॥ शनिर्विलोमं निशि चांद्रयोगाद्व्यापारआराज्ज्ञमपास्य शश्वत् ॥ पानीयपातः शशिनं विशोध्य सौरेर्विलोमं निशि पूर्ववत्स्यात् ॥**

अथ श्रद्धाप्रीतिबलदेहसहमानामानयनमाह श्रद्धेति । सदाहोरात्रं शुक्रमध्ये आरं भौमं विशोध्य । प्रोक्तादिशालग्नयोगः सैकता च कार्या तच्छ्रद्धासहमं स्यात् । सदा दिवारात्रौ विद्यासहममध्ये पुण्यसहमं विशोध्य पुरोक्त्या लग्नयोगः सैकता च कार्या तत्प्रीतिसहमं स्यात् । अथ पूर्वं यद्यशःसहममुक्तं तदेव बलदेहसंज्ञं सहमद्वयं तत्र बल सैन्यं नतु सामर्थ्यं तस्य पूर्वं कथितत्वात् । देहः शरीरम् । जाड्यमपास्य भौमादित्यग्रिमश्लोकेन संबंधः । उदाहरणम् । शुक्रमध्ये भौमे शोधिते शेषं ११ । ९ । ५९।१२ लग्नयुतं जातं श्रद्धासहमं ११ । २८ । ३ । ६ विद्यासहममध्ये पुण्यसहमे शोधिते शेषं ८ । ० । ४० । ३८ लग्नयुतं जातं प्रीतिसहमं ८ । १८ । ४४ । ३२ पूर्वोक्तं यशः सहमं तदेव बलसहमं ० । १४ । ५५ । ३२ देहसहमं च ०।१४।५५।३२ ॥१९॥ अथ जाड्यव्यापारपानीयपातसहमानामानयनमाह—शनिरिति । दिवसे भौममध्ये शनिः शोध्यः चांद्रेर्बुधस्य योगः विलोमं निशि शनिमध्ये भौमः शोध्यः बुधो योज्यः सैकता च कार्या जाड्यसहमं स्यात् । शश्वद्दिवारात्रौ भौममध्ये बुधः शोध्यः लग्नयोगः सैकता च कार्या तद्व्यापारसहमं स्यात् । दिवा शनिमध्ये चंद्रः शोध्यः रात्रौ चंद्रमध्ये शनिः शोध्यः पूर्ववत्स्यादिति लग्नयोगः सैकता च कार्या तत्पानीयपातसहमं

स्यात् । उदाहरणम् । भौममध्ये शनौ शोधिते शेषं २ । ७ । ४५ । ४२ । बुधयुतं जातं जाड्यसहमं १० । २० । ५१ । ५० भौममध्ये बुधे शोधिते शेषं ० । २ । १६ । २८ लग्नयुतं सैकं जातं व्यापारसहमं १ । २० । २० । २२ शनिमध्ये चंद्रे शोधिते शेषं ० । १४ । ३७ । ७ लग्नयुतं सैकं जातं पानीयपातसहमम् २।२।४१।१ ॥ २० ॥

**मंदं कुजात्प्रोज्झ्य रिपुर्विलोमं रात्रौ भवेद्भौमविहीनपुण्यात् । शौर्यं विलोमं निशि पूर्ववत्स्यादुपाय इज्यं शनितो विशोध्य ॥ २१ ॥ वामं निशि ज्ञं तु विशोध्य पुण्याज्ज्ञयुग्विलोमं निशि तद्दरिद्रम् ॥ सूर्योच्चतः सूर्यमपास्य नक्तं चंद्रं तदुच्चाद्गुरुता पुरोक्त्या ॥ २२ ॥**

अथ शत्रुशौर्योपायसहमानामानयनमाह-मंदमिति । दिवसे भौममध्ये शनिः शोध्यः रात्रौ विलोमं शनिमध्ये भौमः शोध्यः लग्नयोगः सैकता च कार्या तद्रिपुसहमं स्यात् । दिवसे पुण्यसहममध्ये भौमः शोध्यः रात्रौ भौममध्ये पुण्यसहमं शोध्यं पूर्ववत्स्यादिति लग्नयोगः सैकता च कार्या शौर्यसहमं भवति ॥ उपाय इज्यं शनितो विशोध्य इत्यादिमश्लोकेन संबंधः । उदाहरणम् । भौममध्ये शनौ शोधिते शेषं । २ । ७ । ४५ । ४२ । लग्नयुतं सैकं जातं शत्रुसहमम् ३ । २५ । ४९ । ३६ पुण्यसहममध्ये भौमे शोधिते शेषम् ० । १८ । १० । ५९ । लग्नयुतं सैकं जातं शौर्यसहमम् २ । ६ । १४ । ५३ ॥ ॥ २१ ॥ अथ दरिद्रगुरुतासहमयोरानयनमाह-वाममिति । दिवसे शनिमध्ये ईज्यो गुरुः शोध्यः रात्रौ गुरुमध्ये शनिः शोध्यः लग्नयोगः सैकता च कार्या तदुपायसहमं स्यात् ॥ दिवसे पुण्यसहममध्ये बुधः शोध्यः बुधयोगः कार्यः रात्रौ बुधमध्ये पुण्यसहमं शोध्यं बुधयुक्तं कार्यं सैकता च कार्या तद्दरिद्रसहमं स्यात् ॥ दिवसे सूर्योच्चमध्ये सूर्यः शोध्यः नक्तं रात्रौ चंद्रोच्चमध्ये चंद्रः शोध्यः पुरोक्त्या लग्नयोगः सैकता च कार्या तद्गुरुतासहमं स्यात् । उदाहरणम् ॥ शनिमध्ये गुरौ शोधिते शेषं ९ । ७ । ११ । ४१ । लग्नयुतं सैकं जातमुपायसहमं ९ । २५ । १५ । ३५ । पुण्यसहममध्ये बुधे शोधिते शेषम् ० । २० । २७ । २७ । बुधयुतं जातं दारिद्र्यसहम ९ । २ । ४३।३५। सूर्योच्चमध्ये० । १० सूर्ये शोधिते शेषं ३ । २ । २९ । ५४ लग्नयुतं सैकं जातं गुरुतासहमम् ४ । २० । ३३ । ४८ ॥ २२ ॥

**कर्कार्द्धतः ३ । १५ प्रोज्झ्य शनिं स्याल्लब्ध्वान्यथा।नि।शि ॥ पुण्याच्छनिं विशोध्याऽह्नि वामं निशि तु बंधनम् ॥ २३ ॥ चंद्रः सितादपास्योक्तं सदा कन्यालग्नयुक्तवत् ॥ पुण्यादर्कमपास्यायायोगाद्दश्वोऽन्यथा निशि ॥ २४ ॥**

| पुण्य १ | गुरु २ | विद्या ३ | यश ४ | मित्र ५ | माहा. ६ | आशा ७ | साम. ८ | भ्राता ९ | गौरव १० | राज ११ | तात १२ | माता १३ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ९ | ५ | ५ | ० | ३ | २ | ११ | ५ | ४ | १ | ९ | ९ | १० |
| २ | ३ | ३ | १४ | ५ | ६ | ० | ३ | १० | १४ | ७ | ७ | १५ |
| ४३ | २४ | २४ | ५५ | १२ | १४ | १९ | ६ | ५२ | ५५ | २२ | २२ | ४१ |
| ३५ | १३ | १३ | ३२ | २६ | ५३ | ० | ३१ | १३ | ३२ | ४२ | ४२ | ५३ |

| सुत १४ | जीव १५ | अंबु १६ | कर्म १७ | रोग १८ | मद १९ | कला २० | क्षमा २१ | शास्त्र २२ | बंधु २३ | बंदक २४ | मृत्यु २५ | देशांत. २६ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ४ | ९ | १० | १ | ७ | ९ | २ | २ | ११ | ४ | ९ | ७ | ११ |
| २५ | २५ | १५ | २० | १३ | २५ | ३ | ३ | ५ | ८ | २७ | २८ | २७ |
| २९ | १५ | ४१ | २० | ५८ | ४९ | ६ | ६ | ४ | १० | ५७ | २६ | ५५ |
| २० | ३५ | ५३ | २२ | १ | ५ | ३१ | ३१ | २७ | १५ | ३३ | ३७ | १९ |

| धन २७ | अन्यस्त्री २८ | अ:क २९ | वणि. ३० | का० ३१ | विवाह ३२ | प्रसूति ३३ | संताप ३४ | श्रद्धा ३५ | प्रीति ३६ | बलसै० ३७ | देह ३८ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ६ | ११ | ० | ९ | ३ | ३ | २ | ६ | ११ | ८ | ० | ० |
| ७ | ५ | ३ | २७ | ६ | ५ | ५ | २८ | २८ | १८ | १४ | १४ |
| २१ | ५ | २६ | ५७ | ३ | ४८ | २२ | २२ | ३ | ४४ | ५५ | ५५ |
| ३६ | ३६ | ४७ | ३३ | ४२ | ४८ | ५९ | २३ | ६ | ३२ | ३२ | ३२ |

| जाड्य ३९ | व्यापार ४० | पानीय ४१ | शत्रु ४२ | शौर्य ४३ | उपाय ४४ | दरिद्र ४५ | गुरुता ४६ | जल ४७ | बंध ४८ | कन्या ४९ | अश्व ५० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १० | १ | २ | ३ | २ | ९ | ९ | ४ | ९ | ४ | ३ | १० |
| २० | २० | २ | २५ | ६ | २५ | २ | २० | २६ | १४ | २० | ४ |
| १ | २० | ४१ | ४९ | १४ | १५ | ४३ | ३३ | १७ | ० | २५ | ४० |
| ५० | २२ | १ | ३६ | ३६ | ३५ | ३५ | ४८ | ० | ३५ | ५५ | ७ |

अथ जलपथबंधनसहमयोरानयनमाह–कर्कार्द्धत इति । दिवा कर्कार्द्धतः सार्द्धराशित्रयमध्ये ३ । १५ शनिं संशोध्य अन्यथा निशि रात्रौ शनिमध्ये सार्द्धराशित्रयं ३ । १५ विशोध्य लग्नयोगः सैकता च कार्या । जलाध्वा जलपथसहमं स्यात् । अह्नि दिवसे पुण्यसहममध्ये शनिः शोध्यः रात्रौ शनिमध्ये पुण्यसहमं शोध्यं लग्नयोगः सैकता च कार्या तद्बंधनसहमं स्यात् । उदाहरणम् । सार्द्धराशित्रयमध्ये ३ । १५ शनौ शोधिते शेषं ९ । ८ । १३ । ६ लग्नयुतं जातं जलपथसहमं ९।२६।१७।०। पुण्यसहममध्ये शनौ शोधिते शेषं ।२।२५।५६।४१ लग्नयुतं सैकं जातं बंधनसहमम्.४।१४।०।३५ ॥ २३ ॥ अथ कन्याश्वसहमयोरानयनमाह–चंद्र इति । सदा दिवा रात्रौ शुक्रमध्ये चंद्रः शोध्यः उक्तवदिति लग्नयोगः सैकता च कार्या तत्कन्या सहमं स्यात् । दिवसे पुण्यसहममध्ये सूर्यः शोध्यः रात्रौ सूर्यमध्ये पुण्यसहमं शोध्यम् । आयभावः एकादशभावो योज्यः सैकता च कार्या तदश्वसहमं स्यात् । उदाहरणम् । शुक्रमध्ये चंद्रे शोधिते शेषं २ । २ । २२ । १ लग्नयुतं सैकं जातं कन्यासहमं ३

२० । २९ । ५५ पुण्यसहममध्ये सूर्ये शोधिते शेषम् ११ । २५ । १३ । २९ एकादशभावेन १० । ९ । २६ । ३८ । युतं ,जातमश्वसहमं १० । ४ । ४० । ७ अस्मिन् सहमद्वये संमतिर्नास्ति समरसिंहेनानुक्तत्वात् ॥ अस्मिन् संज्ञातंत्रे शोध्यशोधकयोर्मध्ये लग्नं चेन्न भवति तदा सहमे एको राशिर्योज्यः इत्युक्तमस्ति । तर्हि अत्रार्थे संमतिवाक्यं कुत्रापि न लभ्यते । यवनानां मतेपि सैकता नास्ति । समरसिंहे ' लग्नद्वितीयभवनात्' इत्यपि पाठस्तिष्ठति । अस्मिन् पाठे सैकता समायाति । अत्र ग्रंथकर्त्रा लग्नद्वितीयभवनादिति पाठं धृत्वा सहमेषु सैकतोक्ता परंतु समरसिंहे तथा यवनताजिके तथा मनुष्यताजिके लग्नाद्द्वितीयभवनादित्येव पाठोस्ति । अस्मिन्पाठे सैकता नास्ति । एवं पुरस्कृत्य सर्वैराचार्यैः सहमेषु सैकता नोक्ता । अत्रोदाहरणम् । यदाह समरसिंहः–"दिवसे दिनपतिभोग्याच्छशिभुक्तानंशकान्संमील्य । अंतःस्थितराशियुतांस्त्रिंशत्प्रत्येकतः कृत्वा ॥ १ ॥ यद्यंतरराश्यंतर्न भवति लग्नं तदाऽस्य भुक्तांशाः । मध्ये क्षेप्या मध्यास्थिते तु भोग्यांशकाः पात्याः ॥ २ ॥ लग्नाद्द्वितीयभवनात्त्रिंशत्प्रत्येकतः शोधिते यत्र । विश्राम्यति तत्रर्क्षे विज्ञेयं पुण्यसहमम् ॥ ३ ॥ " इति । दिवसे वर्षप्रवेशे सति सूर्यस्य राशिं त्यक्त्वा अंशादिकं स्थाप्यम् । अंशास्त्रिंशदंशमध्ये शोध्याः कलादिकं षष्टिमध्ये शोध्यमंशादिकं यदवशिष्टं तद्भोग्यं तन्मध्ये चंद्रराशिं त्यक्त्वा अंशादिकं योज्यं तदनंतरं सूर्याधिष्ठितराशेः सकाशादग्रिमो यो राशिस्तस्माद्गणनया यत्संख्याकश्चंद्राधिष्ठितराशेः सकाशात्पूर्वराशिर्भवति तावत्यः संख्याः पूर्वानीतांशोपरि स्थाप्याः । तदनंतरं प्रत्येकतः कृत्वा त्रिंशत्प्रत्येकं प्रत्येकमिति त्रिंशत्प्रत्येकतः राशीनामंशाः कार्याः । अधःस्थांशयुताः तदनंतरं सूर्यराशेः सकाशाचंद्रराशिर्यावदनयोर्मध्ये लग्नराशिश्चेन्न भवति तदा लग्नस्य राशिं त्यक्त्वांऽशा योज्याः । अनयोर्मध्ये लग्नराशिश्चेद्भवति तदा लग्नस्य भोग्यांशाः शोध्याः तदनंतरं यदास्य भुक्तांशा युक्तास्तदा लग्नाद्गणनाक्रमः । यदा लग्नस्य भोग्यांशाः शोधिताः तदा धनभावाद्गणनाक्रमः अनया रीत्या गणनायां प्रतिराशौ त्रिंशत्त्रिंशच्छोधिते यस्मिन् राशौ त्रिंशन्न शुध्यति तस्मिन् राशौ पुण्यसहमं ज्ञेयम् । लग्नद्वितीयभवनादिति पाठे सूर्यचंद्रयोर्मध्ये लग्नं न भवति । अथवा भवति तदा धनभवनादेव गणनाक्रमः नतु लग्नात् । उदाहरणम् । सूर्यः ९ । ७ । ३० । ६ चंद्रः ५ । २२ । ९ । ४७ लग्नं ० । १८ । ३ । ५४ सूर्यस्य भोग्यांशमध्ये २२ । २९ । ५४ चंद्रस्य भुक्तांशाः २२ । ९ । ४७ युक्ताः जाताः ४४ । ३९ । ४१ सूर्यचंद्रयोरंतरालराशिभिर्युक्ता जातोऽयमंको राश्यादिः ३ । १४ । ३९ । ४१ अस्यांशाः १०४ । ३९ । ४१ सूर्यचंद्रयोर्मध्ये लग्नं नास्ति इति कारणाल्लग्नस्य भुक्तांशैः १८ । ३ । ५४ युक्ता जाताः १२२ । ४३ । ३५ लग्नात्त्रिंशत्प्रत्येकतः शोधिते जातं सिंहराशौ पुण्यसहमं ४ । २ । ४२ । ३५ धनभवनात्त्रिंशत्प्रत्येकतः शोधिते जातं कन्या-

राशौ पुण्यसहमम् ५ । २ । ४२ । ३५ । अनया रीत्या सैकता समायाति । एवं पाठयोर्विवादः लग्नाद्द्वितीयभवनादिति पाठे एतावती युक्तिरस्ति । यदा लग्नस्य भुक्तांशाः युक्तास्तदा लग्नस्य भोग्यमवशिष्टमिति कारणाल्लग्नाद्गणनाक्रमः तत्र लग्नसंबंधस्तिष्ठति यदा लग्नस्य भोग्यांशाः शोधितास्तदा लग्नसंबंधो नास्ति इति कारणाद्धनभवनाद्गणनाक्रमः अत्र लग्नशेषं किमपि नास्ति एतावती युक्तिरस्ति सर्वग्रंथेषु संमतिरस्ति संमतेरभावाल्लग्नद्वितीयभवनादित्यपि पाठः । तथा चोक्तं मनुष्यजातके "भोग्याद्युक्तममूनि यावदखिलान्यंतर्भयुक्तान्यतो लग्ने बाह्यगतेऽस्यभुक्तसहितं भोग्योनमंतः स्थिते । कृत्वा राशिमपासिते स्वदहनैर्लग्नाद्द्वितीयाच्च तत्पुण्याद्यानि भवंति तत्र सहमान्यंशे विरामो यतः ॥ " २४ ॥

**स्वनाथहीनं सहमं तदंशाः स्वीयोदयघ्ना विहृतास्त्रिशत्या ॥ तत्सद्मपाको दिवसैर्हि लब्धैः स्यात्तद्दशायां तदसंभवे वा ॥ २५॥ स्वोच्चादिसत्पदगतो यदि लग्नदर्शी वीर्यान्वितः सहमपो यदि नेक्षतेऽङ्गम् ॥ नासौ बली रविशशी श्रितभेशदर्शी पूर्णातलग्नपबलस्य विचारणेत्थम् ॥ २६ ॥**

अथ सहमोत्पत्तिमभिधाय तत्फलान्यभिधास्यमानो वर्षप्रवेशात्कतिदिवसैः सहमफलावाप्तिः स्यादित्याकांक्षां परिहरंस्तत्प्राप्तिदिवसानयनमाह–स्वनाथहीनमिति । यस्य सहमस्य शुभाशुभफलावाप्तिदिवसा ज्ञातुमिष्टास्तत्सहमराश्यादिके कर्मभूमौ स्थाप्यम् । स्वनाथेन स्वीयस्वामिना ग्रहेण हीनमूनं कार्यमवशिष्टस्यांशाः कार्यास्ते तत्सहमाक्रांतराशिस्वीयोदयेन विनिघ्नाः त्रिंशत्या शतत्रयेण विहृता भक्ता यल्लब्धा दिवसास्तैः कृत्वा तेषां सद्मनामसहमानां पाकः फलपाककालः स्यात् । अत्रागतैर्दिवसैः त्रिंशद्भक्तैः वर्षप्रवेशकालिको राश्यादिः स्पष्टसूर्ययुक्तस्तावति सूर्ये भुक्ते सति तत्सहमस्य फलपाककालो भवतीति केचित्तु सहमेश्वरमहादशाप्रवृत्तिदिनादेव तावद्भिरानीतैर्दिवसैस्तद्दशायामन्यदशायां वा फलपाक इति । ननु सहमसहमेश्वरयोर्यदा राश्यादिसाम्यं स्यात्तदंतराभावादेव तत्सहमदिवसलब्धौ कथं सहमफलादिज्ञानं न स्यादित्यत आह–तद्दशायामिति । सत्यं तदसंभवे वा अंतराभावाद्दिवसाप्राप्तौ सत्यां तत्सहमनाथदशायामेव सहमफलप्राप्तिः स्यात् तत्रापि सूक्ष्मकालज्ञानं त्वंतर्दशायां वा विदशायां वा स्यादिति निष्कर्षः । उदाहरणम् । पुण्यसहमम् ५।५।२५।१ स्वस्वामिना बुधेन ३।६।१४।१२ हीनं शिष्टम् १। २९।१०।४९ अस्यांशाः ५९।१०।४९ कन्यास्थसहममिति कन्योदयेन ३३५ गुणितं जातं १९८२५।२३।३५ त्रिंशत्या ३०० भक्तं लब्धा दिवसाः ६६ घट्यः ५ पलानि ४ वर्षप्रवेशदिवसादेतावत्सु दिनेष्वतीतेषु पुण्यसहमफलपाकः । अथक पुण्यसह-

माधीशं बुधमहादशायां बहुदिनवत्यां बुधमहादशाप्रवेशादिनादेतावत्सु दिनेष्वतीतेषु पुण्यसहमफलपाकः यद्यल्पदिनत्व वा यदा वा सहमेश्वरः ॥ २५ ॥ अथ सहमानां फलानि व्याख्यायंते-स्वोच्चादीति । सहमपः सहमराशिस्वामी स्वोच्चादिस्वगृहस्वोच्चस्वहद्दास्वत्रैराशिकस्वमुसल्लह एतत्स्थानस्थः सन् अथवा सत्पदगतः शुभस्थानस्थः सन् उपलक्षणत्वान्मित्रगृहगतः सुहृत्सौम्यदृष्टो युतो वा यदि लग्नदर्शी लग्नं पश्यति तदा वीर्यान्वितः वीर्येण बलेनान्वितो युक्तः बलीत्यर्थः । सहमस्वामी स्वोच्चादिसत्पदगतः सन् यदि अंगं लग्नं नेक्षते न पश्यति तदा असौ बली न भवति निर्बल इत्यर्थः । रविशशीति । रविशशिभ्यामाश्रिते ये भे राशी तयोः राश्योः ईशौ स्वामिनौ तद्यथा । जन्मकाले सूर्यो यस्मिन् राशावस्ति तद्राशिस्वामी तथा जन्मकाले चंद्रो यस्मिन् राशावस्ति तद्राशिस्वामी । जन्मकालादतीतागतामावास्या यावद्घटीपरिमिताऽस्ति तस्मिन्काले तात्कालिकसूर्यात् लग्नं साध्यं तत्स्वामी तथा जन्मकालातीतपूर्णांतलग्नस्वामी । एतेषां चतुर्णां बलस्यैवं विचारः हिल्लाजे आयुर्दायानयने तथा मनुष्यजातके आयुर्दायानयने एतेषां बलविचारस्योपयोगः प्रकृते अत्र प्रयोजनाभावेऽपि प्रसंगादुक्तम् ॥ २६ ॥

**पंचवर्गीबलेनोनो न हर्षस्थानमाश्रितः ॥ अबलोऽयं लग्नादर्शी बलीस्वल्पेऽस्ति चेत्पदे ॥ २७ ॥ स्वस्वामिना शुभखगैः सहितं च दृष्टं स्वामी बली च यदि तत्सहमस्य वृद्धिः ॥ यत्स्वामिना शुभखगैश्च न युक्तदृष्टं तत्संभवो न हि भवेदिति चिंत्यमादौ ॥ २८ ॥ अष्टमाधिपतिना युतेक्षितं पापदृग्युतमथेत्थशालितैः ॥ संभवेऽपि विलयं प्रयाति तत्तेन जन्मानि पुरेदमीक्ष्यताम् ॥ २९ ॥ आदौ जन्मनि सर्वेषां सहमानां बलाबलम् ॥ विमृश्य संभवो येषां तानि वर्षे विचिंतयेत् ॥ ३० ॥**

अथ निर्बलसबलत्वलक्षणमाह-पञ्चवर्गीति । पंचवर्गीबलं प्रागुक्तं तेन ऊनः शरोनो हीनबल इत्युक्तः । नंदत्रिषडित्यादिचत्वारिहर्षस्थानानि प्र[illegible]क्तानि । तन्मध्ये एकमपि हर्षस्थानं नाश्रितः । तथा लग्नादर्शी लग्नमपि चेन्न पश्यति तदा अयं ग्रहः अबलः निर्बलो ज्ञेयः चेत्स्वल्पे पदेऽस्ति तदाबली । तद्यथा । स्वगृहस्वोच्चस्थाने ग्रहे सति महाधिकारः स्वहद्दायां ग्रहे सति मध्यमोऽधिकारः । स्वत्रैराशिके स्वमुसल्लहे ग्रहे सति स्वल्पोऽधिकारः । अत एव प्राज्ञैर्बलतारतम्यमुक्तम्-'त्रिंशत्स्वभे विंशतिरात्मतुंगे" इत्यादि । पदं स्थानमेवं स्वल्पेपि पदे त्रैराशिकमुसल्लहाख्ये स्थाने स्थितः सन् लग्नं पश्यति । तदा बली ग्रहो ज्ञेयः ॥ २७ ॥ एवं सहमाधिपस्य बलाबलं ज्ञात्वेदानीं सहमस्य वृद्धिह्रासावाह-स्वस्वामिनेति । यत्सहमं स्वस्वामिना सहितं दृष्टं वा अथवा शुभग्रहैः सहितं दृष्टं वा

भवति यदि प्रागुक्तप्रकारेण सहमस्वामी बली स्यात् तदा तत्सहमस्य वृद्धिः फलदातृत्व सामर्थ्यं स्यात्। यत्सहमं चेत्स्वामिना अथवा शुभग्रहैर्न युक्तं न दृष्टं तदा तत्सहमस्य न संभवः फलदातृत्वसामर्थ्यं न भवेत् नाम सदृशं फलं न ददातीत्यर्थः। इत्यादौ प्रथमतः श्चित्यं विचार्यम् ॥ २८ ॥ अथान्यत्सहमासंभवलक्षणमाह—अष्टमेति। यत्सहमं वर्षलग्नादष्टमाधिपतिना अष्टमराशिस्वामिना युतमीक्षितं दृष्टं वा अथवा पापग्रहेण दृष्टं युतं वा। अथवा तैरष्टमराशिस्वामिना पापग्रहैर्वा इत्थशालिमुथशिलं करोति तदा स्वस्वामिना शुभखगैः सहितमित्यादि सहमस्य फलप्राप्तिसंभवेऽपि विलयं नाशं याति। सहमं नाम सदृशं फलं न ददातीत्यर्थः। तेन कारणेन जन्मनि जन्मकाले प्रथमतः इदं सहमस्य बलाबलमीक्ष्यतां विचार्यताम् ॥ २९ ॥ अथबलिष्ठसहमस्य साधनं निर्बलस्य निराकारणामित्यत आह—आदाविति। आदौ प्रथमतः जन्मनि जन्मकाले सर्वेषां पंचाशत्सहमानां बलाबलं विमृश्य ज्ञात्वा येषां फलप्राप्तिसंभवस्तानि वर्षे विचिंतयेत्। येषां तु सहस्वामिनां सर्वप्रकारेण नैर्बल्यं ज्ञातं तानि वर्षे कदापि न विचारयेदित्यर्थः ॥ ३० ॥

**सबले पुण्यसहमे धर्मसिद्धिर्धनागमः ॥ शुभस्वामीक्षितयुते व्यत्यये व्यत्ययं विदुः ॥ ३१ ॥ लग्नात्षष्ठाष्टरिःफस्थं धर्मभाग्ययशोहरम् ॥ शुभस्वामिदृशा प्रांते सुखधर्मादिसंभवः ॥ ३२॥ पापयुक्शुभदृष्टं चेदशुभं प्राक्ततः शुभम् ॥ शुभयुक्तं पापदृष्टमादौ शुभमसत्परे ॥ ३३ ॥**

एवमुक्तप्रकारेण सहमानां सबलत्वे सति फलदातृत्वमुक्तमिदानीं समस्तसहमानां फलानि उच्यंते। तत्रादौ पुण्यसहमस्य फलमाह—सबल इति। सबले पुण्यसहमे सति शुभग्रहैः स्वामिना च दृष्टे युते सति धर्मस्य सिद्धिर्धनागमः धनप्राप्तिः। व्यत्यये सहमस्य निर्बलत्वे सति पापग्रहदृष्टियुते सति व्यत्ययं धर्मनाशःनाशधनश्चेति फलं विदुः वदंति॥ ३१॥ अथास्याशुभफलं सापवादमाह—लग्नादिति। वर्षलग्नात्षष्ठाष्टमद्वादशस्थानस्थं पुण्यसहमं यदा भवति तदा भवति तदा धर्मभाग्ययशसां नाशकं भवेत्। एतत्स्थानास्थितं सत् शुभग्रहेण स्वामिना वा दृष्टं तदा प्रांते वर्षांते सुखधर्मादिसंभवः प्राप्तिः स्यात्। अर्थाद्वर्षपूर्वार्द्धे अशुभफलम् ॥ ३२ ॥ अथ पापशुभग्रहसंबंधेन युतिदृष्ट्योः फलमाह—पापयुगिति। तत्पुण्यसहमं पापयुक्तं शुभदृष्टं च चेद्भवति तदा प्राक् पूर्वार्द्धे अशुभं भवेत्। वर्षस्योत्तरार्द्धे शुभं स्यात्। यदा तु पुण्यसहमं शुभयुक्तं पापदृष्टं चेत्तदादौ वर्षपूर्वार्द्धे शुभं स्यात्। परे वर्षस्योत्तरार्द्धे असत् अशुभं स्यात्। यदा तु पापयुक्तं पापदृष्टं चेत्तदा संपूर्णं वर्षमशुभं भवेत्। यदा तु शुभग्रहयुक्तं शुभग्रहदृष्टं चेत्तदा संपूर्णवर्षपर्यंतं शुभफलं भवतीत्यर्थतः सिद्धम् ॥ ३३ ॥

यत्राब्दे पुण्यसहमं शुभं सोऽत्र शुभावहः ॥
अनिष्टेऽस्मिञ्छुभो नेति पुण्यमादौ विचारयेत् ॥ ३४ ॥

अथ पुण्यसहमप्रशंसामाह-यत्राब्द इति । यत्राब्दे यस्मिन् वर्षे पुण्यसहमं शुभं शुभफलजनकं सोऽब्दः शुभावहः । तद्वर्षं शुभफलदं ज्ञेयमित्यर्थः । यस्मिन् वर्षे पुण्यसहमे अनिष्टे सति तदा शुभो नेति शुभफलं वर्षमध्ये न ददातीत्यर्थः । अशुभमेव ददातीत्यतः कारणात् पुण्यसहममादौ प्रथमतः विचारयेत् ॥ ३४ ॥

सूतौ षष्ठाष्टरिःफस्थे मध्ये पापाहतं पुनः ॥ पुण्यं धर्मार्थसौख्यघ्नं पत्यौ दग्धे फलं तथा ॥ ३५ ॥ सहमान्यखिलानीत्थं सूतौ वर्षे विचिंतयेत् ॥ मांद्यारिकलिमृत्यूनां व्यत्ययादादिशेत्फलम् ॥ ३६ ॥ कार्यसिद्धिसहमं युतं शुभैर्दृष्टमूथशिलगं जयप्रदम् ॥ संगरेऽथ शुभपापदृष्टियुक् क्लेशतो जय उदीरितो बुधैः ॥ ३७ ॥ कालिझमिश्रखगदृष्टिसंयुतं यदि पापमूथशिलगं कलेर्मृतिम् ॥ अथ तत्र सौम्यसहितावलोकिते जयमेति मिश्रदृशितः कलिव्यथे ॥ ३८ ॥

अथ पुण्यसहमस्य जन्मलग्ने त्वनिष्टस्थानस्थितस्याशुभफलमाह-सूताविति । सूतौ जन्मसमयलग्ने षष्ठाष्टरिःफस्थे रिःफशब्देन द्वादशस्थानमेतत्स्थानास्थितं चेत्पुण्यं पुण्यसहमं भवति । अब्दे वर्षे पुनः पापहतं पापयुतं दृष्टं वा तदा धर्मार्थसौख्यानां घातकं भवति पत्यौ पुण्यसहमस्वामिनि दग्धेऽस्तंगते तथा फलं धर्मार्थसौख्यानां घातकं भवति ॥ ३५ ॥ सहमानीति । अखिलानि समग्राणि सहमानि इत्थममुना प्रकारेण सूतौ जन्मलग्ने वर्षे च चिंतयेत् । मांद्यं रोगः । अरिः शत्रुः । कलिः झकटकः । मृत्युः प्रसिद्धः अशुभसहमस्योपलक्षणत्वाद्दारिद्र्यसहममपि । अतएव ग्रंथकर्ता अग्रे वक्ष्यति । 'दारिद्र्यमृतिमांद्यारिकालिषूक्तो विपर्यय' इति एषु सहमेषु व्यत्ययात्पुण्यसहमफलाद्विपरीतं फलमादिशेत् । तद्यथा । पुण्यसहमवत् स्वोच्चादिसत्पदगतो यदि लग्नदर्शीत्येतच्छ्लोकमारभ्य सूतौ षष्ठाष्टरिःफस्थमित्येतावत्पर्यंतंविचारे क्रियमाणे यदि मांद्यारिकलिमृत्यूनां सहमानां शुभफलमागतं तदा अशुभफलं वाच्यम् । यदि त्वशुभफलमागतं तदा शुभफलं वाच्यमित्यर्थः ॥ ३६ ॥ अथ कार्यसिद्धिसहमस्य शुभाशुभफलमाह-कार्यसिद्धीति । कार्यसिद्धिसहमं शुभैः शुभग्रहैर्युतं दृष्टं वा तथा शुभग्रहैर्मुथशिलश्चेत्कृतस्तदा संगरे संग्रामे जयप्रदं शत्रुनाशः स्वोत्कर्षश्च भवतीत्यर्थः । अथेत्यनंतरं तत्कार्यसिद्धिसहमं शुभपापग्रहदृष्टं युक्तं वा तदा क्लेशतोऽत्यायासेन बुधैः पंडितैर्जय उदीरितः

कथितः । संगर इत्युपलक्षणं विवादादेरपि ॥ ३७ ॥ अथ कालिसहमस्य शुभाशुभफलमाह—कलीति । कलिः झकटकस्तस्य सहमं मिश्रखगैः शुभपापग्रहैर्दृष्टं संयुतं वा न भवति । तथा । यदि पापमुथशिलगं पापग्रहकृतमुथशिलयोगश्चेद्भवति । तदा कलेः कलहप्रसंगान्मृतिमरणं प्राप्नोति । अथेत्यनंतरं तत्र कलिसहमे सौम्यैः शुभग्रहैः सहिते युक्तेऽवलोकिते दृष्टे वा सति कलौ कलहे जयमेति स्वोत्कर्षं प्राप्नोति । यदि मिश्रदृशितः शुभपापग्रहदृष्टिश्चेद्भवति । तदा कालिव्यथे कलिश्च व्यथा च कलिव्यथे कलिः कलहः व्यथा दुःखं च ते भवतः ॥ ३८ ॥

**विवाहसद्माधिपसौम्यदृष्टं युतं शुभैर्मूथशिलं शुभाप्तिम् ॥**
**कुर्याद्यदामिश्रसमेतदृष्टं कष्टादथ क्रूरमृतीश्वरैर्न ॥३९॥ यशोधिपे नैधनगे खलेन युतेक्षिते सद्यशसो विनाशः ॥ पापार्जितस्यायशसोऽस्ति लाभो नष्टौजसि स्यात्कुलकीर्तिनाशः॥४०॥**
**शुभेत्थशाले शुभदृग्युते वा बलान्विते स्याद्यशसोऽभिवृद्धिः ॥**
**युद्धे जयो वाहनशस्त्रलाभः पापेसराफादयशोर्थनाशः ॥ ४१ ॥**
**आशा तदीशश्च षडष्टरिःफविवर्जितः सौम्ययुतोक्षितश्च ॥ स्याद्वांछितार्थाबरवाहनादिलाभः खलेक्षायुतितोऽतिदुःखम् ॥ ४२ ॥**

अथ विवाहसहमस्य शुभाशुभफलमाह—विवाहेति । विवाहसद्मसहममधिपेन स्वामिना युतं दृष्टं वा । तथान्यैर्वा सौम्यैः शुयग्रहैर्दृष्टं युक्तं वा स्यात्तथा शुभैर्मुथशिलं शुभैः शुभग्रहकृतमुथाशिलयोगश्चेत्तदा शुभाप्तिं विवाहप्राप्तिं कुर्यात् । यदा मिश्रसमेतदृष्टं मिश्रैः शुभाशुभग्रहैः युक्तं दृष्टं वा चेत्तदा कष्टात् क्लेशेन विवाहप्राप्तिं कुर्यात् । अथ क्रूरैः पापैः विवाहसहमं युतं दृष्टं वा मुथशिलीकृतं वा तथा मृतीश्वरेण वर्षलग्नाद्विवाहसहमाद्वा अष्टमस्थानाधीश्वेरण युतं दृष्टं वा मुथशिलीकृतं वा स्यात्तदा न तस्मिन् वर्षे विवाहो नैव भवेत् ॥ ३९ ॥ अथ यशःसहमस्याशुभफलमाह—यश इति । यशोधिपे यशःसहमस्वामिनि नैधनगेऽष्टमस्थानगते खलेन पापग्रहेण युते दृष्टे वा सति अनेककालार्जितस्य सद्यशसो विनाशः स्यात् । किंतु पापसंबंधेनार्जितस्यायशसोऽस्ति लाभः । तादृशेऽष्टमस्थिते सति पुनर्नष्टौजसि अस्तंगते सति कुलकीर्तिनाशः स्यात् ॥ ४० ॥ अथ पुनरपि यशःसहमस्य शुभाशुभफलमाह—शुभेति । यशःसहमपतिना सह शुभेत्थशाले शुभग्रहेण साकं मुथाशिलयोगे सति शुभदृग्युते वा सति बलान्विते बलिष्ठे सति यशसोऽभिवृद्धिः स्यात् । तथा युद्धे जयः स्यात् । तथा वाहनानां गजाश्वादीनां शस्त्राणां च लाभः स्यात् । तथा यशःसहमपतेः पापग्रहेण सह ईसराफयोगे सति अयशोर्थनाशश्च स्यात ॥ ४१ ॥ अथाशासहमस्य शुभाशुभफलमाह—आशेति । आशासहमं

लग्नात् षष्ठाष्टमरिःफवर्जितमेतत्स्थानस्थितं न भवति। तथा तदीशश्च आशासहमाधिपतिश्च एतत्स्थानविवर्जितो भवति। द्वयमपि सौम्यैः शुभग्रहैर्युतैरीक्षितौ दृष्टौ वा स्यातां तदा वाञ्छितानामर्थानां सुवर्णादिद्रव्याणामंबराणां वस्त्राणां वाहनादीनां च लाभः स्यात्। खलेन पापग्रहेण दृष्टे युते सति तदा वाञ्छितार्थादीनामपि दुःखम्॥४२॥

**मांद्याधिपः पापयुतेक्षितश्च पाप स्वयं रोगयशोविचिन्त्यः॥ चेदित्थशाली मृतिपेन मृत्युस्तदा भवेद्धीनबलेतिकष्टात्॥ ४३॥ स्वस्वामिसौम्येक्षणभाजि मांद्ये नाथे सवीर्येऽष्टषडंत्यवर्जे॥ रोगस्तदा नैव भवेद्विमिश्रं युतेक्षिते रुग्भयमस्ति किंचित्॥४४॥ अर्थाख्यं शुभनाथदृष्टसहितं द्रव्यागमात्सौख्यदं पापैर्दृष्टयुतं च वित्तविलयं कुर्यात्तथा पापयुक्॥ सदृष्टं च शुभेत्थशालि यदि तत्पूर्वं धनं नाशयेत्पश्चादर्थसमुद्भवं च ससुखं व्यत्यासतो व्यत्ययः॥ ४५॥ रिपुदृष्ट्या रिपोर्भीतिस्तस्करादेर्धनक्षयः॥ मित्रदृष्ट्या मित्रयोगाद्धनं मानो यशः सुखम्॥ ४६॥**

अ॰ रोगसहमस्याशुभफलमाह-मांद्याधिप इति॥ मांद्याधिपः रोगसहमाधीशः स्वयं पापग्रहः पापयुतेक्षितश्च। पापग्रहैर्युतः दृष्टः तदा स रोगकरो विचिंत्यो ज्ञेयः चेन्मृतिपेन लग्नादष्टमस्थानाधिपतिना सह रोगसहमाधीश इत्थशालो मुथशिलं करोति तदा मृत्युर्मरणं स्यात्। यदि तु तादृशे मांद्यसहमस्वामिनि हीनबले सति अतिकष्टान्मरणं भवेत्॥ ४३॥ अथ पुनरपि मांद्यसहमस्य शुभाशुभफलमाह-स्वस्वामीति। मांद्ये मांद्यसहमे स्वस्वामिना सौम्यग्रहैर्वा यदीक्षणं तद्भजति तादृशे सति उपलक्षणत्वाद्युक्ते वा सति तथा नाथे सवीर्ये सति मांद्याधिप उक्तरीत्या सबले सति अष्टषडंत्यवर्जे षडष्टद्वादशस्थानास्थितिरहिते सति तदा रोगो नैव भवति। यदा शुभपापैर्युते ईक्षिते दृष्टे वा सति किंचिद्रुग्भयं रोगभयमस्तीति ज्ञेयम्॥ ४४॥ अथार्थसहमस्य शुभाशुभफलमाह-अर्थाख्यमिति। अर्थाख्यं सहमं शुभेन नाथेन स्वामिना दृष्टं युतं चेद्भवति तदा द्रव्यागमात् द्रव्यप्राप्त्या कृत्वा सौख्यदं यदा पापग्रहैर्दृष्टं युतम् वा चेत्तदा वित्तस्य द्रव्यस्य नाशं कुर्यात्। अथार्थसहमं पापयुक् सदृष्टं च पापग्रहैर्युक्तं सद्भिः शुभग्रहैर्दृष्टं च भवति। तथा शुभेत्थशालिशुभग्रहेण सह मुथशिलयोगं करोति तदा सर्वं धनं सर्वसंचितं धनं नाशयेत्। पश्चादर्थस्य द्रव्यस्य समुद्भवं ससुखं सुखसहितं कुर्यात्। व्यत्यासतो व्यत्यय इति। अर्थसहमं शुभाशुभै दृष्टं तथा तैरेव मुथशिलयोगं यदि करोति तदा बहुधा शुभफलमेव ईषत् धननाशश्च स्यात्॥ ४५॥ अथ

शत्रुमित्रदृष्ट्योः फलमाह–रिपुदृष्ट्येति । यत्सहमं शुभग्रहेण पापग्रहेण वा रिपुदृष्ट्या शत्रुदृष्ट्या यदा पश्यति तदा रिपोः शत्रोः सकाशाद्भीतिर्भयं स्यात् । तस्करादेर्धनक्षयश्च । यत्सहमं शुभेन पापेन वा मित्रदृष्ट्या पश्यति तदा मित्रयोगाद्धनं मानो यशः सुखं भवति ॥ ४६ ॥

सत्स्वामिदृष्टं युतमात्मजस्य लाभं सुखं यच्छति पुत्रसद्म ॥ पापान्वितं सौम्यखगेत्थशाली प्राग्दुःखदं पुत्रसुखाय पश्चात् ॥ ४७ ॥ पापान्वितं पापकृतेसराफं नाशाय पुत्रस्य गतौजसीशे ॥ सूतौ सुतेशः सहमेश्वरोऽब्दे पुत्रस्य लब्ध्यै शुभमित्रदृष्टः ॥ ४८ ॥ पित्र्यं सदीक्षितयुतं पतियुक्तदृष्टं तातस्य यच्छति धनांबरमानसौख्यम् ॥ पत्यौ गतौजसि मृतौ खलमूसराफे नाशः पितुश्चरगृहे परदेशयानात् ॥ ४९ ॥ शुभेत्थशाले खलखेटयोगे गदप्रकोपः प्रथमं महान्स्यात् ॥ पश्चात्सुखं विंदति पूर्णवीर्ये नाथे नृपान्मानयशोऽभिवृद्धिः ॥ ५० ॥

अथ पुत्रसहमस्य शुभाशुभफलमाह–सत्स्वामिदृष्टमिति । पुत्रसद्म पुत्रसहमं सच्छुभग्रहैश्च स्वामिना च दृष्टं युतं वा । तदा आत्मजस्य पुत्रस्य लाभं पुत्रोत्पत्तिं तज्जनितसुखं यच्छति । यदि पुत्रसहमं पापान्वितं पापग्रहयुक्तं सौम्यग्रहैः सहेत्थशालं करोति तदा प्राक्प्रथमतः पुत्रसंबंधिदुःखं पश्चात् सुखाय पुत्रसौख्यं भवति ॥ ४७ ॥ अथ पुनः सुतसहमस्य शुभाशुभफलमाह–पापान्वितमिति । यदि पुत्रसहमं पापग्रहैर्युक्तं पापग्रहकृतेसराफयोगमीशे पुत्रसहमाधीशे गतौजसि निर्बले अस्तंगते वा सति तदा पुत्रस्य नाशः । अब्दे वर्षप्रवेशसमये पुत्रसहमाधीश्वरः सूतौ जन्मकाले सुतेशः पंचमभावाधीश्वरो भवति पुनः शुभग्रहैर्मित्रेण चेद्दृष्टो भवति तदा पुत्रस्य लब्ध्यै प्राप्त्यै भवति ॥ ४८ ॥ अथ पितृसहमस्य शुभाशुभफलमाह–पित्र्यमिति । पित्र्यं पितृसहमं सच्छुभग्रहैरीक्षितं दृष्टं युतं वा । अथवा पत्या स्वामिना युक्तं दृष्टं वा स तातस्य पितुर्धनांबरं मानसौख्यं यच्छति । पत्यौ पितृसहमस्वामिनि गतौजसि निर्बले अस्तंगते वा । मृतौ लग्नादष्टमस्थानस्थिते सति । खलेन कृतमूसराफयोगे च सति । तत्रापि चरगृहे चरराशिस्थे मेषकर्कतुलामकरराशिस्थे सति । पितुः परदेशयानात् परदेशयात्रायां सत्यां नाशो मरणं भवेत् ॥ ४९ ॥ अथ पुनरपि पितृसहमस्य शुभाशुभफलमाह–शुभ इति । पितृसहमे उपलक्षणत्वात्पुत्रसहमेश्वरस्यापि शुभग्रहकृत इत्थशालयोगश्चेद्भवति पुनः पापग्रहयोगश्चेद्भवति तदा प्रथमं वर्षपूर्वार्द्धे गदस्य रोगस्य

प्रकोपोऽभिवृद्धिः महान् स्यात् । पश्चाद्वर्षोत्तरार्द्धे सुखं विंदति प्राप्नोति । रोगरहितो भवतीत्यर्थः । नाथे पितृसहमस्वामिनि पूर्णवीर्ये पंचदशविश्वाधिकबले सति नृपाद्राज्ञः सकाशान्मानयशोभिवृद्धिः स्यात् ॥ ५० ॥

बंधनाख्यसहमं युतेक्षितं स्वामिना नहि तदास्ति बंधनम् ॥
पापवीक्षितयुतेऽस्ति बंधनं पापजे मुथशिले विशेषतः ॥५१॥

अथ बंधनसहमस्य शुभाशुफलमाह-बंधनेति । बन्धनसहमं स्वामिना युतेक्षितं युतं दृष्टं वा तदा बंधनं कारागृहप्राप्तिर्नास्ति । तद्बंधनसहमं पापग्रहेण दृष्टं युतं तदा बंधनमस्ति । पुनर्बंधनसहमस्य तत्स्वामिनो वा पापग्रहकृतो मुथशिलयोगश्चेत्तदा विशेषतो बंधनमस्ति ॥ ५१ ॥

गौरवाख्यसहमं युतेक्षितं स्वामिना शुभखगैः सुखाप्तये ॥
राजगौरवयशोंबराप्तये पापवीक्षितयुते पदक्षतिः ॥ ५२ ॥
शुभाशुभैर्दृष्टयुतं खलैश्चेत्कृतेत्थशालं धनमाननाशम् ॥ पूर्वं
विधत्ते चरमे शुभेत्थशाले सुखं वाहनशस्त्रलाभम् ॥ ५३ ॥
कर्मभावसहमाधिपाः शुभैः स्वामिना मुथशिलाबलान्विताः ॥
हेमवाजिगजभूमिलाभदाः पापदृष्टियुतितोऽशुभप्रदाः ॥ ५४ ॥

अथ गौरवसहमस्य शुभाशुभफलमाह-गौरवाख्येति । गौरवसहमं स्वामिना शुभग्रहैर्वा युतं दृष्टं वा तदा सुखाप्तये सुखप्राप्त्यै स्यात् । राजगौरवं यशः अंबराणि वस्त्राणि तेषां प्राप्तिश्च गौरवसहमं पापग्रहैर्युतं दृष्टं वा स्यात् तदा पदस्याधिकारस्य क्षतिर्नाशः स्यात् ॥५२॥ अथ पुनर्गौरवसहमस्याशुभफलमाह--शुभाशुभैरिति । गौरवसहमं शुभपापग्रहैर्दृष्टं युतं वा । तथा खलैः पापग्रहैश्चेत् कृतमुथशिलं तदा पूर्वं वर्षपूर्वार्द्धे धननाशं माननाशं च विधत्ते करोति । चरमे वर्षस्योत्तरार्द्धे गौरवसहमं शुभग्रहैः कृतमुथशिलं चेत्तदा सुखं वाहनशस्त्रलाभं च विधत्ते ॥ ५३ ॥ अथ कर्मसहमस्य शुभाशुभफलमाह--कर्मभावेति । कर्मभावः कर्मसहमं च तयोश्चाधिपौ कर्मभावाधिपः कर्मसहमाधिपश्च एवं चत्वारो बलान्विताः । शुभैः शुभग्रहैः स्वामिना च कृतमुथाशिलः तदा हेमवाजिगजभूमिलाभदाः स्युः एते कर्मभावसहमाधिपा पापग्रहैर्दृष्टयुताः तदा अशुभफलदाः स्युः ॥ ५४ ॥

दग्धा वक्राः कर्मवैकल्यदास्ते युक्ता दृष्टाः सौरिणा ते विशे-
षात् ॥ राज्यभ्रंशः कर्मनाशश्च राजकर्मेशौचेन्मूसरीफौ खले
न ॥५५॥ उपदेष्टा गुरुर्ज्ञानं विद्याशास्त्रं श्रुतिस्मृती ॥ मोहो जा-

डयं बलं सैन्यमंगं देहो जलं द्युतिः ॥ ५६॥ गुरुता मंडलेशत्वं गौरवं मानशालिता ॥ निग्रहानुग्रहविभू राजाछत्रादिलिंगभाक् ॥ ५७ ॥ माहात्म्यं मंत्रगांभीर्यं धृतिबुद्ध्यादिशालिता ॥ सामर्थ्यं देहजा शक्तिः शौर्यं यत्नोऽरिनिग्रहे ॥ ५८ ॥ आशैच्छोक्ता मतिर्धर्म्या श्रद्धा बंदः पराश्रयः ॥ पानीयपतनं वृष्टिर्जलेऽकस्माच्च मज्जनम् ॥ ५९ ॥ आधिव्याधी तापमाद्ये सपिंडा बंधवः स्मृताः ॥ सत्यालीकं वणिग्वृत्तिराधानं प्रसवः स्मृतः ॥ ६० ॥

अथ पुनरपि कर्मभावसहमाधिपानामशुभफलं चाह--दग्धा इति । कर्मभावसहमाधिपाः अस्तगंताः वक्राः वक्रगतित्वं तदा कर्मवकैल्यदाः कर्मणः प्रारब्धशुभकार्यस्य वैकल्यमनिष्पत्तिस्तां ददति तादृशाः स्युः । कर्मभावसहमाधिपाः सौरिणा शनैश्चरेण युक्ता दृष्टा वा तदा विशेषादवश्यमेव कर्मवैकल्यदाः स्युः तथा राजकर्मेशौ राजसहमेश्वरकर्मभावेश्वरौ खलेन पापग्रहेण मूसरीफौ कृतमूसरीफयोगौ चेत्तदा राज्यभ्रंशो राज्यनाशः कर्मनाशश्च प्रारब्धशुभकार्यस्य नाशः स्यात् ॥ ५५ ॥ अथ केषांचित्सन्दिग्धार्थानां सहमानं निःसंदिग्धमर्थमाह–उपदेष्टेति । गृणात्युपदिशति गायत्र्यादिकमिति गुरुः स उपदेष्टैवात्रोच्यते । यद्यपि ' गुरू गीष्पतिपित्राद्यौ' इत्यमरकोशोस्ति तथापि पितृसहमस्य पार्थक्येनाभिधानान्नात्र तद्वाचकता । बृहस्पतिवाचकत्वं तु ततः फलप्राप्तेरसंभवान्नैव संभवति अतः गुरुरुपदेष्टा तथा विद्यासहमशब्देन ज्ञानम् । शास्त्रशब्देन श्रुतिस्मृती । जाड्यशब्देन मोहः । अज्ञानमिति यावत् । बलशब्दः सैन्ये देहशक्त्योः प्रसिद्धः तदर्थनिर्णयमाह--बलशब्देन सैन्यं देहशब्देन अंगं शरीरमिति यावत् । जलशब्देन द्युतिः कांतिरितियावत् ॥ ५६ ॥ अथ गुरुशब्दाद्भावप्रत्ययोत्पत्तौ सत्यां गुरुता गौरवशब्दयोर्निष्पत्तिः । अनयोरर्थस्यैक्यत्वात्पृथक्सहमकथनमनुचितमिति मत्वा तयोर्भेदमाह--गुरुतेति । अत्र तु लोकप्रसिद्धिः शरणं गुरुताशब्देन मंडलेशत्वं देशस्वामी गौरवशब्देन मानशालिता प्रतिष्ठाधिक्यम् । अथ राजशब्दः क्षत्रियवाचकः प्रसिद्धोस्ति । तदर्थनिर्णयमाह–निग्रहेत्यादिना अर्द्धेन । अत्रहि लोकप्रसिद्ध्या राजशब्देन पृथ्वीश्वर एवोच्यते तल्लक्षणमाह–निग्रहेति । निग्रहो नाम अनिष्टकरणम् । अनुग्रहो नाम वाक्यस्येष्टकरणंतयोर्विभुः समर्थः कीदृशः । छत्रादिलिंगभाक् छत्रं प्रसिद्धम् आदिशब्देन चामरादि यल्लिंगं चिह्नं तद्भाक् भजतीति ॥ ५७ ॥ अथ माहात्म्यसामर्थ्यशौर्याणामर्थमाह--माहात्म्यमिति । महतो भावो माहात्म्यं महत्त्वं च । मंत्रगांभीर्यं मंत्र एकांते कृतविचारस्तस्य गांभीर्यमप्रकाशता । नन्वप्रकाशः कथं भवत्यत आह–धृतीति धृतिर्धैर्यं बुद्धिः परिणामजा प्रज्ञा आभ्यां शालते तच्छालियुक्त-

मित्यर्थः । अस्य भावः । शालिता एतद्रूपं माहात्म्यमित्यर्थः । सामर्थ्यशब्देन देहजा शक्तिः । शौर्यशब्देन शत्रुनिग्रहे यत्नः प्रयत्नः ॥ ५८ ॥ आशेति । आशाशब्देन इच्छोक्ता । श्रद्धाशब्देन धर्म्या मतिः । बंदशब्देन पराश्रयपराधीनता । पानीयपतनशब्देन वृष्टिः । अथवाऽकस्माज्जले मज्जनम् ॥ ५९ ॥ आधीति । तापशब्देन आधिः मांद्यं नाम व्याधिः शरीरपीडाकरः । बंधुशब्देन सपिंडाः प्रोक्ताः । वणिक्शब्देन सत्यालीकवृत्तिः । सत्यासत्यवृत्त्या जीवनम् । प्रसवशब्देन आधानम् ॥ ६० ॥

**दासत्वं परकर्मोक्तमन्यत्स्पष्टं स्वनामतः ॥ निरूप्याणि यथायोग्यं कुलजातिस्वरूपतः ॥ ६१ ॥ शुभयोगेक्षणात्सौख्यं पत्युर्वीर्यानुसारतः ॥ दारिद्र्यमृतिमांद्यारिकलिषूक्तो विपर्ययः ॥ ६२ ॥ प्रश्नकालेऽपि सहमं विचार्यं प्रष्टुरिच्छया ॥ सर्वेषामुपयोगोऽत्र चित्रं पृच्छंति यज्जनाः ॥ ६३ ॥ इति सहमफलविचारः ॥**

दासत्वमिति । परकर्मशब्देन दासत्वमुक्तम् । अन्यसहमानिस्वनामतः स्पष्टानि कुलजातिस्वरूपतः यथायोग्यं निरूप्याणि ॥ ६१ ॥ शुभयोगेति ॥ यत्सहमं शुभग्रहयुतं दृष्टं वा तदा सौख्यं पत्युर्वीर्यानुसारतः सहमस्वामिनो यादृशं बलं तादृशं तत्सहमजनितं सौख्यं ज्ञेयम् । तद्यथा । यदा सहमस्वामी बलिष्ठस्तदा महत्सौख्यम् । यदा मध्यबलस्तदा मध्यमं सौख्यम् । यदा हीनबलस्तदा सुखाभावः । दारिद्र्यमृतिमांद्यारिकलिषूक्तो विपर्ययः एतत्सहमानां फलं विपरीतं ज्ञेयम् । तद्यथा । यदा शुभफलमागतं तदा अशुभं ज्ञेयम् । यदा त्वशुभं फलमागतं तदा शुभफलं ज्ञेयम् ॥ ६२ ॥ जन्मपत्र्यभावे शुभाशुभसहमविचारः केनोपायेन स्यादित्यत आह-प्रश्नकाले इति । प्रश्नकाले सहममिति । जात्यभिप्रायेणैकवचनं सहमानीत्यर्थः । तानि पुण्यादीनि सहमानि प्रष्टुः प्रश्नकर्तुरिच्छया विचार्याणि । अत्र सर्वेषां सहमानामुपयोगः यतो जनाश्चित्र पृच्छंति ॥ ६३ ॥

इति सहमफलविचारः ।

---

**स्पष्टान्सलग्नान्खचरान्विधाय राशीन्विनात्यल्पबलं तु पूर्वम् ॥
निवेश्यतस्मादधिकाधिकांशक्रमादयं स्यात्तु दशाक्रमोऽब्दे ॥ १ ॥
ऊनं विशोध्याधिकतः क्रमेण शोध्यं विशुद्धांशकशेषकैक्यम् ॥
सर्वाधिकांशोन्मितमेव तत्स्यादनेन वर्षस्य मितिस्तु भाज्या २॥**

**'शुद्धांशकांस्तान्गुणयेदनेन लब्धध्रुवांकेन भवेद्दशायाः ॥ मानं दिनाद्यं खलु तद्ग्रहस्य फलान्यथासां निगदेत्तु शास्त्रात् ॥ ३ ॥**

अदशानयनमाह—तत्रादौ कृशांशसाधनमाह--स्पष्टानिति । तत्र वर्षप्रवेशसमये स्पष्टान् सलग्नान् ग्रहान्विधाय राशिं त्यक्त्वा अंशादयः सर्वे स्थाप्याः तत्रात्यल्पलवाः तेषां मध्ये न्यूनांशो ग्रहः पूर्वं निवेश्यः स्थाप्यः । तस्मादधिकादधिकांशक्रमान्निवेश्य । तद्यथा । यथायथा यस्ययस्य ग्रहस्यांशाधिकाधिक्यं तथातथा सस ग्रहः स लग्नो निवेश्यः स्थाप्यः अयमब्दे दशाक्रमः स्यात् ॥१॥ अथ पात्यांशसाधनमाह—ऊनमिति। ऊनं स्वल्पमंशाद्यं ग्रहमाधिकतोऽधिकांशाद्ग्रहात्क्रमेण विशोध्यः । तद्यथा । प्रथमं यथाल्पतां एवं स्थाप्याः ततः प्रथमाद्द्वितीयात्तृतीयादित्यादिक्रमेण शोध्याः । तदनंतरं विशुद्धांशकशेषकैक्यं परस्परशोधने सति ये उर्वरिता अंशास्तेषामैक्यं कार्यं तत्सर्वग्रहमध्ये योधिकांशोऽतिमग्रहस्तत्तुल्यमेव स्यादिति व्याप्तिः । पश्चादनेन शेषांशयोगेन वर्षमिति सौरी ३६० सावनीवा ३६५ ।१५।३१।३० भाज्याल्लब्धं स ध्रुवांकः स्यात् ॥ २ ॥ अथ दिवसानयनमाह—शुद्धांशकानिति । अनेन लब्धध्रुवांकेन सर्वेपि शुद्धांशका गुणनीयाः । एवं कृते सति तत्तद्ग्रहस्य दिनादिकं दशायाः मानं भवेत् । एवं दशादिनान्यानयि शास्त्रात्फलानि शुभाशुभानि निगदेत् ॥ ३ ॥

**शुद्धांशसाम्ये बलिनो दशाद्या बलस्य साम्येऽल्पगतेस्तु पूर्वा ॥ साम्ये विलग्नस्य खगेन चिंत्या बलादिका लग्नपतेर्विचिंत्या ॥ ४ ॥**

अथांशसाम्ये दशानिर्णयमाह—शुद्धांशेति । द्वयोरंशैः साम्ये समत्वे सति बलिनः पंचवर्गी बलाधिकस्याद्या प्रथमा दशा स्यात् ॥ अत्र शुद्धांशसाम्ये इत्ययं पाठः । हीनांशसाम्ये इति पाठः साधीयान्युक्तियुक्तः सर्वसंमतश्च । अत्र दशाक्रमस्तु पूर्वमेव हीनांशेनैव भवति तदनंतरं कृतशोधेन कृतशुद्धांशा भवंतीति नियमत्वात् । द्वयोः शुद्धांश साम्ये यस्य बलमधिकं तस्य आद्या दशा ॥ तदनंतरं द्वितीयस्य इदं कथं स्यात्तत्राह--बलस्येति । बलसाम्ये न्यूनगतेः पूर्वादशा ज्ञेया । विलग्नस्य ग्रहस्य चांशसाम्ये कस्य प्रथमं दशेत्यत्राह—साम्येति । खगेन ग्रहेण विलग्नस्य साम्येऽर्थादंशैः साम्ये बलादिका बलगत्यादिका चिंत्या लग्नपतेर्लग्नपतिसंबंधिनी बोध्येत्यर्थः । सौरदशायां वर्षप्रवेशसमये एव प्रथमं सौरदशाप्रवेशः तदधो वर्षप्रवेशकालीनः स्पष्टः सूर्यो लेख्यः प्रथमदशादिनादिप्रथमदशाप्रवेशकालीनस्पष्टसूर्ये योज्यम् । तद्यथा । सूर्यस्य अंशस्थाने दिवसा योज्याः कलास्थाने घटिका योज्याः विकलास्थाने पलानि योज्यानि विकलाः षष्ट्या भक्ताः लब्धं कलासु योज्यम् । कलाः षष्ट्या भक्ताः लब्धमंशेषु योज्यम् । अंशास्त्रिंशद्भक्ताः लब्धं राशिषु योज्यम् । राशयो द्वादशांकाधिकास्तदा द्वादशभिस्तष्टाः शेषं राशयस्तादृशि सूर्ये द्वितीयदशाप्रवेशकालीनसूर्ये द्वितीयदशादिना योज्यं तादृशि सूर्ये द्वितीयदशाप्रवेश एवमग्रेपि । एवं योजनवर्षप्रवेशकालीनसूर्ये तुल्यः

अंतिमसूर्यो भवति । तदा सौरदशाक्रमः शुद्धोऽन्यथा अशुद्ध इति । अथ सावनद शाया वर्षप्रवेशसमये सावनप्रथमदशाप्रवेशः । ततो वर्षप्रवेशवारादौ प्रथमसावनदशा-दिनानि योज्यानि तस्मिन्मासे तावति वारादौ द्वितीयदशाप्रवेशः । एवं द्वितीयदशा-प्रवेशवारादौ द्वितीयदशादिनानि योज्यानि तस्मिन्मासे तावति वारादौ तृतीयदशा-प्रवेशः एवमग्रेपि । एवं योजिते अग्रिमवर्षप्रवेशे वारादिकमायाति तदा दशाप्रवेशः शुद्धः अन्यथा अशुद्धः । उदाहरणम् । शनिः सर्वापेक्षया न्यूनांशः अतः कारणात् राशिं त्यक्त्वा प्रथमं शनिः स्थापितः ६ । ४८ । ५४ ततोर्कः ७ । ३० । ६ ततो बुधः १२ । १६ । ८ ततो भौमः १४ । ३२ । ३६ ततो लग्नम् १८।३।५४ ततः श्चंद्रः २२ । ९ । ४७ ततः शुक्रः २४।३१।४८ ततो गुरुः २९ । ३५ । १३ अथ प्रथमं यथास्थिताः शनिपात्यांशाः ६ । ४८ । ५४ एते रविहीनांश ७ । ३० । ६ मध्ये शोधिताः जाताः रविपात्यांशाः ० । ४१ । १२ एवं पूर्वांश्च अग्रिममध्ये शोधिताः जाताः सर्वेषां पात्यांशाः बुधः ४।४६।२ भौमः २। १६ ।२८ । लग्नम् ३ । ३१ । १८ चंद्रः ४ । ५ । ५३ शुक्रः २ । २२ । १ गुरुः ५।३।२५ एतेषां योगः २९ । ३५ । १३ अनेन वर्षमितिः ३६० षष्टिसवर्णितौ १२९६००० भाज्यभाजकौ १०६।५।१३ हरभक्ता जातो गुणकः १२।१०।३ अनेन शनिपात्यांशाः ६।४८।५४ गुणिताः जातानि शनिदशादिनादीनि ८२।५।५५।१८ । अथवा पात्यांशयोगेन २९ । ३५।१३ वर्षमितिः ३६५ । १५ । ३१ भक्ता जातो गुणकः १२।२०।४२ अनेन शनेः पात्यांशाः ६।४८।५४ गुणिताः जातानि शनिदशादिनादीनि ८४।७।५२ एवं जातानि सर्वेषां दशादिनादीनि ॥ ४ ॥

**अथ सौरमानेन हीनांशाः पात्यांशाः**

| | श. | र. | बु. | मं. | ल. | चं. | शु. | गु. | यो. |
|---|---|---|---|---|---|---|---|---|---|
| हीनांशाः | ६ | ७ | १२ | १४ | १८ | २२ | २४ | २९ | ०० |
| | ४८ | ३० | १६ | ३२ | ३ | ९ | ३१ | ३५ | ०० |
| | ५४ | ६ | ८ | ३६ | ५४ | ४७ | ४८ | १३ | ०० |
| पात्यांशाः | ६ | ० | ४ | २ | ३ | ४ | २ | ५ | २९ |
| | ४८ | ४१ | ४६ | १६ | ३१ | ५ | २२ | ३ | ३५ |
| | ५४ | १२ | २ | २८ | १८ | ५३ | १ | २५ | १३ |
| दशादिवसाः | ८२ | ८ | ५८ | २७ | ४२ | ४९ | २८ | ६१ | ३६० |
| | ५५ | २१ | ०० | ४० | ५१ | ५१ | ४७ | ३१ | ०० |
| | १८ | १८ | १९ | २७ | ० | ४७ | ५९ | ५२ | ०० |
| दशाप्रवेशः | ९ | ०० | ०० | २ | ३ | ४ | ६ | ७ | ९ |
| | ७ | ०० | ८ | ६ | ४ | १७ | ७ | ५ | ७ |
| | ३० | २५ | ४६ | ४७ | २७ | १८ | १० | ५८ | ३० |
| | ६ | २४ | ४२ | १ | २८ | २८ | १५ | १० | ६ |

| शनेरन्तर्दशा |  |  |  |  |  |  |  |  |
| --- | --- | --- | --- | --- | --- | --- | --- | --- |
| श | र | बु | मं | ल | चं | शु | गु | यो |
| १९ | १ | १३ | ६ | ९ | ११ | ६ | १४ | ८२ |
| ५ | ५५ | २१ | २२ | ५२ | २९ | ३८ | १० | ५५ |
| १८ | २७ | ३८ | २८ | १२ | ८ | ४ | २३ | १८ |
| ९ | ९ | १० | १० | १० | ११ | ११ | ० |  |
| २६ | २८ | ११ | १८ | २८ | ९ | १६ | ० |  |
| ३६ | ३१ | ५३ | १५ | ७ | ३६ | १५ | २५ |  |
| ४ | ३१ | ९ | ३७ | २५ | ५७ | १ | २४ |  |

| अथ सावनमानेन कुशांशाः पात्यांशाः । |  |  |  |  |  |  |  |  |  |
| --- | --- | --- | --- | --- | --- | --- | --- | --- | --- |
|  | श | र | बु | भं | ल | चं | शु | गु | यो |
|  | ६ | ७ | १२ | १४ | १८ | २२ | २४ | २९ | ०० |
| कुशलवाः | ४८ | ३० | १६ | ३२ | ३ | ९ | ३१ | ३५ | ०० |
|  | ५४ | ६ | ५८ | ३६ | ५४ | ४७ | ४८ | १३ | ०० |
|  | ६ | ०० | ४ | २ | ३ | ४ | २ | ५ | २९ |
| पात्यांशाः | ४८ | ४१ | ४६ | १६ | ३१ | ५ | २२ | ३ | ३५ |
|  | ५४ | १२ | २ | २८ | १८ | ५३ | १ | २५ | १३ |
|  | ८४ | ८ | ५८ | २८ | ४३ | ५० | २९ | ६२ | ३६५ |
| दशादिवसाः | ७ | २८ | ५१ | ४ | २८ | ३५ | १३ | २५ | १५ |
|  | ५२ | ३७ | १५ | ४१ | ३० | २६ | १२ | ५८ | ३१ |

**दशामानं समामानं प्रकल्प्योक्तेन वर्त्मना ॥ अंतर्दशा साधनीया प्राक्पात्यांशवशेनतु॥ आद्यावंतर्दशापाकपतेस्तत्क्रमतोपरा॥५॥ एकैकराशिवृद्ध्या चेत्तुल्योंऽशाद्यैर्यदा रविः ॥ तदा मासप्रवेशो द्युप्रवेशश्चेत्कलासमः ॥ ६ ॥**

अथांतर्दशानयनमाह—दशामानमिति । स्पष्टोऽर्थः यस्य ग्रहस्य दशामध्येंऽतर्दशा क्रियते तस्य दशामानं दिनघटीपलात्मकं तदेव समामानं प्रकल्प्य उक्तविधिना अंतर्दशा साध्या । उदाहरणम् । शनिदशा ८२।५५।१८ पात्यांशयोगेन २९ । ३५ । १३ भक्ता जातो गुणकः २।४८।९ अनेन शनिपात्यांशा गुणिताः जाता शनिदशामध्ये शनेरंतर्दशा १९।५।५८ एवं जाता शनिदशामध्ये सर्वेषामंतर्दशा ॥ ५ ॥ अथ मासदिनप्रवेशानयनमाह—एकैकेति । जन्मकालीनः सूर्यो यादृशो राश्यादिर्भवति । स एका-

दशधा स्थाप्यः । एकद्व्यादिराशिवृद्ध्या युक्तो यथावस्थितांशादितुल्यो यस्मिन्मासवटीपलात्मके काले भवति । तदा तत्संख्याको मासप्रवेशो ज्ञेयः । एतदुक्तं भवति प्रथममासप्रवेशस्तु वर्षप्रवेश एव जातः । तत्र जन्मार्कतुल्य एवार्कोऽस्ति । द्वितीयमासप्रवेशश्चेत्क्रियते तदैकैकराशिसंयोजनात् अंशकलाविकलासमत्वं राशौ योजिते तत्तुल्यः सूर्यः यद्दिने यस्मिन्समये तदा द्वितीयमासप्रवेशो भवति । एवमग्रेपि बोध्यम् ॥ ६ ॥

**मासार्कस्य तदासन्नपंक्त्यर्केण सहांतरम् ॥ कलीकृत्याऽर्कगत्याप्तदिनाद्येन युतोनितम् ॥ ७ ॥ तत्पंक्तिस्थं वारपूर्वं मासार्केऽधिकहीनके ॥ तद्वाराद्ये मासवेशो द्युवेशोप्येवमेव च ॥ ८ ॥**

दिनप्रवेशश्चेत्क्रियते तदैकैकांशसंयोजनात्कलाविकलासमत्वं यस्मिन्समये तदा द्युप्रवेशो भवति । अथ पंचांगान्मासप्रवेशघटिकाद्यानयनमाह--मासार्कस्येति । एकैकराशियोगेन जातो मासप्रवेशार्कः । अस्यासन्नपंचांगस्थित यदवध्यर्क्षस्तदवधिस्थार्कमासप्रवेशार्कयोरंतरं कार्यम् । तस्य कलाः कार्याः । अवधिस्थार्कगत्या भाज्याः । फलं दिनाद्यं त्रिस्थं वासरघटीपलात्मकं ग्राह्यम् । तत्फलमवधिस्थवारादौ युतोनितं कार्यम् । तद्यथा । अवधिस्थार्कतो मासप्रवेशार्कोऽधिकश्चेत्तदा अवधिस्थवारादौ युक्तं कार्यं न्यूने हीनं कार्यम् । तस्मिन्वारादौ वारघटीपलात्मके काले मासप्रवेशो भवति एवमेवानया रीत्या द्युप्रवेशो दिनप्रवेशो ज्ञेयः । अवधिस्थवारादावित्यत्र अवधिस्थघटिका न ग्राह्याः कुतः यद्ग्रामस्थपंचांगं तद्ग्रामस्थचरदेशांतरसंस्कारस्य कृतत्वात् इति कारणादवधिस्थवारादावित्यत्र संस्काररहितो वारघटीपलात्मकोऽब्दपो ग्राह्यः । स यथा यस्माद्ग्रंथात्पंचांगस्थितः सूर्यः साधितः तस्माद्ग्रंथादब्दपः साध्यः परंत्वेतावान् विशेषः । यदि ग्रंथादावब्दपे उदयांतरभुजफलं चरसंस्कारश्चेत्कृतो भवति । तदा संस्काररहितोऽब्देशः कार्यः । यथा रामविनोदस्थाब्दपे ग्रंथादावुदयांतरभुजफलकाशीस्थचरसंस्कारः कृतोऽस्ति । तथा मकरंदस्थाब्दपे ग्रंथादौ केवलकाशीस्थचरसंस्कारः कृतोऽस्ति । इति कारणात्संस्काररहितोऽब्दपः कार्यः तदनंतरमस्मिन् संस्काररहिताऽब्दपे यस्य मासप्रवेशः क्रियते तस्य यद्ग्रामे जन्म तद्ग्रामस्थचरदेशांतरउदयांतरभुजफलसंस्कारः कार्यः । सोऽब्दपः सूक्ष्मो भवति । परंतु एतत्संस्कारचतुष्टयमध्ये जन्मकालीनसूर्यो यावद्भिः संस्कारैरब्दपः संस्कृतो भवति तावद्भिः संस्कारैरब्दपः संस्कार्यः । तदनंतरं मासप्रवेशार्कावधिस्थार्कयोरंतरात् यत्पूर्वानीतवारादिकं तदस्मिन्नब्दपे उक्तरीत्या युतोनं कार्यं ततः मासप्रवेशे सूक्ष्मघटिका भवंति । यदि जन्मकालीनः सूर्यो रामविनोदात्साधितो नास्ति पंचांगस्थितोवाधिस्थार्कोपि रामविनोदात्साधितोस्ति । अथवा जन्मकालीनस्तथावधिस्थश्चार्कयोः साधनं मकरंदाच्चेत्कृतमस्ति तदा सूक्ष्मघटिकाः भवंति । ग्रंथभेदे स्थूलघटिका भवंति । अथोदाहरणम् । ग्रहलाघवाज्जन्मकालीनः स्पष्टोर्कः ९ । ७ । ३० । ६

एकराशियुक्तो जातो द्वितीयमासप्रवेशार्कः १०।७।३०।६ अस्यासन्नफाल्गुनकृष्णनवमी ९ भृगौ रामविनोदस्थपंचांगस्थित अवधिस्थार्कः १०।१०।१।३८। अनयोरंतरम् ०।२।२१।३२ अस्य कलाः १५१। ३२ अवधिस्थार्कगतिकलाभिः ६०। ३१ भक्तः सवर्णितौ भाज्यभाजकौ भाज्य ९०। ९२ भाजका ३६।३१ भाजकेन हते भाज्ये फलं २।३०।१३ दिनघटीपलात्मकम् ॥ ७ ॥ ८ ॥

**भू १ पंचचंद्राः १५ कुगुणाः ३१ कुरामाः ३१ सिद्धा २४ गताब्दैर्गुणिताः समेताः ॥ खेना० ब्धिदस्रै २४ र्गुणलोचनैश्च २३ तष्टानगे ७ रर्कमुखोऽब्दपः स्यात् ॥ १ ॥**

अथ रामविनोदस्थपचांगस्थिते ग्रहे सति अब्दपानयनमाह—भूरिति । यस्मिन्वर्षे रामविनोदः कृतोस्ति तस्मिन्वर्षे शकः १५१२ अयं इष्टशकमध्ये १५।५० शोधितः शेषं गताब्दाः ३८ अयमंकः १।१५।३१।३१।२४ गताब्दैः ३८ गुणितो जातः ४७।४९।५७।५३।१२ एतन्मध्येऽयं क्षेपो ०।२४। २३ योजितः ४८।१४।२०। ५३।१२ ऊर्ध्वांके सप्ततष्टे जातोऽब्दपः ५।५६।५७ परंतु एतन्मध्ये उदयांतरभुजफलचरफलसंस्कारः कृतोस्ति इति कारणात् एतन्मध्ये संस्कारै रहितः क्रियते तत्रादौ उदयांतरसाधनं ग्रंथादौ शकः १५१२ अस्मिन् शके मेषसक्रांतिसमयें सूर्यः ०।०।०।० अयनांशाः १६।२४।५४ ब्रह्मतुल्यात् साधितमुदयांतरपलात्मकमृणं १३ ग्रहापेक्षयाब्दपे विपरीतमित्युक्तत्वात् जातं धनम् १३ इदमब्दपे ऊनं जात उदयांतररहितोऽब्दपः ६।१४।८। अथ भुजफलमाह—सूर्यान्मंदफलं धनम् २।७ अस्य कलाः १२७ भाजकेन ३६० भक्ताः लब्धं घटिकाद्यं भुजफलं धनम् ०।२१ विपरीतमित्युक्तत्वात् जातमृणम् ०।२१ इदमुदयांतरसंस्कृताब्दपे ६।१४।८ युतं जात उदयांतरभुजफलसंस्कृतोऽब्दपः ६।१४।२९। अथ चरसंस्कारमाह । काश्यां पलभा ५।४५ चरखंडानि ५७।४६। १९ चरमृणं पलात्मकं ३१ विपरीतमित्युक्तत्वात् जातं धनम् ३१ इदमुदयांतरभुजफलसंस्कृताब्दपे ६।१४।२९ रहितं जातः उदयांतरभुजफलचरसंस्कृतोब्दपः ६।१३। ५८ अनया रीत्या संस्कारसहितोऽब्दपो जातः । उदाहरणप्रदर्शनार्थमेतावत्प्रदर्शितम् अथ सुगमोपायः कथ्यते । पूर्वं ग्रंथादावुदयांतरभुजफलचरमानीय तेषां त्रयाणां परस्परसंस्कारे कृते सति त्रयोविंशति २३ पलानि ऋणानि जातानि एतानि स्थिराणि । अभीष्टवर्षे पूर्वोक्तश्लोकेनाऽब्दपश्चेत्साध्यते तदा तस्मिन्नब्दपपलेषु त्रयोविंशतिपलानि रहितानि कार्याणि । अभीष्टवर्षे सोऽब्दपः संस्काररहितो भवति । यथा पूर्वानीतोऽब्दपः ६।१४।२१ अयं त्रयोविंशतिपलै रहितः कृतः जातः पूर्वानीतसंस्काररहिताब्दपतुल्यः ६।१३।५८ अब्दपः ॥ १ ॥

**अब्दौघतः शैलनखे २०७ र्विनिघ्नात्पुनर्मनु १४ घ्नं गतवर्षवृंदम् ॥ शराब्धिभक्तं ४५ घटिकादिलब्धं युतं नभोऽब्ध्यग्नि ३२० युतात्खखेभैः ८०० ॥ हृतादिनाद्यं गतवर्षयुक्तं सप्तोद्धृतं मेषमुखोऽब्दपः स्यात् ॥ २ ॥**

अथवा रामविनोदस्थपंचांगे अभीष्टवर्षे संस्कारत्रयरहिताब्दपानयनमाह-अब्दौघत इति । यस्मिन्वर्षे रामविनोदः कृतस्तस्मिन्वर्षे शकः १५१२ अयमिष्टशक १५५० मध्ये शोधितः जातानि गतवर्षाणि ३८ एभिरयमंको २०७ गुणितो जातः ७८६६ गतवर्षगणः ३८ चतुर्दशभिर्गुणितः ५३२ अनेन ४५ भक्तः पलं घटिकाद्यम् ११ । ४९ इदं पूर्वांक ७८६६ युतं ७८६६ मध्ये ११ । ४९ अस्मिन्नूर्ध्वांके ३२० अयमंको योजितः ८१८६ । ११ । ४९ अष्टशतैः ८०० भक्तं २ फलं दिनघटीपलात्मकम् १० । १३ । ५८ अस्योर्ध्वांके गतवर्षाणि ३८ युतानि ४८ । १३ । ५८ सप्तभिस्तष्टानि शेषांकप्रमितो जातोऽब्दपः ६ । १३ । ५८ जन्मकालीनसूर्यमध्ये चरदेशांतरसंस्कारः कृतोऽस्ति इति कारणात् अस्मिन्नब्दपे स्वदेशीयचरदेशांतरसंस्कारः क्रियते अवधिस्थार्कोचरं पलात्मकं धनं ७८ षष्टिभक्तं जातं घटिकाद्यं १ । १८ विपरीतमित्युक्तत्वाज्जातमृणम् १ । १८ इदमब्दपे ६ । १३ । १८ रहितं जातश्चरसंस्कृतोऽब्दपः ६ । १२ । ४० देशांतरयोजनानि धनानि ३० चतुर्थांशोनितानि पलानि २२ विपरीतमित्युक्तत्वात् जातानि ऋणाणि २२ एतानि चरसंस्कृताब्दपे रहितानि जातश्चरदेशांतरसंस्कृतोब्दपः ६ । १२ । १८ अवधिस्थार्कमासप्रवेशार्कयोरंतरात्पूर्वं साधितवारादिकमिदम् २ । ३० । १३ अवधिस्थार्कतः मासार्कस्य न्यूनत्वात् स्पष्टाब्दप ६ । १२ । १८ रहितं जातो मासप्रवेशकालः ३ । ४२ । ५ एवं जाताः फाल्गुनकृष्ण ६ भौमे द्वितीयमासप्रवेशे स्थूलघटिकाः ४२ । ५ कुतः । ग्रहलाघवाज्जन्मकालीनः सूर्यः साधितोऽस्ति रामविनोदस्थपंचांगस्थित अवधिस्थार्को गृहीतोऽस्ति । एकग्रंथादुभयोः साधनं चेत्क्रियते तदा सूक्ष्मघटिकाः भवंति । अतएव विचार्य ग्रन्थभेदे सति पंचांगोपरि सुगमोपायत्वान्मासप्रवेशानयनं सर्वैः क्रियते । तदशुद्धम् । अथ सूक्ष्मघटिकानयनमाह । यस्माद्ग्रंथाज्जन्मकालीनसूर्यो यावद्भिः संस्कारैः संस्कृतोऽस्ति तावद्भिः संस्कारैः तस्माद्ग्रंथान्मासप्रवेशार्कः मासप्रवेशदिवसे सूर्यः साध्यः मासप्रवेशदिवसे ज्ञानं पंचांगोपरि अनुमानेन ज्ञातुं शक्यते । जन्मकालीनसूर्ये एकराशौ योजिते जातो मासप्रवेशार्कः मासप्रवेशदिवसे सूर्यो यः साधितो भवति तयोर्मासप्रवेशार्कयोरंतरं कार्यं तस्य कलाः कार्याः मासप्रवेशसमये सूर्यो यः साधितो भवति तस्य गतिः कलाभिर्भाज्या फलं तेन घटीपलात्मकं ग्राह्यं मासप्रवेशे सूक्ष्मघटिकाः भवंति । उदाहरणम् । ग्रहलाघवाज्जन्मकालीनश्चरदेशांतरसंस्कृतः स्पष्टोर्कः ९ । ७ । ३० । ६ जातः एकराशियुक्तो जातो

द्वितीयमासप्रवेशेऽर्कः १० । ७ । २० । ६ फाल्गुनकृष्ण ६ भौमे ग्रहलाघवादहर्गणः ३६२४ चक्रं ९ सूर्योदये मध्यमोऽर्कः १० । ५ । ७ । ५५ देशांतरविकलाभि २२ र्युक्तो १० । ५ । ८ । १७ मंदकेंद्रं ४ । १२ । ५१ । ४३ मंदफलं धनं १ । ३५ । ४९ संस्कृतोऽर्कः १० । ६ । ४४ । ६ चरं धनं १ । २४ संस्कृतः जातो मासप्रवेश-दिवसे स्पष्टोऽर्कः १० । ६ । ४५ । ३० स्पष्टा गतिः ६० । ३५ उभयोरंतरम् ० । ० । ४४ । ३६ अस्य कलाः ४४ । ३६ गतिकलाभिः ६० । ३५ भक्ताः सवर्णितौ भाज्य २६७६ भाजकौ ३६३५ भाजनाल्लब्धं दिनघटीपलात्मकम् ० । ४४ । १० एवं फाल्गुनकृष्ण ६ भौमे सूर्योदयाद्गतघटीषु ४४ पलेषु १० जातो द्वितीयमासप्रवेशः । अनया रीत्या चेत्साध्यते तदा मासप्रवेशे सूक्ष्मघटिकाः भवंति अस्मिन्समये सूर्यः १० ७ । २० । ६ अयं पूर्वतुल्यो जातः एवमग्रेपि बोध्यम् । अनया रीत्या दिनप्रवेशः साध्यः मासदिनप्रवेशसमये ग्रहभावाः साध्याः पंचवर्गीफलादिकं विचार्यम् ॥ २ ॥

**आसीदसीमगुणमंडितपण्डिताग्र्यो व्याख्यद्भुजंगपगवीः श्रुतिवित्सुवृत्तः ॥ साहित्यरीतिनिपुणो गणितागमज्ञश्चिंतामणिर्विपुलगर्गकुलावतंसः ॥ १ ॥ तदात्मजोऽनंतगुणोऽस्त्यनंतो योऽधोक्तदुक्तीः किल कामधेनुम् ॥ संतुष्टये जातकपद्धतिं च न्यरूपयद्दुष्टमतं निरस्य ॥ २ ॥**

अथ ग्रंथालंकारस्तत्र पितामहवर्णनमाह–आसीदिति चिंतामणिश्चिंतामणिसंज्ञक आसीत् बभूव । कथंभूतश्चिन्तामणिः असीमगुणमंडितपंडिताग्र्यः असीमा निर्मर्यादाः अनंता गुणाः साधुत्वादयः तैर्मंडिताः युक्ता इति यावत् । ये पंडिताः शास्त्रज्ञास्तेष्वग्र्यः श्रेष्ठः अतिपंडित इत्यर्थः । पांडित्यमेव विवृणोति । पुनः कथंभूतः भुजंगपगवीः भुजंगपः शेषनागस्तस्य गावो वाण्यः महाभाष्यरूपाः व्याख्यत् सदा महाभाष्याध्यापकं इत्यर्थः । पुनः कथंभूतः श्रुतिवित् वेदविद्यामर्मज्ञः । पुनः कथंभूतः सुवृत्तः समीचीनाचरणः यथा कालविहितश्रौतस्मार्तकर्मानुष्ठानशीलः पुनः कथंभूतः साहित्यरीतिनिपुणः अलंकारज्ञानविषयेऽतिपंडित इत्यर्थः । पुनः कथंभूतः गणितागमज्ञः ज्योतिःशास्त्रज्ञः पुनः कथंभूतः विपुलगर्गकुलावतंसः विपुलं महद्यद्गर्गकुलं गर्गर्षेर्वंशस्तस्यावतंसः भूषणरूपः गर्गगोत्रोत्पन्न इत्यर्थः ॥ १ ॥ अथ पितृवर्णनमाह–तदात्मज इति । तदात्मजश्चिंतामणिदैवज्ञस्य पुत्रः अनंतः अनंताख्यदैवज्ञः प्रसिद्धोस्ति पृथिव्याम् । अनंतगुणः असंख्येयगुणाश्रयीभूतः स कः असंदिग्धं कामधेनुसंज्ञं तिथ्यादिपंचांगसाधकं ज्योतिःशास्त्रे प्रसिद्धं ग्रंथं तस्मात्तदुक्तीः ग्रंथे गणितव्याख्यानानि अधोक् दुदोह । कामधेनुसारिण्युपरि येन टीका कृतेत्यर्थः। किमर्थं सन्तुष्टये सतां गुणग्राहिणां दैवज्ञानां संतोषार्थम् । तथा जातकपद्धतिमुत्पन्नबालकस्य तज्जन्मकालमधिकृत्य शुभाशुभनिरूपकं शास्त्रं तदु-

पजीव्यगणितप्रतिपादिकाकृतिं न्यरूपयत् निरूपितवान् । ननु श्रीपत्यादिपद्धतीनां सत्वेन कथं तां कृतवानित्यपेक्षायामाह-दुष्टमतमिति । दुष्टमतं युक्तिविरुद्धं निरस्य दूषणदानेन दूरीकृत्य ॥ २ ॥

पद्मांबयाऽसावि ततो विपश्चिच्छ्रीनीलकंठः श्रुतिशास्त्रनिष्ठः ॥
विद्वच्छिवप्रीतिकरं व्यधात्तं संज्ञाविवेकं सहमावतंसम् ॥ ३ ॥

इति ताजिकनीलकंठ्यां संज्ञातंत्रं समाप्तम् ॥ १ ॥

अथ स्ववर्णनपूर्वकं संज्ञातन्त्रमाह-पद्मांबयेति । ततोऽनंतदैवज्ञात् पद्मांबया पद्मानाम्नी या अंबा माता तयेत्यर्थः । श्रीनीलकंठः पांडित्यादिशोभायुतो नीलकंठरूपः पुत्रः असावि प्रसूतः कथंभूतः विपश्चित् पंडितः श्रुतिशास्त्रनिष्ठः वेदशास्त्रसंपन्नः । संज्ञाविवेकं संज्ञाविचारं ग्रंथं व्यदधात् कृतवान् । कथंभूतं सहमावतंसं सहमनिरूपकशास्त्रमवतंसः भूषणं यस्य तम् अत्र ग्रंथे सहमविचारं सम्यङ्निरूपितवान् । पुनः कथंभूतम् विद्वच्छिवप्रीतिकरं पंडितं शिवस्य प्रीतिदम् ॥ ३ ॥

इति श्रीदिवाकरदैवज्ञात्मजविश्वनाथदैवज्ञविरचिते श्रीनीलकंठज्योतिर्वित्कृतसंज्ञातंत्रसहमाध्यायस्य व्याख्योदाहृतिः समाप्ता ॥

अकारि विश्वनाथेन संज्ञातंत्रप्रकाशिका ॥
टीका टीकाकृतिं कुर्यात्सज्जालज्ज्ञानुबंधनम् ॥ १ ॥
चंद्रबाणशरचंद्र १५५१ संमिते हायने नयदिशालिवाहने ॥
मार्गशीर्षसितपंचमीतिथौ विश्वनाथविदुषा समापितम् ॥ २ ॥

---

## वर्षप्रमुंथहारिष्टयोगादिफलाध्यायः १.

स्वस्वाभिलाषं नहि लब्धुमीशा निर्विघ्नमीशानमुखाः सुरौघाः ॥
विना प्रसादं किल यस्य नौमि तं ढुंढिराजं मतिलाभहेतुम् ॥ १ ॥

श्रीगणेशाय नमः ॥ यत्पादपद्मं सुरसिद्धदैत्या अभीष्टसिद्ध्यै प्रणमंति नित्यम् ॥ तं विघ्नराजं मनसा स्मरामि भक्तप्रियं नागमुखं गणेशम् ॥ १ ॥ गोदावरीतटे भाति गोलग्रामोऽतिसुंदरः ॥ तत्रावसन्पूर्वजा मे सिद्धांतांबुजभानवः ॥ २ ॥ अनेकविद्याकुशलैर्द्विजेंद्रैः संसेवितो भूमितले प्रसिद्धः ॥ दिवाकरो दैवविदां वरिष्ठो वेदांतशास्त्रासिरुचिर्बभूव ॥ ३ ॥ तस्यात्मजाः पंचगुणैरुपेता जाता अमीषां प्रथमस्तु कृष्णः ॥ दैवज्ञवर्यः सकलागमज्ञो विश्वेशपादाब्जरतो नितांतम् ॥ ४ ॥ तस्यानुजौ ख्यातशिरोमणी तौ यौ विष्णुमल्लार्यभिधौ पृथिव्याम् ॥ त्रिस्कंधपारंगमरंगमल्लौ श्रीकेशवस्याग्रजनी प्रसिद्धौ ॥ ५ ॥ तस्यानुजो गणितविद्गणनाग्रगण्यो मल्लारिसेवनसमुद्गतशास्त्रपण्यः ॥

सच्छास्त्रबुद्धिसुहृदां च महाशरण्यः श्रीविश्वनाथगणकः सुतरां चकास्ति ॥ ६॥ आसीन्नाम्ना नीलकंठो द्विजाग्र्यो ज्योतिःसिंधोः पारदृग्भाष्यवेत्ता ॥ तेनोद्दिष्टे वर्षतंत्रे करोमि टीकां सम्यग्विश्वनाथो विविच्य ॥ ७ ॥ तत्र ग्रंथारंभे प्रारिप्सितनिर्विघ्नसमाप्त्यर्थं कृतं मंगलं शिष्यशिक्षायै निबध्नाति । अहं नीलकंठस्तं ढुंढिराजं नौमि नमस्करोमि । कथंभूतं मतिलाभहेतुं मतिर्बुद्धिस्तस्या लाभः प्राप्तिस्तत्र हेतुं कारणम् । तं कं यस्य ढुंढिराजस्य प्रसादमनुग्रहं विना ईशानमुखाः सुरौघाः ईशानो महादेवस्तदादयः सुरौघा देवसमूहाः निर्विघ्नं यथा स्यात्तथा स्वस्वाभिलाषं स्वीयस्वीयमनोरथं लब्धुमीशाः समर्थाः नहि न भवंति किलेति निश्चयेन । श्रुत्यादौ श्रूयते अतो गणेशस्तुतिरावश्यकी ॥१॥

**जातकोदिततदशाफलं च यत्स्थूलकालफलदं स्फुटं नृणाम् ॥**
**तत्र न स्फुरति दैवविन्मतिस्तद्ब्रुवेऽब्दफलमादिताजिकात् ॥ २ ॥**

तत्र प्रथमं सप्रयोजनं तदारंभं प्रतिजानीति--जातकेति । तत्तस्मात्कारणात् अब्दफलं वर्षीयशुभाशुभफलमादिताजिकात् प्रथमताजिकग्रंथात् जात्यभिप्रायेणैकवचनं पूर्वताजिकग्रंथेभ्य इत्यर्थः । ब्रुवे वदामि । तस्मात्कस्मात् यतोयतो यस्मात्कारणात् जातकशास्त्रोक्तदशाशुभाशुभफलं नृणां मनुष्याणां स्थूलकालफलदं स्थूलकालेन वर्षाधिककालेनोत्सर्गतः फलं ददाति इति स्फुटं यतस्तत्र ग्रहाणामायुर्दायात्मकदशा वर्षसमूहात्मका गणितेनागच्छंति तत्र तस्मिन्फले दैवविन्मतिः दैवज्ञानां बुद्धिः न स्फुरति कस्मिन्समये किं फलं भवति सूक्ष्मविचारे बुद्धिः स्फुटा न भवति अतो वर्षमध्ये फलज्ञानार्थमिदं वदामीत्यर्थः ॥ २ ॥

**गताः समाः पादयुगाः प्रकृतिघ्नसमागणात् ॥ खवेदाप्तघटीयुक्ता जन्मवारादिसंयुताः ॥ ३॥ अब्दप्रवेशे वारादिः सप्ततष्टेत्र निर्दिशेत् ॥ शिवघ्नोऽब्दः खखाद्रींदुलब्धाढ्यः खाग्निशेषितः ॥४॥ जन्मतिथ्यन्वितस्तत्र तिथावब्दप्रवेशनम् ॥ तत्कालेर्कों जन्मकालरविणा स्याद्यदा समः ॥५॥ एकैकराशिवृद्ध्या चेत्तुल्यों शाद्यैर्यदा रविः ॥ तदा मासप्रवेशो द्युप्रवेशश्चेत्कलासमः॥६॥ तात्कालिकास्तु खचराः सुधिया विधेयाः स्पष्टा विलग्नमुखभावगणो विधेयः ॥ वीर्यं तथोक्तविधिना निखिलग्रहाणामब्दाधिपस्य विधये कथयामि युक्तिम् ॥ ७ ॥ द्विघ्नं प्रश्नांगभागाद्यं शरलब्धं स्फुटेष्विह ॥ प्रश्नांगाद्धायनफले तुर्यंशो लग्नपो भवेत् ॥ ८ ॥**

गताः समा इत्यादिपंचश्लोकाः संज्ञातंत्रटीकायां व्याख्याताः ॥ ३ ॥ ४ ॥ ५ ॥ ॥ ६ ॥ ७ ॥ ८ ॥

**जन्मलग्नपतिरब्दलग्नपो मुंथहाधिप इति त्रिराशिपः॥ सूर्यराशिपतिरह्नि चंद्रभाधीश्वरो निशि विमृश्य पंचकम् ॥ ९ ॥ बलीय एषां तनुमीक्षमाणः सवर्षपो लग्नमनीक्षमाणः॥नैवाब्दपो दृष्टयतिरेकतः स्याद्बलस्यं साम्ये विदुरेवमाद्याः ॥ १० ॥ दृगादिसाम्येप्यथ निर्बलत्वे वर्षाधिपः स्यान्मुथहेश्वरस्तु । पंचापि नो चेत्तनुमीक्षमाणा वीर्याधिकोऽब्दस्य विभुर्विचिंत्यः ॥ ११ ॥**

अथ श्लोकत्रयेण प्रतिज्ञातं वर्षेश्वरनिर्णयमाह-जन्मेति । बलीय इति । दृगादिसाम्ये इति च । जन्मकाले यल्लग्नं तस्य स्वामी अब्दलग्नपः वर्षप्रवेशकालिकलग्नस्वामी मुंथहाधिपः मुंथहा वक्ष्यमाणा तस्याः स्वामीति एतदनंतरम् । त्रिराशिपः संज्ञातंत्रोक्तत्रैराशिकस्वामी । ततः । अह्नि दिवसे वर्षप्रवेशे सति सूर्यराशिपतिः सूर्याधिष्ठितराशिस्वामी । निशि रात्रौ वर्षप्रवेशे सति चंद्रभाधीश्वरः चंद्राक्रांतराशिस्वामी इदं पंचकं विमृश्य विचार्य एषां पंचानां मध्ये य एकतरस्तनुं पश्यति वर्षप्रवेशकाललग्नमीक्षमाणः पश्यन्बली पंचवर्गीबलाधिकः स ग्रहः पंचान्यतमः वर्षस्वामी वर्षलग्नमनीक्षमाणः अपश्यन्बलाधिकोपि नैव वर्षेश्वरः । बलस्य तुल्यत्वे दृष्टयतिरेकतः दृष्टयाधिक्यादब्दपो भवति एवमित्याद्याः पुरातना आचार्याः विदुः आहुः दृगादिसाम्ये दृशिसाम्ये आदिपदाद्बलसाम्येऽपि अनयोः समतायामथवा निर्बलत्वे पंचानां लग्नदर्शित्वेपि पंचविंशोपकोनपंचवर्गीबलवत्तायाम् । उभयत्र मुंथहास्वाम्येव वर्षेश्वरो भवति । चेद्यदि पंचाधिकारिणो ग्रहा अपि वर्षलग्नेक्षमाणाः पश्यंतो न भवंति तदैषां मध्ये यो बलाधिकः स एव वर्षस्य विभुः स्वामी विचारणीयः । बलयोः साम्ये मुंथहेश्वर एवेति ज्ञेयम् ॥ ९ ॥ १० ॥ ११ ॥

**बलादिसाम्ये रविराशिपोऽह्नि निशींदुराशीडिति केचिदाहुः॥ येनेत्थशालोऽब्दविभुः शशी स वर्षाधिपश्चंद्रभपोन्यथात्वे ॥ १२ ॥**

अथ मतांतरं चंद्रस्य वर्षेश्वरत्वसंभावनायां विशेषं चाह-बलेति । पंचाधिकारिग्रहान्यतमयोर्बलदृष्टयोः समतायामह्नि दिवसे वर्षप्रवेशे सति सूर्याक्रांतराशिस्वामी । अंतिमाधिकारी ग्रहो वर्षस्य स्वामी । निशि रात्रौ वर्षप्रवेशे सति इंदुराशीट् चंद्राक्रांतराशिस्वामी । अंतिमाधिकारी ग्रहो वर्षस्य स्वामी भवतीत्येवं केचिदाचार्या आहुः । पूर्वोक्तप्रकारावगतौ वर्षस्वामी चंद्रो येन ग्रहेण सप्तान्यतमे

इत्थशाली मुथशिलकारी स ग्रहो वर्षस्वामी अनेकग्रहमुथशिलकारी चेत्तदा तद्ग्रहाणां मध्ये यो बलाधिकः। बलसाम्ये मुथहेश्वर' इति सुधियोह्यम् । चंद्रस्य मुथशिलाभावे निर्णयमाह—चंद्रभप इति। अन्यथात्वे चंद्रस्य मुथशिलाभावे सति चंद्राक्रांतराशिस्वामी वर्षेश्वरो भवति । अनेन प्रकारेण कर्कस्थे चंद्रभासि चंद्र एव वर्षेश्वरो नान्य इति ज्ञेयम् ॥ १२ ॥

अब्दाधिपो व्ययषडष्टमभिन्नसंस्थो लब्धोदयोऽब्दजनुषोः सदृशो बलेन ॥ निःशेषमुत्तमफलं विदधाति काये नैरुज्यराज्यबललब्धिरतीव सौख्यम् ॥ १३ ॥ बलपूर्णेऽब्दपे पूर्णं शुभं मध्ये च मध्यमम् ॥ अधमे दुःखशोकारिभयानि विविधाः शुचः ॥ १४ ॥

अथ वर्षेश्वरस्थितवशेन फलमाह—अब्दाधिप इति । अब्दाधिपो वर्षस्वामी ग्रहः । व्ययषडष्टमाभिन्नस्थः द्वादशषष्ठाष्टमस्थानव्यतिरिक्तस्थानस्थितः । यद्यपि लग्नदर्शित्वेन वर्षस्वाम्युक्ते वर्षस्वामी षष्ठाष्टमद्वादशस्थानेष्वनवस्थित एवेति वक्तमनुचितं तदतिरिक्तस्थानस्थ इति । तथापि पंचापि चेन्नो तनुमीक्षमाणा इत्यादिप्रकारे षष्ठाष्टमद्वादशस्थानस्थितस्यापि वर्षेश्वरत्वसंभवः राशिकुंडल्यां दृष्टिसद्भावेन तत्र लग्नद्रष्टुर्वर्षेश्वरस्य भावकुंडल्यां तत्स्थानस्थितत्वसंभावनाया ब्रह्मणोप्यनिवर्त्यत्वाच्च ,लब्धोदयः वर्षप्रवेशकाले प्राप्तोदयोस्तंगत इत्यर्थः । अब्दजनुषोः वर्षजन्मकालयोः बलेन पंचवर्गीबलेन सदृशस्तुल्यः अहीनबल इत्यर्थः । एतादृशो वर्षेश्वरोनिःशेषं समग्रमुत्तमफलं करोति तदेवाह कायेत्यादि । स्पष्टम् ॥ १३ ॥ अथ वर्षेश्वरफलं पंचवर्गीबलानुरोधाद्भवतीत्याह—बलेति । वर्षस्वामिनि बलेन पंचगर्वीबलेन पूर्णे सति शुभफलं पूर्णं भवति । मध्यबले शुभे मध्यं भवति । अधमे हीनबले दुःखरोगादीत्यादि स्पष्टम् ॥ १४ ॥

अथ सूर्यः ।

सूर्येऽब्दपे बलिनि राज्यसुखात्मजार्थलाभः कुलोचितविभुः परिवारसौख्यम् ॥ पुष्टं यशोगृहसुखं विविधा प्रतिष्ठा शत्रुर्विनश्यति फले जनिखेटयुक्त्या ॥ १५ ॥ मध्ये रवौ फलमिदं निखिलं तु मध्यं स्वल्पं सुखं स्वजनतोपि विवादमाहुः ॥ स्थानच्युतिर्न च सुखं कृशता शरीरे भीतिर्नृपान्मुथशिलो न शुभेन चेत्स्यात् ॥ १६ ॥ सूर्ये बलेन रहितेऽब्दपतौ विदेश-

थानं धनक्षयशुचोऽरिभयं च तंद्रा ॥ लोकापवादभयमुग्ररुजोऽतिदुःखं पित्रादितोऽपि न सुखं सुतामित्रभीतिः ॥ १७॥ चंद्रेऽब्दपे मुथशिलं येनासावब्दपोऽस्य चेत् ॥ कंबूलमिंदुना जन्म निशि वर्षं तदोत्तमम् ॥ १८ ॥

अथ वर्षेश्वरस्य सूर्यबलपूर्णतायां फलमाह-सूर्येऽब्दप इति । विनश्यतीत्यंतं स्पष्टं फलम् । इदमुक्तं फलं जनिखेटयुक्त्या जन्मकालग्रहविचारेण वाच्यम् । एतदुक्तं भवति । वर्षेश्वरग्रहो जन्मकाले उत्तमबलश्चेदत्राप्युत्तमबलस्तदोत्तमोत्तमम् । मध्यबलश्चेदुत्तमम् । अधमबलश्चेन्मध्यमम् । जन्मकाले मध्यमबलश्चेत्क्रमेणोत्तममध्यमाधमं च भवति जन्मकाले हीनबलश्चेत्क्रमेण मध्यमाधमाधमानि भवंति ॥ १५ ॥ अथ वर्षेश्वरार्कस्य मध्यबलत्वे फलमाह-मध्ये इति । इदमुत्तमबलसंबंधि यत्फलं प्रागुक्तं तत्समग्रं मध्यमं भवति स्वल्पामित्यादि नृपादित्यंतं स्पष्टम् । अनिष्टफलं तदा स्याद्यदा शुभेन ग्रहेण वर्षेश्वरस्य मुथाशिलो न स्यादर्थाच्छुभग्रहमुथाशिलमनिष्टं स्यादित्यपवाद उक्तः ॥१६॥ हीनबलार्कस्य फलमाह-सूर्येति । स्पष्टम् ॥१७॥ अथ येनेत्थशालोऽब्दविभुरिति दार्ढ्यार्थं पुनर्वदंस्तद्वर्षेश्वरस्य कंबूलयोगे रात्रिजन्मनि वर्षमुत्तमं तदित्याह-चंद्रे इति । चंद्रेऽब्दपे सति येन ग्रहेण चंद्रो मुथशिलः । असौ वर्षेश्वरः । अस्य वर्षेश्वरस्य चंद्रेण कंबूलचंद्रातिरिक्तग्रहेण मुथशिलमित्यर्थः रात्रौ जन्म तदा वर्षमुत्तमं ज्ञेयमित्यर्थः ॥ १८ ॥

अथ चंद्रः ।

वीर्यान्विते शशिनि वित्तकलत्रपुत्रामित्रालयस्य विविधं सुखमाहुरार्याः ॥ स्रग्गंधमौक्तिकदुकूलसुखानि भूतिर्लाभः कुलोचितपदस्य नृपैः सखित्वम् ॥ १९ ॥ वर्षाधिपे शशिनि मध्यबले फलानि मध्यान्यमूनि रिपुतासुतमित्रवर्गैः ॥ स्थानांतरे गतिरथो कृशता शरीरे श्लेष्मोद्भवश्च यदि पापकृतेसराफः ॥ २० ॥ नष्टेऽब्दपे शशिनि शीतकफादिरोगश्चौर्यादिभीः स्वजनविग्रहमप्युशंति ॥ दूरे गतिः सुतकलत्रसुखात्ययश्च स्यान्मृत्युतुल्यमतिहीनबले शशांके ॥ २१ ॥

अथ चंद्रस्य पूर्णबलस्य फलमाह-वीर्यान्विते इति स्पष्टम् ॥ १९ ॥ अथ चंद्रस्य मध्यबलस्य फलमाह-वर्षाधिप इत्यादिना श्लेष्मोद्भवश्चेत्यंतम् । स्पष्टम् । यदि

पापग्रहेणेसराफयोगश्चंद्रस्य स्यात्तदा श्लेष्मोत्पत्तिः ॥ २० ॥ अथ नष्टातिहीनबलस्य चंद्रस्य फलमाह-नष्ट इति । नष्टे सूर्याक्रांतत्वेनास्तंगते । उत्तरार्द्धं हीनबलस्य फलम् ॥ २१ ॥

अथ भौमः ।

भौमेऽब्दपे बलिनि कीर्तिजयारिनाशः सेनापतित्वरणनायकता प्रदिष्टा ॥ लाभः कुलोचितधनस्य नमस्यता च लोकेषु मित्रसुतवित्तकलत्रसौख्यम् ॥ २२ ॥ मध्येऽब्दपेऽवनिसुते रुधिरश्रुतिश्च ॥ कोपोऽधिको झकटशस्त्रहतिक्षतानि ॥ स्वामित्वमात्मगणतो बलगौरवं च मध्यं सुखं निखिलभुक्तफलं विचिंत्यम् ॥ २३ ॥ हीनेऽब्दपेसृजि भयं रिपुतस्कराग्निलोकापवादभयमात्मधिया विनाशः ॥ कार्यस्य विघ्नमतिरोगभयं विदेशयानं क्षयोऽपनयतो गुरुदृष्टचभावे ॥ २४ ॥

अथ भौमस्य बलपूर्णस्य फलमाह-भौम इति । स्पष्टम् ॥ २२ ॥ अथ भौमस्य मध्यबलस्य फलमाह-मध्य इति स्पष्टम् ॥ २३ ॥ अथ भौमस्य हीनबलस्य फलमाह-हीनइति । असृजि भौमे वर्षेशे हीनबले सति भयमित्यादि विदेशयानमित्यंतं स्पष्टम् । गुरुदृष्टिहीने भौमे सति अपनयत अनीतितः क्षयो नाशः ॥ २४ ॥

अथ बुधः ।

सौम्येऽब्दपे बलवति प्रतिवादलेख्यसच्छास्त्रसद्व्यवहृतौ विजयोऽर्थलाभः ॥ ज्ञानं कलागणितवैद्यभवं गुरुत्वं राजाश्रयेण नृपता नृपमंत्रिता वा ॥ २५ ॥ अब्दाधिपे शशिसुते खलु मध्यवीर्ये स्यान्मध्यमं निखिलमेतदथाध्वयानम् ॥ वाणिज्यवर्तनमथात्मजमित्रसौख्यं सौम्येत्थशालवशतोऽपरथा न सम्यक् ॥ २६ ॥ सौम्येऽब्दपेऽधमबले बलबुद्धिहानिर्धर्मक्षयः परिभवो निजवाक्यदोषात् ॥ निक्षेपतो विपदतीव मृषैव साक्ष्यहानिः परव्यवहृते सुतवित्तमित्रैः ॥ २७ ॥

अथोत्तमबलिनो बुधस्य फलमाह-सौम्य इति । स्फुटार्थम् ॥ २५ ॥ अथ मध्यबलस्य बुधस्य फलमाह-अब्दाधिप इति । एतत्प्रागुक्तं सर्वं मध्यमं स्यात् ।

शुभग्रहमुथशिलानुरोधतः आत्मजमित्रयोः सुखं भवति । अपरथा अशुभग्रहेसराफेन तयोः सम्यक् शुभं न स्यात् ॥ २६ ॥ अथ हीनबलस्य बुधस्य फलमाह-सौम्य इति । स्पष्टार्थम् ॥ २७ ॥

अथ गुरुः ।

जीवेऽब्दपे बलयुते परिवारसौख्यं धर्मो गुणग्रहिलता धनकीर्तिपुत्राः ॥ विश्वास्यता जगति सन्मतिविक्रमाप्तिर्लाभो निधेर्नृपतिगौरवमप्यरिघ्नम् ॥ २८ ॥ अब्दाधिपे सुरगुरौ किल मध्यवीर्ये स्यान्मध्यमं फलमिदं नृपसंगमश्च ॥ विज्ञानशास्त्रपरताप्यशुभेसराफे दारिद्र्यमर्थविलयश्च कलत्रपीडा ॥ २९ ॥ जीवेऽब्दपेऽधमबले धनधर्मसौख्यहानिस्त्यजंति सुतामित्रजनाः सभार्याः ॥ लोकापवादभयमाकुलतातिकष्टं वृत्तिस्तनौ कफरुजो रिपुभीः कलिश्च ॥ ३० ॥

अथ गुरोरुत्तमबलिनो वर्षेश्वरस्य फलमाह-जीव इति स्पष्टम् ॥ २८ ॥ मध्यबलिनस्तस्य फलमाह-अब्दाधिप इति । इदं प्रागुक्तं फलं मध्यमम् ॥ अशुभग्रहेणेसराफे सति दारिद्र्यमित्यादिश्लोकांतं फलं शेषं स्पष्टम् ॥ २९ ॥ हीनस्य तस्य फलमाह-जीव इति । स्पष्टम् ॥ ३० ॥

अथ शुक्रः ।

शुक्रेऽब्दपे बलिनि नीरुजता विलाससच्छास्त्ररत्नमधुराशनभोगतोषाः ॥ क्षेमप्रतापविजया वनिताविलासो हास्यं नृपाश्रयवशेन धनं सुखं च ॥ ३१ ॥ अब्दाधिपे भृगुसुते खलु मध्यवीर्ये स्यान्मध्यमं निखिलमेतदथाल्पवृत्तिः ॥ सुखं च दुःखमखिलं सुनिबद्धवृत्तिः पापारिवीक्षितयुते विपदोऽर्थनाशः ॥ ३२ ॥ शुक्रेऽब्दपेऽधमबले मनसोऽतितापो लोकोपहासविपदो निजवृत्तिनाशः ॥ द्वेषः कलत्रसुतमित्रजनेषु कष्टादन्नाशनं च विफलक्रियता न सौख्यम् ॥ ३३ ॥

अथ शुक्रस्योत्तमबलिनो वर्षेशस्य फलमाह-शुक्र इति । स्पष्टम् ॥ ३१ ॥ मध्यबलस्य तस्य फलमाह-अब्दाधिप इति । पापग्रहः यश्च शत्रुस्ताभ्यां दृष्टे युते वा शुक्रे

विपदोर्थनाश इति । अत्र वीक्षितयुत इत्युक्त्या राशिकुंडल्यां दृष्टिर्विलोक्या भावकुंडल्यं संयुक्तत्वं द्रष्टव्यमिति स्पष्टीकृतम् । अन्यथा ताजिकशास्त्रे प्रथमस्थाने दृष्ट्युक्तेर्वीक्षित इत्यनेन युतिसिद्धौ युत इत्यस्य वैयर्थ्यापत्तेः शेषं स्पष्टम् ॥ ३२ ॥ अथ हीनबलस्य तस्य फलमाह–शुक्र इति । स्पष्टम् ॥ ३३ ॥

अथ शनिः ।

मंदेऽब्दपे बलिनि नूतनभूमिवेश्मक्षेत्राप्तिरर्थनिचयो यवनावनीशात् ॥ आरामनिर्मितिजलाशयसौख्यमंगपुष्टिः कुलोचितपदाप्तिगुणाग्रणीत्वम् ॥ ३४ ॥ अब्दाधिपे रविसुते खलु मध्यवीर्यें स्यान्मध्यमं निखिलमन्नभुजिस्तु कष्टात् ॥ दासोष्ट्रमाहिषकुलान्यरतस्तु लाभः पापं फलं भवति पापयुगीक्षणेन ॥ ३५ ॥ मंदे बलेन रहितेऽब्दपतौ क्रियाणां वंध्यत्वमर्थविलयो विपदोऽरिभीतिः ॥ स्त्रीपुत्रमित्रजनवैरकदन्नभुक्तं सौम्येत्थशालयुजि सौख्यमपीषदाहुः ॥ ३६ ॥ वर्षेश्वरो भवति यः सदशाधिपोब्दे ज्ञेयोऽखिलेऽब्दजनुषोर्बलमस्य चिन्त्यम् ॥ वीर्यान्वितेऽत्र निखिलं शुभमब्दमाहुर्हीने त्वनिष्टफलता समता समत्वे ॥३७॥ येनेत्थशालोऽब्दपतेर्ग्रहोऽसौ स्वीयस्वभावात्सुफलं ददाति ॥ शुभेसराफे शुभमस्ति किंचिदनिष्टमेवाशुभमूसरीफे ॥ ३८ ॥ हद्दे यादृशि यः खेट आधत्तेऽत्र च यो महः ॥ जन्मन्यब्दे च तादृक्चेत्तदात्मफलदस्त्वसौ ॥ ३९ ॥

अथोत्तमबलिनः शनेर्वर्षेशस्य फलमाह–मंद इति । स्पष्टम् ॥ ३४ ॥ मध्यमबलिनस्तस्य फलमाह–अब्दाधिपे इति । पापग्रहयोगेन दृष्ट्या वा पापं फलं दुष्टं फलं स्यात् । योगो भावकुंडल्यां द्रष्टव्य इत्याग्रहार्थं युगुक्तिः । शेषं स्पष्टम् ॥ ३५ ॥ हीनबलिनः शनेर्वर्षेशस्य फलमाह–मंदे इति । सौम्येत्थशालयुजि शुभग्रहमुथशिले शुभग्रहयोगे वा ईषत् किंचिद्वर्षे सौख्यमपि भवति । शेषं स्पष्टम् ॥ ३६ ॥ वर्षेश्वर इति । यो ग्रहो वर्षेश्वरो भवति । स ग्रहः संपूर्णे वर्षे दशाधिपो ज्ञेयः । तद्वर्षं संपूर्णं तस्य दशेत्यर्थः । अस्य वर्षे अस्य वर्षजन्मकालयोः बलं पंचवर्गीबलं चिंत्यं विचार्यम् । उतममध्यमाधमादिभेदेन वीर्यान्विते उभयत्र बलिष्ठे साति वर्षे शुभफलत्वं समत्वे जन्मनि वीर्यान्विते वर्षे मध्यबले हीनबले वा । जन्मनि मध्यबले हीनबले वा । वर्षे

वीर्यान्विते जन्मनि मध्यबले वर्षे हीनबले इत्यादौ तारतम्ये उत्तमाधमपक्षफलापेक्षया वर्षमध्ये फलदाता ॥ ३७ ॥ येनेति । वर्षेश्वरस्य येन ग्रहेण मुथशिलः असौ मुथशिलकारी ग्रहः स्वीयस्वभावात् आत्मीयप्रागुक्तसंज्ञातंत्रोक्तस्वरूपवशतः सुफलं शुभफलं ददाति । शुभग्रहकृतेसराफे सति वर्षे किंचित्सुखं वर्त्तते । अशुभग्रहकृतेसराफे सति अनिष्टमेव अशुभफलमेव भवति ॥ ३८ ॥ हद्दे इति। यः वर्षस्वामी ग्रहः यादृशि मित्रशत्रुग्रहसंबंधिनि हद्दे हद्दांशे भवति । अत्र अस्मिन्मित्रशत्रुग्रहे अत्र वर्षेश्वर इति केचित् । यो ग्रहः चकारान्मित्रशत्रुदृशा मद्द उक्तांशरूपं तेजः आधत्ते धारयति मुथशिलकारी भवति । जन्मकाले वर्षप्रवेशकालेपि तादृगुक्तप्रकारसदृशः असौ वर्षग्रहस्तदा तदानीमात्मफलदः शुभाशुभफलदाता स्यात् ॥ ३९ ॥

**यो जन्मनि फलं दातुं विभुर्मूसरिफोस्य चेत ॥ अब्दलग्नाब्दपभवस्तस्मिन्नब्दे न तत्फलम् ॥ ४० ॥ व्यत्यासे फलमादेश्यमित्थशाले विशेषतः ॥ नोभयं चेत्तदाप्यस्ति जन्माश्रयमिति स्फुटम् ॥ ४१ ॥**

य इति । व्यत्यास इति च । जन्मनि यो ग्रहः स्वभावजं दातुं कर्तुं विभुः समर्थः स्वभावं पश्यन्नाधिष्ठितो वा अस्य ग्रहस्य यदि अब्दलग्नाब्दभवः वर्षलग्नस्वामिवर्षस्वामिनोरुत्पन्नः मूसरिफः ईसराफयोगः स्यात्तर्हि तस्मिन्वर्षे तत्फलं जन्मकालीनभावोत्पन्नफलं न तत्फलनाशो भवतीत्यर्थः । व्यत्यासे ईसराफाभावे फलं जन्मकालिकं भावजं फलमादेश्यं कथनीयम् । इत्थशाल मुथशिले सति विशेषतः अत्यन्तं तत्फलं स्यात । उभयमीसराफमुथशिलौ न स्यातां यदि तदापि जन्माश्रयं जन्मकालीनभावजं फलमस्ति भवतीति स्फुटम् । बाधकाभावात्तत्फलं केन निवारणीयमित्यर्थः । यद्यपि व्यत्यासे फलमादेश्यमित्यनेन पौनरुक्त्यं तथापि तत्स्पष्टत्वार्थमिदमुक्तम् । अन्यथोक्तात्रिष्वेकतमवैयर्थ्यापत्तेः । वस्तुतस्तु ग्रंथकृतोत्र प्रमादः ॥ ४० ॥ ४१ ॥

उदाहरणम् ।

**पुत्राधिपो जन्मनि पुत्रभावं पश्यन्सुतं दातुमसौ समर्थः ॥ वर्षेशपुत्राधिपमूसरीफे पुत्रस्य नाशो भवतीति वर्षे ॥ ४२ ॥ अब्देश्वरो गुरुर्मित्रहद्दे मित्रदृशा शशी ॥ महोत्राधादमूद्दस्स वर्षेऽब्दस्तेन शोभनः ॥ ४३ ॥ एवमुन्नेयमन्यच्च शुभाशुभफलं बुधैः ॥ बलाबलविवेकेन योगत्रयविमर्शतः ॥ ४४ ॥**

**इत्यब्दपफलाध्यायः ॥**

प्रथमश्लोकस्फुटार्थबोधायोदाहरति पुत्राधिप इति । जन्मनि जन्मकाले पुत्राधिपः पंचमभावस्वामी पुत्रभावं पंचमभावं पश्यन्नसौ पुत्रस्वामी ग्रहः पुत्रफलं दातुं समर्थः शक्तः सः फलदाता ग्रहः वर्षे यत्र कुत्राप्यवस्थितो वर्षेशेनेसराफी अतः इहास्मिन्वर्षे पुत्रस्य नाशो भवति । एवमन्यभावेपि वर्षलग्नेशेसराफेनाप्युदाहार्यम् ॥ ४२ ॥ हद्दे याद्दशीत्यादि सोदाहरणं स्पष्टयति अब्देश्वर इति । वर्षेश्वरो बृहस्पतिः जन्मनि स्वमित्रस्य हद्दांशे तस्मिन् मित्रदृष्ट्या चंद्रः महः उक्तं तेजः अधात् धारयति । मुथशिलकारीत्यर्थः । वर्षे अमूदृक् अमुं गुरुं पश्यति असौ अमूदृक् । अयमर्थः स्वमित्रादिहद्दास्थिते गुरौ यदि चंद्रो मुथशिलद्वारा महः धारयति । स वर्षेश्वरस्तेन कारणेन अब्दः वर्षकालः शुभः केचित् अब्देश्वर इति योगांतरम् । अमूदृक्इत्यस्यार्थस्तु अमुं चंद्रं पश्यतीति । तन्न । उदाहरणप्रकरणपठितत्वेन योगांतरासंभवात् मूलवाक्याभावाच्च ॥ ४३ ॥ उपसंहरति ॥ एवमिति । अनयोक्तरीत्या अन्यच्छुभाशुभफलं बलाबलविवेचनेन योगत्रयविमर्शतः । मुथशीलकंबूलेसराफेति योगत्रयाणां विचारेण बुधैर्ज्ञेयम् ॥ ४४ ॥ इति दिवाकरविरचितायां ताजिकनीकण्ठीटीकायां वर्षफलाध्यायः ॥

अथ मुथहानिरूपणम् ।

**स्वजन्मलग्नात्प्रतिवर्षमेकैकराशिभोगान्मुथहाभ्रमेण ॥ स्वजन्मलग्नं रवितष्टयातशरद्युतं साभमुखेन्थिहा स्यात् ॥ ४५ ॥ प्रत्यहं शरलिप्ताभिर्वर्द्धते सानुपाततः ॥ सार्द्धमंशद्वयं मासे इत्याहुः केपि सूरयः ॥ ४६ ॥ स्वामिसौम्येक्षणात्सौख्यं क्रुतदृष्ट्या भयं रुजः ॥ भावालोकनसंयोगात्फलमस्या निरूप्यते ॥४७॥ वर्षलग्नात्सुखास्तांते रिपुरंध्रेष्वशोभना ॥ पुण्यकर्मायगा स्वाम्यं दत्तेऽन्यत्रोद्यमाद्धनम् ॥ ४८ ॥**

अथमुथहाफलार्थं मुथहानयनमाह—स्वजन्मलग्नादिति । संज्ञातंत्रव्याख्यायां स्पष्टम् ॥ ४५ ॥ अस्या उपपत्त्या ग्रहवद्गतिरस्तीत्याह—प्रत्यहमिति । प्रतिसौरदिनं सा मुंथा अनुपाततः •षष्ट्यधिकशतत्रयसौरांशैरेकराशिकलास्तदैकसौरादिनेन का इत्यनुपातात्पंचकलाभिर्वर्धते । अनया रीत्या सौरमासे सार्धांशद्वयं वर्द्धते च इत्येवं केपि पंडिताः वदंति स्वमते पूर्वग्रंथमध्ये मुंथाचलनानुक्तेर्वर्षांते एवाग्रिमराशावुड्डीय गच्छतीति यावद्वचनं हि वाचनिकमिति न्यायात्तत्त्वमंगीकृतम् ॥ ४६ ॥ स्वामिसौम्येति । स्वामिशुभ ग्रहदर्शनात्सुखम् । क्रुतदृष्ट्या रुजः भयम् । अस्या मुथहायाः फलं भावालोकनसंयोगान्निरूप्यते ॥ ४७ ॥ वर्षलग्नादितिस्पष्टम् ॥ ४८ ॥

शत्रुक्षयं मानसुतास्वलाभं ,प्रतापवृद्धिर्नृपतेः प्रसादम् ॥ शरीरपुष्टिं विविधोद्यमांश्च ददाति वित्तं मुथहा तनुस्था ॥ ४९ ॥
उत्साहतोर्थागमनं यशश्च स्वबंधुसन्माननृपाश्रयाश्च ॥ मिष्टान्नभोगो बलपुष्टिसौख्यं स्यादर्थभावे मुथहा यदाब्दे ॥५० ॥
पराक्रमाद्वित्तयशःसुखानि सौंदर्यसौख्यं द्विजदेवपूजा ॥ सर्वोपकारस्तनुपुष्टिकीर्तिर्नृपाश्रयश्चेन्मुथहा तृतीया ॥ ५१ ॥
शरीरपीडारिपुभीः स्ववर्ग्यवैरं मनस्तापनिरुद्यमत्वे ॥ स्यान्मुथहायां सुखभावगायां जनापवादामयवृद्धिदुःखम् ॥ ५२ ॥
यदीथिहा पंचमगाब्दवेशे सद्बुद्धिसौख्यात्मजवित्तलाभः ॥ प्रतापवृद्धिर्विविधा विलासा देवाद्विजार्चा नृपतेः प्रसादः ॥५३॥
कृशत्वमंगेषु रिपूदयश्च भयं रुजस्तस्करतो नृपाद्वा ॥ कार्यार्थनाशो मुथहारिगाचेद्दुर्बुद्धिवृद्धिः स्वकृतोऽनुतापः ॥ ५४ ॥
कलत्रबंधुव्यसनारिभीतिरुत्साहभंगो धनधर्मनाशः ॥ द्युनोपगाचेन्मुथहा तनोः स्याद्रुजामनोमोहविरुद्धचेष्टा ॥ ५५ ॥
भयं रिपोस्तस्करतो विनाशो धर्मार्थयोर्दुर्व्यसनामयश्च ॥ मृत्युस्थिता चेन्मुथहा नराणां बलक्षयः स्याद्गमनं सुदूरे ॥५६॥
स्वामित्वमर्थोपगमो नृपेभ्यो धर्मोत्सवः पुत्रकलत्रसौख्यम् ॥ देवद्विजार्चापरमं यशश्च भाग्योदयो भाग्यगतेथिहायाम् ॥५७॥
नृपप्रसादंस्वजनोपकारं सत्कर्मसिद्धिं द्विजदेवभक्तिम् ॥ यशोऽभिवृद्धिं विविधार्थलाभं दत्तेंऽबरस्था मुथहापदाप्तिम् ॥ ५८ ॥
यदीथिहा लाभगता विलाससौभाग्यनैरुज्यमनःप्रसादाः ॥ भवंति राजाश्रयतो धनानि सन्मित्रपुत्राभिमतागमश्च ॥५९॥ व्ययोऽधिको दुष्टजनैश्च संगो रुजा तनौ विक्रमतोप्यसिद्धिः ॥ धर्मार्थहानिर्मुथहा व्ययस्था यदा तदा स्याज्जनतोऽपि वैरम् ॥ ६० ॥
क्रूरैर्दृष्टः क्षुतदृशा यो भावो मुथहात्र चेत् ॥ शुभं तद्भावजं नश्येदशुभं चापि वर्धते ॥ ६१ ॥ इति मुंथाभावफलम्

शत्रुक्षयमित्यादिमुंथाभावफलश्लोकाः द्वादश स्पष्टाः ॥ ४९ ॥ ५० ॥ ५१ ॥ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ क्रूरैरिति । क्षुतदृशा अशुभदृष्ट्या पापग्रहैर्दृष्टो यस्तन्वादिर्भावः । अत्र अस्मिन् भावे यदि मुथहा भवति । तदा तद्भावगं मुथहाधिष्ठितभावस्थितं शुभफलं नश्येत् तद्भावसंबंध्यशुभफलं च वर्धते ॥ ६१ ॥

शुभस्वामियुक्तेक्षिता वार्य्ययुक्सेंथिहास्वामिसौम्येत्थशालं प्रपन्ना ॥ शुभं भावजं पोषयेन्नाशुभं साऽन्यथात्वेन्यथाभाव ऊह्यो विमृश्य ॥ ६२ ॥ जनुर्लग्नतोस्तांत्यषण्मृत्युबंधुस्थिताब्देहता क्रूरखेटैस्तु सा चेत् ॥ विनश्येत्स यत्रेन्थिहा भाव एवं शुभस्वामिदृष्टौ न नाशः शुभं च ॥ ६३ ॥ यदोभयत्रापि हताभावो नश्येत्स सर्वथा ॥ उभयत्र शुभत्वे तु भावोऽसौ वर्द्धतेतराम् ॥ ६४ ॥

अस्याः फलमाह–शुभमिति । सा वीर्ययुक्ता मुंथा भावजं स्वाधिष्ठितभावसंबंधिशुभफलं पोषयेत् वर्धयेत् । अशुभफलं तद्भावसंबंधि न वर्द्धयेत् । अन्यथात्वे शुभस्वामियुक्ता न भवति स्वामिसौम्येत्थशालं प्रपन्ना च न भवति । पापदृष्टा पापमुथशिला च भवति । तस्यामित्यर्थः अन्यथाभावः स्वभावसंबंध्यशुभफलं वर्धयेत् । शुभफलं तत्संबंधि न वर्धयेदिति विपरीतभाव इत्यर्थः । शुभाशुभदृष्टा शुभाशुभमुथशिला च तदा तदा विमृश्य शुभाशुभग्रहबलवशाद्विचार्य शुभमशुभं वा ज्ञेयमित्यर्थः ॥ ६२ ॥ जनुर्लग्नत इति । जन्मलग्नात्सप्तमद्वादशषष्ठाष्टमचतुर्थस्थानास्थिता मुंथा वर्षे सा मुंथा चेत् पापग्रहैर्हता युक्ता तदा वर्षे यस्मिन्भावे मुंथा स भावः विनश्येत् एवमुक्तरूपत्वे शुभग्रहस्वामिदृष्टौ सत्यां तस्य भावस्य नाशो न भवति शुभं च भवति ॥ ६३ ॥ यदेति । यदा उभयत्र जन्मनि वर्षे च अनिष्टस्थानस्था हता पापग्रहयुक्ता तदा स मुंथायुक्तो भावः सर्वथा अवश्यं नश्येत् । उभयत्र जन्मनि वर्षे च शुभत्वे शुभग्रहयुक्तत्वे असौ मुथायुक्तो भावः वर्द्धतेतरां सुतरामतिशयेन वर्द्धते ॥ ६४ ॥

वर्षेप्यनिष्टगेहस्था यद्भावे जनुषि स्थिता ॥ क्रूरोपघातात्तं भावं नाशयेच्छुभयुक्छुभा ॥ ६५ ॥ जनुर्लग्नतस्तुर्यगा सौम्ययुक्ताब्दवेशे पैतृकस्य लाभं विधत्ते ॥ नृपाद्भीतिदा पापयुक्तातिकष्टाष्टमादावपीत्थं विमर्शो विधेयः ॥ ६६ ॥ यस्मिन्भावे स्वामिसौम्येक्षिता चेद्भावो जन्मन्येष यस्तस्य वृद्धिः ॥ एवं पापैर्नाश उक्तस्तु तस्येत्यूह्यं वीर्याद्वर्षपः सौख्यमेव ॥ ६७ ॥

वर्षे इति । वर्षे लंग्नकुंडल्यामनिष्टस्थानस्था चतुर्थषष्ठसप्तमाष्टमद्वादशस्थिता अपिशब्दाज्जन्मलग्नादिषु स्थानेषु स्थिता तदा जनुषि जन्मकुंडल्यां यस्मिन्भावे स्थिता क्रूरोपघातात् वर्षे पापग्रहसंयुक्तत्वात् । तं जन्मस्थितमुथहा युक्तभावं नाशयेत् । वर्षशुभग्रहयुक्ता चेच्छुभफलदा ॥ ६५ ॥ उदाहरति-जनुर्लग्नत इति । जन्मलग्नाच्चतुर्थस्थानस्थिता । वर्षप्रवेशकाले शुभग्रहयुक्ता तदा पितुर्द्रव्यस्य उपलक्षणाच्चतुर्थभावचिंतासंबंधिफलस्येत्यर्थः लाभं करोति । पापग्रहयुक्ताचेन्नृपाद्भयं करोति । अतिकष्टफलदा भवति । इत्थमनयोक्तरीत्या विमर्शो विचारः अष्टमादौ चतुर्थस्थानव्यतिरिक्तानिष्टस्थानेपि विधेयः । तदुक्तभावफलस्य लाभो नाशो वा वक्तव्यः ॥६६॥ यस्मिन्निति । वर्षलग्नकुंडल्यामसौ मुंथा यस्मिन्भावे अधिष्ठिता सती स्वामिशुभग्रहाभ्यां दृष्टा । एष वर्षसंबंधी अयं भावो जन्मनि जन्मलग्नकुंडल्यां यो भावो भवति । मुंथाधिष्ठितवर्षभावस्य यो राशिर्जन्मभावकुंडल्यां यस्मिन् भावे भवतीत्यर्थः । तस्य तद्भावसंबंधिचिंतितपदार्थस्य वृद्धिः । पापग्रहैः एवं दृष्टा तस्य भावजन्मसंबंधिनो नाशः कथित इत्येवं ज्ञेयम् । अस्यापवादमाह । वीर्यादिति । वर्षस्वामिवीर्यात् बलवशात्सौख्यमेव करोति । न मुंथाकृतानिष्टफलं वर्षेशे बलिष्ठे सति मुंथाजनितानिष्टफलवृत्तिर्भवतीत्यर्थः ॥ ६७ ॥

यदीथिहा सूर्यगृहे युता वा सूर्येण राज्यं नृपसंगमं च ॥
दत्तेगुणानां परमाप्तवाप्तिं स्थानांतरस्योति फलं दृशोपि ॥६८॥

अथ मुथहा ग्रहयोगवीक्षणग्रहराशिस्थितफलं वक्तुकामः प्रथमं सूर्यस्याह--यदीति । मुथहा सूर्यग्रहे सिंहराशौ अथवा सूर्येण युक्ता तदा राज्यादिदत्ते गुणानां परभागमुत्कृष्टांशस्थानांतरप्राप्तिं च दत्ते दृशः सूर्यदृष्टेरपि इदं फलमुक्तम् ॥ ६८ ॥

चंद्रेण युक्तेंदुगृहेऽथ दृष्टेंदुना वाऽपि वाधर्मयशोभिवृद्धिम्॥नैरुज्यसंतोषमतिप्रवृत्तिं ददाति पापेक्षणतोऽतिदुःखम् ॥ ६९ ॥
कुजेन युक्ता कुजभे कुजेन दृष्टा च पित्तोष्णरुजं करोति ॥
शस्त्राभिघातं रुधिरप्रकोपं सौरीक्षिता सौरिगृहे विशेषात् ॥
॥ ७० ॥ बुधेन शुक्रेण युतेक्षिता वा तद्भेपि वा स्त्रीमतिलाभसौख्यम् ॥ धर्मं यशश्चाप्यतुलं विधत्ते कष्टं च पापेक्षणयोगतः स्यात् ॥ ७१ ॥ युतेक्षिता वा गुरुणा गुरोर्भे यदीथिहापुत्रकलत्रसौख्यम् ॥ ददाति हेमांबररत्नभोगं शुभेत्थशालादिह राज्यलाभः ॥ ७२ ॥

चंद्रस्याह--चंद्रेणेति । ददातीत्यंतं स्पष्टम् । पापग्रहदर्शनादातिदुःखं भवति ॥६९॥ भौमस्याह—कुजेनेति । रुधिरप्रकोपमित्यंतं स्पष्टम् । सौरीक्षिता शनिना दृष्टा शनिराशौ कुजयुक्ता दृष्टा मुंथा भवति तदा पूर्वोक्तफलं विशेषादधिकत्वेन भवति ॥ ७० ॥ बुधशुक्रयोराह—बुधेनेति । विधत्ते इत्यंतं स्पष्टम् । पापग्रहदर्शनात्तद्योगाद्वा कष्टफलं स्यात् ॥ ७१ ॥ युतेति । भोगामित्यंतं स्पष्टम् । इह पूर्वोक्ते गुरुराशौ गुरुयुक्ता दृष्टा वा मुथहेत्यर्थः । शुभग्रहमुथशिलयोगाद्राज्यप्राप्तिः ॥ ७२ ॥

**शनेर्गृहे तेन युतेक्षिता वा यदीथिहा वातरुजं विधत्ते ॥ मानक्षयं वह्निभयं धनस्य हानिं च जीवेक्षणतः शुभाप्तिम् ॥ ७३ ॥ तमोमुखे चेन्मुथहा धनाप्तिं यशः सुखं धर्मसमुन्नतिं च ॥ सितेज्ययोगेक्षणतः पदाप्तिं सुवर्णरत्नांबरलब्धयश्च ॥ ७४ ॥ भोग्या राहोर्लवास्तस्य मुखं पृष्ठं गता लवाः ॥ ततः सप्तमभं पुच्छं विमृश्येति फलं वदेत् ॥ ७५ ॥**

शनेराह—शनेरिति । चान्तं स्पष्टम् । गुरुदृष्ट्या शुभफलप्राप्तिः ॥७३॥ अथ राहुमुखगतमुथहाफलमाह—तमोमुख इति । स्पष्टम् । पदं स्थानम् ॥ ७४ ॥ अथ राहोर्मुखपृष्ठपुच्छानां लक्षणमाह—भोग्या इति । यस्मिन् राशौ राहुरस्ति तस्य वक्रगत्या ये भोग्या लवाः भोग्यभागस्ते मुखसंज्ञकाः । ये गता लवास्ते न भुक्ता लवास्ते पृष्ठसंज्ञका ज्ञेयाः । तद्यथा राहुरिदानीं कन्यायां दशभिरंशैर्वक्रोऽस्ति । तत्रादिमा दश अंशा मुखसंज्ञकाः । भोगस्य करिष्यमाणत्वात् । अन्ये भुक्ता विंशत्यंशाः पृष्ठसंज्ञकास्ततो राह्वाक्रांतराशेः सकाशात्सप्तमं भं राशिः पुच्छं यथा कन्यायाः सप्तमो राशिर्मीनाख्यः केत्वाक्रांतराशिः पुच्छसंज्ञकः इति विमृश्य विचार्य फलं वदेत् ॥ ७५ ॥

**तत्पृष्ठभागेन शुभप्रदा स्यात्तत्पुच्छभागाद्रिपुभीतिकष्टम् ॥ पापेक्षणादर्थसुखस्य हानिश्चेज्जन्मनीत्थं गृहवित्तनाशः ॥७६॥ ये जन्मकाले बलिनोऽब्दकाले चेद्दुर्बलास्तैरशुभं समांते ॥ विपर्यये पूर्वमनिष्टमुक्तं तुल्यं फलं स्यादुभयत्रसाम्ये ॥ ७७ ॥ षष्ठेऽष्टमेंत्ये भुवि वेंथिहेशोऽस्तगोऽथवक्री शुभदृष्टयुक्तः ॥ क्रूरात्चतुर्थास्तगश्च भग्नो न स्याद्रुजं यच्छति वित्तनाशम्॥७८॥**

अथ पृष्ठपुच्छगतमुथहायाः फलमाह—तत्पृष्ठभाग इति । स्पष्टार्थं पद्यम् ॥ ७६ ॥ अथ जन्मकालीनग्रहवशाच्छुभाशुभफलमाह—ये जन्मेति । ये ग्रहा जन्मकाले बलिनस्ते ग्रहा अब्दकाले वर्षकाले चेद्दुर्बलानिर्बलास्तदा तैर्ग्रहैः समांते वर्षांते वर्षस्योत्तरार्द्धे अ-

शुभफलं वाच्यम् । अर्थाद्वर्षपूर्वार्द्धे तद्ग्रहफलं शुभम् । विपर्यये जन्मकाले चेद्ग्रहा दुर्बलाः स्युः वर्षकाले सबलास्तदा पूर्वं वर्षपूर्वार्द्धे फलमानिष्टमुक्तम् । अर्थाद्वर्षोत्तरार्द्धे शुभं फलं वाच्यम् । उभयत्र जन्मकालवर्षकालयोः साम्ये तुल्यं फलं स्यात् । अय-मर्थः । ते ग्रहाः जन्मकालवर्षकालयोश्चेत्सबलास्तदा संपूर्णवर्षपर्यंतं शुभफलं स्यात् । उभयत्रापि यदा निर्बलास्तदा संपूर्णवर्षपर्यंतमशुभं स्यात् ॥ ७७ ॥ अथ शुभं मुथहा-स्वामिफलमाह-षष्ठ इति । चेन्मुथहेशः षष्ठेऽष्टमेऽन्त्ये द्वादशे भुवि चतुर्थस्थाने एष्वनि-ष्टस्थानेषु भवति । अथवा अस्तंगतो वक्री वा तथा अशुभैः पापग्रहैर्दृष्टो युक्तो वा स्यात् तथा क्रूरात्क्रूरग्रहस्थानाच्चतुर्थे अस्ते सप्तमे वा गतः स्यात्तदा भव्यः शुभो न स्यात् किंच स मुथहेशो रुजं रोगं वित्तनाशं च यच्छति ददाति ॥ ७८ ॥

**यद्यष्टमेशेन युतोऽथ दृष्टः क्षुताख्यदृष्ट्या न शुभस्तदापि ॥ योगद्वये स्यान्निधनं यदैकयोगस्तदा मृत्युसमत्वमाहुः ॥ ७९॥ मुंथहातत्पतिर्वापि जन्मनीक्षितयुक्छुभैः ॥ वर्षारंभे शुभं धत्तेऽ-ब्दे चेदं तेऽन्यथा शुभम् ॥ ८० ॥ इति मुथहानिरूपणम् ।**

अथान्यदशुभं मुथहास्वामिफलमाह-यदि अष्टमेशेन वर्षलग्नादष्टमस्थानाधीश्वरेणाशु-भग्रहेण पापग्रहेण मुथहा स्वामी युक्तः स्यात् । अथवा क्षुताख्यदृष्ट्या चतुर्थसप्तमैका-दशदृष्ट्या दृष्टश्चेत्तदा न शुभः अनिष्टफलद एव । अस्मिन्योगद्वये निधनं मरणमेव स्यात् द्वयोर्मध्ये यदेको योगस्तदा मृत्युसमत्वं मरणतुल्यं स्यादित्याहुः ॥ ७९ ॥ अथ मुथहायास्तत्स्वामिनश्च शुभाशुभफलमाह-मुथहेति । जन्मनि जन्मकुंडल्यां वर्षा-वगतमुंथा तस्याः स्वामी वा विकल्पेन शुभग्रहैरीक्षितयुक् दृष्टयुक्त इति । यथायोग्यं वर्षारंभे वर्षपूर्वार्द्धे शुभं शुभफलं दत्ते ददाति प्रत्येकम् । अथ जन्मकुंडल्यामुक्तासं-भवनांतरं चेद्यदि अब्दे वर्षे कुंडल्यां वर्षावगतमुंथा तस्याः स्वामी वा शुभग्रहैर्दृष्टत्वाद्द-ष्टत्वयुक्तः प्रत्येकं तर्हि अंते वर्षोत्तरार्द्धे शुभफलं ददाति शुभं दत्ते । अन्यथा पापग्रहै-र्दृष्टयुक्तः प्रत्यकं जन्मवर्षस्य पूर्वार्धपरार्धयोरशुभफलं ददाति । अन्यथेत्यत्राकारप्रश्लेषः न सदिति युक्तः पाठः । उभयत्र संभवे वर्षे शुभमशुभं वार्थसिद्धं नैकत्रार्द्धे उभयत्रासं-भवे मध्यमं वर्षम् । अत्र दृष्टितारतम्यग्रहतारतम्यशुभाशुभग्रहदृष्टितारतम्यादिभिर्वर्षार्द्ध-योर्वर्षस्य वा तरतमादिभेदाः बहवः स्वबुद्ध्या सुधीभिरवगंतव्याः ॥ ८० ॥

इति वर्षतंत्रटीकायां मुथहाध्यायः ।

अथ वर्षारिष्टविचारः ।

**लग्नेशेऽष्टमगेऽष्टेशे तनुस्थे वा कुजेक्षिते ॥ ज्ञजीवयोरस्तगयोः शस्त्रघातो विपन्मृतिः ॥ ८१ ॥ अब्दलग्नेशरंध्रेशौ व्ययाष्टहिबुकोपगौ ॥ मुथहासंयुतौ मृत्युप्रदौ तद्धातुकोपतः ॥ ८२ ॥ जन्मलग्नाधिपोऽवीर्यो मृतीशो लग्नपो यदा ॥ सूर्यदृष्टो मृतिं धत्ते कुष्ठं कंडूं तथापदः ॥ ८३ ॥ अस्तगौ मुथहालग्ननाथौ मंदेक्षितौ यदा ॥ सर्वनाशो मृतिः कष्टमाधिव्याधिभयं रुजः॥८४॥**

अत्र मृत्यारिष्टयोगे वक्ष्यमाणं फलं वृथैवेत्याह मणित्थः—'वृथाफलं हायनजं हि यस्मान्न जीवनं हायनरिष्टयोगात् । रिष्टानि तस्मात्प्रथमं प्रवक्ष्ये पूर्वैर्विधिज्ञैः कथितानि यानि ॥" इति । प्रथमतोरिष्टाध्यायो व्याख्यायते । तत्रादौ लग्नेशाद्यरिष्टमाह—लग्नेश इति लग्नेशे वर्षलग्नस्वामिन अष्टमगे अष्टमस्थानगे कुजेन भौमेनेक्षिते दृष्टे सति । अथवा अष्टेशे अष्टमस्थानाधीशे तनुस्थे लग्नस्थे भौमेन दृष्टे सति । अस्मिन्योगद्वये शस्त्रघातः विपत् ज्वरादिदुःखं वा मृतिर्वा स्यात् । अथवा ज्ञशुक्रयोर्बुधशुक्रयोरस्तगयोः सूर्यसान्निध्यवशादस्तंगतयोः सतोः शस्त्रघातो विपन्मृतिश्चेति ॥ ८१ ॥ अथान्यदाह—अब्दे इति । अब्दलग्नेशरंध्रेशौ वर्षलग्नेशाष्टमस्थानाधीशौ व्ययाष्टहिबुकोपगौ द्वादशाष्टमचतुर्थस्थानानां मध्ये कस्मिंश्चित्स्थाने स्थितौ । तत्रापि मुथहासंयुतौ स्यातां तदातद्धातुकोपतः तयोर्ग्रहयोर्यौ धातू वातपित्तादी तयोः प्रकोपतस्तदुत्पन्नविकारान्मृत्युप्रदौ स्याताम् । त्रिभिर्मिलित्वा एक एव योगः न पृथक् । यदा एकतमस्य योगस्तदा क्लेशमात्रम् ॥ ८२ ॥ अथान्यदाह—जन्मेति । जन्मलग्नाधिपो जन्मकालीनलग्नस्य स्वामी । अब्दे वर्षकाले अवीर्यः न विद्यते पंचवर्गीबलं यस्येति पंचवर्गीबलरहितः सन् । वर्षलग्नादष्टमस्थानस्थराशेः स्वामी यदा यदि अस्तगो वर्षलग्नात्सप्तमस्थाने वर्तमानः इति केचिदाहुः । अन्ये एवं वदंति । अस्तगः सूर्यसान्निध्यादस्तगतः सन् । एवं मतद्वये सूर्येण दृष्टस्तर्हि स 'ग्रहो मृत्युं ददाति । कष्टं कंडूमापदः तथा समुच्चये ददाति '। जन्मलग्नाधिपो अवीर्यो मृतीशोब्देऽस्तगो यदा । सूर्यदृष्टो मृतिं दत्ते इत्यत्र अस्तगोपदेति पाठस्तु प्रामादिक एव । यतः ग्रहस्यास्तंगतस्य सूर्यमन्दिरित्वाद्दृष्टेश्च संभवः सूर्यदृष्ट इत्यस्य वैयर्थ्यापत्तेः तथाच सूर्यादितराद्वितीयद्वादशराशिगतस्य अस्तत्वसंभवो दृष्टेस्तु न संभवः । यद्वा । अस्तग इत्यत्र सप्तमगत इत्यर्थे मूलवचनाभावान्नैवार्थोयं मंतव्यः । वस्तुतस्तु अस्तग इत्यत्र लग्नग इति पाठः । मृतीशो वर्षलग्नादष्टमस्थानाधीशो लग्नगः सूर्येण दृष्टस्तदा मृत्युम् । तथा चोक्तं मणित्थेन—"चेज्जन्मनाथो विबलो मृतीशो लग्नं गतो भास्करदृष्टमूर्तिः । शस्त्राभिघातं बहुधा

च कष्टं कुष्ठं शरीरे मरणेन तुल्यम् ॥" इति ॥ ८३ ॥ अथान्यदाह-अस्तगाविति । मुथहालग्ननाथौ मुथहास्वामी वर्षलग्नस्वामी एतौ उभौ अस्तगौ सूर्यसान्निध्यवशादस्तगामिनौ अस्तंगतौ मंदे मंदेक्षितौ यदा मंदेन शनिना ईक्षितौ दृष्टौ स्यातां तदा सर्वस्य स्त्रीपुत्रद्रव्यादेर्नाशः. मृतिः । स्वस्य मरणम् । कष्टं पीडा । आधिर्मानसी व्यथा । व्याधिः शरीररोगः । भयं भीतिः । एते पदार्थाः स्युः ॥ ८४ ॥

**क्रूरमूसरिफोऽब्देशो जन्मेशः क्रूरितः शुभैः ॥ कंबूलेपि विपन्मृत्युरित्थमन्याधिकारितः ॥ ८५ ॥ क्रूरा वीर्याधिकाः सौम्या निर्बलारिपुरंध्रगाः ॥ तदाधिव्याधिभीतिः स्यात्कलिर्हानिस्तथा विपत् ॥ ८६ ॥ नीचे शुक्रो गुरुः शत्रुभागे सौख्यलवोपि न ॥ लग्नेशेऽष्टमगेऽष्टेशे तनौ वा मृतिमादिशेत् ॥ ८७ ॥ निर्बलौ धर्मवित्तेशौ दुष्टखेटास्तनौ स्थिताः ॥ लक्ष्मीश्चिरार्जिता नश्येद्यदि शक्रोपि रक्षिता ॥ ८८ ॥**

अथान्यदाह-क्रूरेति । अब्देशो वर्षस्वामी क्रूरमूसरिफः पापग्रहेण कृत ईसराफो यस्यासौ भवति । जन्मेशो जन्मलग्नस्वामी क्रूरितः अस्तंगतत्वादिना क्रूरतां प्राप्तो भवति । तत्र वर्षतदन्यतरस्य शुभग्रहैः कृत्वा कंबूलयोगे शुभग्रहेण मुथशिली चंद्रस्ताभ्यां सह मुथशिली च तदन्यतरो भवतीत्यर्थः । अपिशब्दाच्छुभकंबूलयोगे अरिष्टाभावाभासे विपन्मृत्युः, नानाविधदुःखानुभवेन मरणं भवति किंपुनः शुभकंबूलाभावे इत्थमुक्तरीत्या । अन्याधिकारितः वर्षेशस्थाने मुथहेशादिकमधिकारिणं गृहीत्वा जन्मेशः क्रूरित इत्यादिके सिद्धे विपन्मृत्युः स्यादित्यर्थः । अत्र केनचिच्छुभैः कंबूले इत्यस्य वर्षस्वामिजन्मलग्नस्वामिनोर्मुथशिलयोगे तयोश्चंद्रवत्केनचिच्छुभग्रहेण मुथशिलयोगरूपकंबूले सतीति व्याख्यानं कृतं तच्छब्देन प्रतिपाद्यं जन्मलग्नवर्षस्वामिनोर्मुथशिलप्रतिपादकशब्दाभावात् । द्वयोर्मुथशिले ताभ्यां चंद्रस्य मुथशिले सति कंबूलयोगाभिधानाच्चंद्रेतरेण मुथशिलेतरस्य योगस्य भिन्नसंज्ञाभिधानाच्चेत्यलम् ॥ ८५ ॥ अथान्यदाह-क्रूरा इति । क्रूराः पापग्रहाः वीर्याधिकाः पंचवर्गीबलेन बलिष्ठाः । सौम्याः शुभग्रहाः निर्बलाः पंचवर्गीबलेन हीनाः । रिपुरंध्रगाः षष्ठाष्टमस्थानगाश्चेत्स्युस्तदाधिव्याधिभीतिरित्याद्यशुभं फलं स्यादिति स्पष्टम् ॥८६॥ अथान्यदाह-नीच इति । शुक्रो यत्किंचित्स्थाने स्थितः सन् नीचे नीचराशावस्ति । गुरुर्यत्किंचित्स्थाने स्थितः सन् शत्रुभागे शत्रुनवांशेऽस्ति तदा सौख्यलवोपि न नास्ति अयमेको योगः । अथान्यो लग्नेश इति । लग्नेशे वर्षलग्नस्वामिनि अष्टमगे अष्टमस्थानस्थे सति वा विकल्पेन अष्टेशे अष्टमस्थानाधीशे तनौ लग्ने सति

एवंविधे योगे मृतिमादिशेत् ॥ ८७ ॥ अथान्यदाह—निर्बलाविति । धर्मविलेशौ नवमद्वितीयस्थानाधीशौ निर्बलौ पंचवर्गीबलेन हीनबलौ । दुष्टखेटाः पापग्रहास्तनौ लग्ने स्थिताः । एतादृशयोगे लक्ष्मीश्चिरार्जिता नश्येदिति स्पष्टम् ॥ ८८ ॥

**नीचे चंद्रेस्तगाः सौम्या वियोगः स्वजनैः सह ॥ शरीरपीडा मृत्युर्वा साधिव्याधिभयं द्रुतम् ॥ ८९ ॥ अब्दलग्नं जन्मलग्नराशिभ्यामष्टमं यदा ॥ कष्टं महाव्याधिभयं मृत्युः पापयुतेक्षणात् ॥ ९० ॥ जन्मन्यष्टमगः पापो वर्षलग्ने रुगाधिदः ॥ चंद्राब्दलग्नपौ नष्टबलौ चेत्स्यात्तदा मृतिः ॥ ९१ ॥ जन्माब्दलग्नपौ पापयुक्तौ पतितभास्थितौ ॥ रोगाधिदौ मृत्युकरावस्तगौ नेक्षितौ शुभैः ॥ ९२ ॥**

अथान्यदाह—नीचे चंद्र इति । क्वचित्स्थाने स्थितश्चंद्रो नीचे नीचराशावस्ति सौम्याः शुभग्रहाः बुधगुरुशुक्राः अस्तगा अस्तंगताः स्युस्तदा वियोग इत्याद्यशुभं फलं स्यात् ॥ ८९ ॥ अथान्यदाह—अब्दलग्नमिति । जन्मलग्नराशिभ्यां जन्मलग्नतः जन्मराशेश्च अब्दलग्नं वर्षलग्नमष्टमं यदा स्यात्तदा कष्टं महाव्याधिभयं फलं स्यात् । तादृशं वर्षलग्नं पापग्रहैर्युतमीक्षितं दृष्टं वा तदा मृत्युरेव स्यात् ॥ ९० ॥ अथान्यदाह—जन्मनीति । जन्मनि जन्मकालिकलग्नादष्टमगः अष्टमस्थाने पापः पापग्रहस्तिष्ठेत्स यदि वर्षलग्ने वर्षकालिकलग्ने स्यात्सरुत्तं रोगमाधिं मानसीं व्यथां च ददाति । अयमेको योगः । अथापरो योगः । चंद्राब्दलग्नपौ वर्षकालिकचंद्रवर्षलग्ने वर्षकालिकलग्नराशिस्वामिनौ पंचवर्ग्यां नष्टबलौ पंचाल्पबलौ चेत्स्यातां तदा मृतिः स्यात् ॥ ९१ ॥ अथान्यदाह—जन्मेति । जन्माब्दलग्नपौ जन्मलग्नस्वामी वर्षलग्नस्वामी च पापयुक्तौ पापग्रहैर्युक्तौ पतितभस्थितौ पतितभं दुष्टस्थानं चतुर्थषष्ठाष्टमद्वादशं तत्र स्थितौ स्यातां तदा रोगाधिदौ भवतः । यदि तौ द्वावपि अस्तगौ सूर्यसान्निध्यवशादस्तंगतौ । शुभैः शुभग्रहैर्नेक्षितौ न दृष्टौ । तदा मृत्युकरौ भवतः ॥ ९२ ॥

**व्ययांबुनिधनारिस्था जन्मेशाब्दपमुंथहाः ॥ एकर्क्षगास्तदा मृत्युः पापक्षुतदृशा ध्रुवम् ॥ ९३ ॥ चंद्रो व्यये शनियुतः शुभैः दृष्टोऽर्थनाशकृत् ॥ चित्तवैकल्यमशुभेसराफात्र शुभेक्षणात् ॥ ९४ ॥**

अथान्यदाह—व्ययेति । एकर्क्षगा एकराशिगाः जन्मेशाब्दपमुंथहाः जन्मलग्नस्वामी वर्षस्वामी मुंथहा एते व्ययांबुनिधनारिस्था द्वादशचतुर्थाष्टमषष्ठस्थाने स्थिताः संतस्तदा असति प्रतिबंधके मृत्युः स्यात् । यद्येते पापग्रहैः क्षुतदृष्ट्या चतुर्थदशमैकसप्त-

मस्थानस्थदृष्ट्या दृष्टास्तदा सत्यपि प्रतिबंधके मृत्युः स्यात् । ध्रुवं निश्चयेन मृत्युः स्यात् । केचिदेवं व्याकुर्वते अब्दप इत्यत्र वर्षलग्नस्वामी मुथहा इत्यत्र मुथहास्वामीति इदमपि संभवति स्वामिप्रकरणपाठात् ॥ ९३ ॥ अथान्यदाह–चंद्र इति । व्यये द्वादशस्थाने शनियुतश्चंद्रो भवेत् । शुभः षष्ठस्थानास्थितो भवेत् । तदार्थस्य द्रव्यस्य नाशकृत्स्यात् अशुभेसराफात् । यदा अशुभेन पापग्रहेण साकं योगकारकग्रहाणां यथासंभवमीसराफयोगश्चेत्तर्हि चित्तवैकल्यं बुद्धिविपर्यासः स्यात् । न शुभेक्षणात् । तत्र शुभग्रहदृष्टिश्चेत्तर्हि अर्थनाशचित्तवैकल्ये न स्याताम् । केचित्तु पापग्रहकृतः शनिशुक्राभ्यामेवेसराफयोगो नहि चंद्रेण साकं चंद्रस्य शीघ्रगतित्वात्तादिति । तन्न अशुभग्रहस्येसराफयोगकर्तृत्वोक्तेरभावात् ॥ ९४ ॥

**चंद्रोऽर्कमंगलगतो रिपुरिःफाष्टबंधुगः ॥ त्रिदोषस्तस्य रुजा विविधेज्यदृशा शुभम् ॥ ९५ ॥ हद्दाहायनलग्नेशौ सप्ताष्टांत्ये खलान्वितौ ॥ स्वदशायां निधनदौ शुभदृष्ट्या शुभं वदेत् ॥ ९६ ॥ अब्दलग्नाद्दज्वनृजू व्ययार्थस्थौ रुजा तदा ॥ एवं वर्षाब्दलग्नेशजन्मेशैरपि बंधनम् ॥ ९७ ॥ नीचे त्रिराशिपे पापदृष्टे कार्यं विनश्यति ॥ इंथिहेशेऽब्दपे वारिभेऽस्तं याते रुजा विपत् ॥ ९८ ॥**

अथान्यदाह–चंद्र इति । अर्कमंडलगतोऽस्तंगतश्चंद्रः रिपुरिःफाष्टबंधुगः षष्ठद्वादशाष्टमचतुर्थस्थानान्यतरस्थानस्थश्चेद्भवति तदा त्रिदोषतः वातपित्तकफेभ्यस्तस्य रुजा विविधा नानाप्रकारको रोगः स्यात् । यदि चंद्रोपरि इज्यदृशा गुरोर्दृष्टिश्चेत्तदा सुखं स्यात् । रिपुरिःफाष्टबंधुग इत्यत्र रिःफाष्टमास्थित इति युक्तः पाठः। उक्तं च मणित्थेन " रात्रीश्वरे भास्करमंडलस्थे षष्ठे व्यये वा मृतिभावसंस्थे । त्रिदोषतासौ बहुभिः प्रकारैः करोति कष्टं विविधं दशायाम् ॥ " इति ॥ ९५ ॥ अथान्यदाह ॥ हद्देति । हद्दाहायनलग्नेशौ वर्षसमयलग्ने हद्दास्वामिवर्षलग्नस्वामिनौ सप्तमाष्टमांत्यस्थानास्थितौ संतौ खलान्वितौ चेत्पापग्रहैर्युक्तौ भवतस्तदा तौ स्वामिनौ स्वदशायामंतर्दशायां च निधनदौ मरणप्रदौ भवतः । यदा शुभग्रहैर्मित्रदृष्ट्या दृष्टौ तदा सुखं भवेत् ॥ ९६ ॥ अथान्यदाह–अब्दलग्नादिति । वर्षलग्नाद्दज्वनृजू मार्गिवक्रिणौ द्वादशद्वितीयस्थानस्थितौ स्याताम् । तद्यथा । द्वादशे मार्गी पापग्रहः । द्वितीये वक्री पापग्रह इत्यर्थः । तदा रुजा रोगोत्पत्तिः स्यात् । एवममुना प्रकारेण वर्षाब्दलग्नेशजन्मेशैर्वर्षस्वामिनो वर्षलग्नस्वामिनो जन्मलग्नस्वामिनश्चेत्पापग्रहकृतकर्तरीयोगस्तदा बंधनं कारागृहप्राप्तिः स्यात् ॥ ९७ ॥ अथान्यदाह–नीच इति । त्रिराशिपे वर्षलग्ने यत्रैराशिकस्वामी स यदि नीचराशिस्थितः सन् पापग्रहैर्दृष्टश्चेत्तदा चिंतितं कार्यं विनश्य-

त्ति नाशं प्राप्नोति । अयमेको योगः । अथान्यः ॥ इंथिहेशे मुथहास्वामिनि अब्दपे वर्षस्वामिनि वा अरिभे शत्रुराशौ अस्तंयाते सूर्यसान्निध्यादस्तंगते सति रुजां रोगाधिक्येन विपत्स्यात् ॥ ९८ ॥

चंद्रो रिःफषडष्टभूद्युनगतो दृष्टोऽशुभैर्नो शुभैः सोऽरिष्टं विदधाति मृत्युमथवा भौमेक्षणादग्निभीः ॥ शस्त्राद्वाशनिराहुकेतुभिररेर्भीतिं रुजं वा युजा दारिद्र्यं रविणा शुभं शुभदृशोज्यालोकनादादिशेत् ॥९९॥ क्रूरान्वितेक्षितयुताशनिर्नेथिहाधिव्याधिप्रदा जनुषि रिःफसुखारिरंध्रे ॥ सूने च वर्षतनुनैधनगा मृतिं सा दत्ते खलेक्षितयुतेत्यपि चिंत्यमार्यैः ॥ १०० ॥

इत्यरिष्टाध्यायः ।

अथ चंद्रारिष्टं सापवादं चाह—चंद्र इति । वर्षलग्नतः रिःफषडष्टभूद्युनगतो द्वादशषष्ठाष्टमलग्नसप्तमस्थानगतश्चंद्रः अशुभैः पापग्रहैर्दृष्टः शुभग्रहैर्नो दृष्टस्तदा सः अरिष्टमथवा मृत्युं विदधाति करोति । एकेन द्वाभ्यां वा दृष्टोऽरिष्टं करोति सर्वपापग्रहैर्दृष्टो मृत्युं करोतीत्यर्थः । अत्रारिष्टप्रसंगे भूशब्देन चतुर्थस्थानमंगीकृत्य व्याख्यातं तदसत् । कुतः भूशब्दस्य लग्नवाचकत्वात् । यद्यपि भूशब्देन क्वचिच्चतुर्थस्थानमप्युच्यते तथापि चतुर्थचंद्रस्याशुभफलत्वं कुत्रापि नोक्तं सर्वत्र चतुर्थस्थानास्थितचंद्रस्य शुभफलत्वस्योक्तत्वाच्च । उक्तंच 'लग्नास्त्वांत्यषडष्टगो हिमरुचिः' इति । अन्यच्च । 'निधनतनुमदारिप्रांत्यगः शीतरश्मिः' इति । एवं सर्वग्रंथेषु । एतादृशश्चंद्रो भौमेन दृष्टोऽग्निभयं करोति । शस्त्राद्वा भीतिः । शनिराहुकेतुभिर्दृष्टश्चंद्रः अरेः शत्रुतो भीतिं ददाति । रविणा सूर्येण दृष्टश्चंद्रः वायुजां वातसंबंधेन रुजं रोगं दारिद्र्यं धनरहितं करोति । अथ उक्तस्यापवादः ॥ चंद्रस्य शुभदृशा बुधगुरुशुक्राणां मित्रदृष्ट्या शुभं शुभफलं वदेत् । केवलमिज्यालोकनात् बृहस्पतेर्दृष्टिश्चेत्तथापि शुभफलमादिशेत् कथयेत् ॥ ९९ ॥ अथ मुथहाकृतमरिष्टयोगमाह—क्रूरान्वितेति । मुथहा क्रूरान्विता पापग्रहैर्युक्ता शनिना ईक्षिता दृष्टा युता वा तदाधिव्याधिप्रदा ॥ अयमेको योगः । अथान्यः । सा मुथहा जनुषि जन्मलग्ने द्वादशचतुर्थषष्ठाष्टमसप्तमएतत्स्थानानां मध्ये यत्र कुत्रापि स्थिता सती यदि वर्षतनुनैधनगा वर्षलग्नादष्टमस्थानगा विशेषतः खलेक्षितयुता पापग्रहैर्दृष्टा युता वा स्यात्तदा सा मुंथा मृतिं मरणं दत्ते ददाति इत्यपि आर्यैर्दैवज्ञैश्चिंत्यम् ॥ १०० ॥ इति श्रीदिवाकरात्मजविश्वनाथविरचितायां वर्षतंत्रटीकायामरिष्टाध्यायः ॥

अथारिष्टभंगः ।

लग्नाधिपो बलयुतः शुभेक्षितयुतोपि वा ॥ केन्द्रत्रिकोणगोऽरिष्टं नाशयेत्सुखवित्तदः ॥ १ ॥ गुरुः केंद्रे त्रिकोणे वा पापादृष्टः शुभेक्षितः ॥ लग्नचंद्रोत्थिहारिष्टविनाशार्थसुखं दिशेत् ॥ २ ॥ सुखं स्वामियुतं सद्भिर्दृष्टं सौख्ययशोऽर्थदम् ॥ लग्ने तृतीयेऽथ गुरुर्जन्मेट् सौख्यार्थदः सुखे ॥ ३ ॥ लग्ने द्युनेशस्तनुगः सुरेज्यः क्रूरैरदृष्टः शुभमित्रदृष्टः ॥ रिष्टं निहंत्यर्थयशः सुखाप्तिं दिशेत्स्वपाके नृपतिप्रसादम् ॥ ४ ॥

अथारिष्टभंगाध्यायो व्याख्यायते लग्नाधिप इति । लग्नाधिपो वर्षलग्नस्वामी बलयुतः पंचवर्गीबलेन बलिष्ठः यदा शुभेक्षितयुतः शुभग्रहेण ईक्षितो दृष्टो युतो वा अथवा त्रिकोणकेन्द्रगः त्रिकोणं नवमपंचमं केंद्रं १ । ४ । ७ । १० एतत्स्थानस्थः सन् अरिष्टं नाशयेच्च दशायां सुखवित्तदः स्यात् ॥ १ ॥ अथान्यदाह—गुरुरिति । गुरुः केंद्रे त्रिकोणे वा पापादृष्टः पापग्रहैरदृष्टः शुभग्रहैर्दृष्ट एतादृशः सन् लग्नचंद्रोत्थिहारिष्टं नाशयेत् । लग्नचंद्रमुत्थहोत्पन्नमरिष्टं नाशयेत् । पश्चादर्थसुखं दिशेत् ॥ २ ॥ अथान्यदाह—सुखमिति । सुखं वर्षलग्नाच्चतुर्थस्थानं स्वामिना युक्तं सद्भिः शुभग्रहैर्दृष्टं सौख्ययशोर्थदं भवति । अयमेको योगः अथान्यः गुरुर्लग्ने अथवा तृतीये स्थाने स्यात्तथा सुखे चतुर्थस्थाने स्याज्जन्मेट् जन्मलग्नस्वामी तदा सौख्यार्थदः स्यात् ॥ ३ ॥ अथान्यदाह—लग्नइति । द्युनेशः सप्तमस्थानाधीशः लग्ने स्यात्सुरेज्यः बृहस्पतिरपि तनुगः लग्नगः स्यात् क्रूरैः पापग्रहैर्न दृष्टः शुभग्रहेण मित्रग्रहेण वा दृष्टस्तदा स ग्रहोऽरिष्टं निहन्ति दूरीकरोति । स्वपाके स्वस्वदशायामर्थयशःसुखाप्तिनृपतिप्रसादं दिशेत् ददाति ॥ ४ ॥

बलान्वितौ धर्मधनाधिनाथौ क्रूरैरदृष्टौ तनुगौ यदा स्ताम् ॥ राज्यं गजाश्वांबररत्नपूर्णं रिष्टस्य नाशोऽप्यतुलं यशश्च ॥ ५ ॥ त्रिषष्ठलाभोपगतैरसौम्यैः केंद्रत्रिकोणोपगतैश्च सौम्यैः ॥ रत्नांबरस्वर्णयशःसुखाप्तिर्नाशोप्यनिष्टस्य तनोश्च पुष्टिः ॥ ६ ॥

अथान्यदाह—बलान्विताविति । धर्मधनाधिनाथौ नवमद्वितीयस्थानस्वामिनौ बलोन्वितौ पंचवर्गीबलेन बलिष्ठौ क्रूरैः पापग्रहैरदृष्टावेतादृशौ संतौ तनुगौ लग्नगौ स्यातां तदारिष्टस्य नाशः राज्यमित्यादिशुभफलं स्यात् ॥ ५ ॥ अथान्यदाह—त्रिषष्ठे इति । असौम्यैः पापग्रहैस्त्रिषष्ठलाभोपगतैस्तृतीयषष्ठैकादशस्थानास्थितैः सौम्यैः शुभग्रहैः

केंद्रत्रिकोणोपगतैः अरिष्टस्य नाशो भवति । चकारः समुच्चयार्थः रत्नांबर इत्यादि स्पष्टार्थम् ॥ ६ ॥

**यदा सवीर्यो मुथहाधिनाथो लग्नाधिपो जन्मविलग्नपो वा ॥ केंद्रत्रिकोणायधनस्थितास्ते सुखार्थहेमांबरलाभदाः स्युः ॥ ७ ॥ तुंगे शनिर्वा भृगुजो गुरुर्वा शुभेत्थशालाद्यवनाद्धनाप्तिम् ॥ बली कुजो वित्तगतो यशोर्थतेजांस्यकस्माच्च सुखानि दद्यात् ॥ ८ ॥ सूर्येज्यशुक्रा मिथ इत्थशालं कुर्युस्तदा राज्ययशःसुखार्थाः ॥ सूर्यः कुजो वोपचये ददाति भद्रं यशो मंगलमिंथिहायाः ॥ ९ ॥ शुक्रज्ञचंद्रा हृद्दे स्वे पापास्त्र्यायगता यदि ॥ स्वबाहुबलतो हेमसुखकीर्तीर्नरोऽश्नुते ॥ ११० ॥**

अथान्यदाह–यदेति ॥ यदा मुथहाधिनाथः मुथहास्वामी सवीर्यः पंचवर्गीबलेन बलिष्ठः अथवा लग्नाधिपः वर्षलग्नस्वामी बलिष्ठो वा जन्मलग्नस्वामी बलिष्ठः सन् केंद्रत्रिकोणायधनस्थिताः ते सुखार्थहेमांबरलाभदाः स्युः । यदा उक्तस्थानगाः सर्वेपि तादृशाः संतस्तदा उक्तपदार्थानां लाभो भूयात् ॥ ७ ॥ अथ धनलब्धिमाह–तुंग इति । तुंगे उच्चे शनिर्वा भृगुजः शुक्रः उच्चे वा गुरुर्बृहस्पतिरुच्चे स ग्रहः शुभेत्थशालात् शुभग्रहेण साकं मुथाशिलं चेत्कुरुते तदा यवनाद्धनाप्तिं कुर्यात् ॥ यदा तु सर्वेपि एतादृशास्तदा म्लेच्छप्रभुतः महती प्राप्तिरित्यर्थतः सिद्धम् ॥ अयमेको योगः । अथापरः । वित्तगः द्वितीयस्थानस्थितो बलिष्ठो भौमः यशोर्थेत्यादिशुभफलं दद्यात् ॥८॥ अथान्यदाह–सूर्येज्येति । सूर्यबृहस्पतिशुक्राः मिथः परस्परमित्थशालं मुथशिलं कुर्युः कुर्वंति । तदा राज्ययशःसुखार्थाः स्युः । अयमेकोयोगः । अथान्यः । सूर्य इति । इंथिहायाः मुथहायुक्तस्थानादुपचये त्रिषष्ठदशमैकादशस्थानयोर्मध्ये यत्रकुत्रापि स्थितः सूर्यो भौमो वा चेत्स्यात्तदा भद्रं कल्याणं यशो मंगलं विवाहादिकृत्यं ददाति समुद्भवेत् ॥ ९ ॥ अथान्यदाह–शुक्रज्ञचंद्रा इति । शुक्रबुधचंद्राः पंचवर्ग्यां स्वहद्दायां चेत्स्युः पापाः सूर्यभौमशनयस्त्र्यायगतास्तृतीयैकादशस्थानगता यदि स्युस्तदा नरः पुरुषः स्वबाहुबलतः स्वकीयपराक्रमेण सुवर्णसुखकीर्तीरश्नुते भुनक्ति । अत्र चंद्रः स्वहद्दायामित्युक्तं तर्हि चंद्रस्य हद्दाचक्रमध्ये गणना नास्ति एतदर्थे संमतिवाक्यं कुत्रापि नास्तीति कृत्वा तेषामाशयं त एव जानंतु ॥ ११० ॥

**बुधशुक्रौ मूसरिफौ गुरुर्विक्रमभावगः ॥ तदा राज्ययशोहेमःमुक्ताविद्रुमलब्धयः ॥ ११ ॥ भौमो मित्रगृहेऽब्देशः कंबूलं**

स्वगृहादिगैः ॥ गजाश्वहेमांबरभूलाभं दत्ते सुखादिकम् ॥ १२ ॥ इत्थं जन्मनि वर्षे च योगकर्तुर्बलाबलम् ॥ विमृश्य कथयेद्राजयोगं तद्भंगमेव च ॥ १३ ॥

अथान्यशुभयोगमाह–बुधशुक्राविति । यदि बुधशुक्रौ मूसरिफयोगं कुरुतः गुरुबृहस्पतिः विक्रमभावगस्तृतीयस्थाने स्थितस्तदा राज्ययशोहेममुक्ताविद्रुमलब्धयः स्युः ॥ ११ ॥ अथान्यदाह–भौम इति । भौमः अब्देशो वर्षेशः सन्मित्रगृहे तिष्ठति स्वगृहादिगैः स्वगृहस्थोच्चादिस्थानास्थितैर्ग्रहैः सह मुथशिलयोगं करोति । स्वगृहोच्चादिस्थानस्थितेन चंद्रेणापि सह मुथशिलं करोति । तदा कंबूलीत्युच्यते । एतादृशो भौमो गजाश्वहेमांबरभूमिलाभं सुखाधिकं ददाति ॥ १२ ॥ अथ बलाबलविचारेण राजयोगसंबंधिशुभाशुभफलमाह–इत्थमिति । इत्थममुना प्रकारेण जन्मनि जन्मकाले वर्षे वर्षकाले च राजयोगकर्तुर्ग्रहस्य बलाबलपंचवर्ग्यां बालिष्ठः स्वोच्चादिगः अथवा निर्बलो नष्टबलो नीचादिगः इति विमृश्य विचार्य राजयोगं तद्भंगं च कथयेत् ॥ १३ ॥

अब्देंथिहेशादिखगाः खलैश्चेद्युतेक्षिता अस्तगनीचगा वा ॥ सौम्या बलोना नृपयोगभंगं तदा भवेद्वित्तसुखक्षयं च ॥ १४ ॥ इत्यरिष्टभंगाध्यायः ॥ श्रीगर्गान्वयभूषणं गणितविच्चिन्तामणिस्तत्सुतोऽनंतोनंतमतिर्व्यधात्खलमतध्वस्त्यै जनुः पद्धतिम् ॥ तत्सूनुः खलु नीलकंठविबुधो विद्वच्छिवाज्ञयाऽवोचद्वर्षपमुंथहाफलमथारिष्टादिसद्योगयुक् ॥ १५ ॥

अथ राजयोगभंगमाह–अब्देंथिहेशादिखगा इति । अब्देशो वर्षस्वामी इंथिहेशो मुथहास्वामी आदिशब्देन वर्षलग्नजन्मलग्नस्वामी ग्रहाः खलैः पापग्रहैर्युताः दृष्टाः सौम्याः शुभग्रहा बलोनाः हीनबलाश्चेत्स्युस्तदा राजयोगभंगं वदेत् ॥ अयमेको योगः ॥ अथान्यः अस्तगाः सूर्यसान्निध्येनास्तंगताः नीचगा वा नीचराशौ गता वा सौम्याः शुभग्रहाः बलोनाः पंचवर्गीबलेन हीनबलाश्चेत्स्युस्तदा राजयोगभंगं वदेत् योगद्वयेपि फलं वित्तसुखक्षयं च वदेत् यदि सौम्या ग्रहाः स्वोच्चस्वगृहादिगताः केंद्रत्रिकोणायगताश्चेत्स्युस्तदा राजयोगकर्त्तार इत्याह मणित्थः " यदीन्दुसौम्येज्यसुरारिपूज्याः स्वोच्चंगताः स्वांशगता यदि स्युः । त्रिकोणकेंद्रायगताः स्वमित्रैर्दृष्टाश्च युक्ता निजवर्गसंस्थाः ॥ गजाश्वरत्नांबरदेशलाभं स्त्रीपुत्रलाभं विविधं च सौख्यम् । यच्छंति खेटाः परमर्दनं च कुर्वंति सर्वे बलिनो नराणाम् " ॥ १४ ॥ ११९ ॥ इत्यरिष्टभंगाध्यायः ॥

अथ भावविचारः।

**यो भावः स्वामिसौम्याभ्यां दृष्टो युक्तोयमेधते ॥ पापदृष्टयुतो नाशो मिश्रैर्मिश्रफलं वदेत् ॥ १ ॥ लग्नाधिपे वीर्ययुते सुखानि नैरुज्यमर्थागमनं विलासः ॥ स्यान्मध्यवीर्येऽल्पसुखार्थलाभः क्लेशाधिकत्वं विपदल्पवीर्ये ॥२॥ जन्माब्दांगपतीथिहापतिसमानाथाद्यधीकारवान्सूर्यो नष्टबलस्त्वगक्षिविलयं कुर्यान्निरुत्साहताम् ॥ नीचत्वं पितृमातृतोप्यभिभवश्चंद्रेक्षिकार्यक्षयो दारिद्र्यं च पराभवो ग्रहकलिर्व्याध्यादिभीतिस्तदा ॥ ३ ॥ भौमे चलत्वं भीरुत्वं बुधे मोहपराभवौ ॥ जीवे धर्मक्षयः कष्टफलाजीवनवृत्तयः ॥४॥ शुक्रे विलाससौख्यानां नाशः स्त्रीभिः समं कलिः ॥ सौरे भृत्यजनाद्दुःखं रुजो वातप्रकोपतः ॥ ५ ॥**

अथ द्वादशभावविचाराध्यायो व्याख्यायते। तत्रादौ तनुभावविचारः। यो भाव इति। द्वादशभावानां मध्ये यः स्वामी शुभग्रहः पापग्रहो वा सौम्याः शुभग्रहा आभ्यां स्वामिशुभाभ्यां दृष्टो युक्तो वा अयं भावः एधते वृद्धिं करोति यो भावः स्वामिव्यतिरिक्तेन पापग्रहेण दृष्टो युतो वा स्यात्तदा तस्य भावस्य नाशः। मिश्रैः शुभग्रहैः पापग्रहैश्च युक्तो दृष्टो वा यो भावो भवति तस्य भावस्य मिश्रफलं शुभाशुभमिश्रितफलं वदेत् कथयेत्। गार्गिः "नीचस्थोऽरिगृहस्थो वा ग्रहो भावविनाशकृत्। उदासीनगृहे मध्ये मित्रस्थर्क्षत्रिकोणगः स्वोच्चगश्च ग्रहोऽवश्यं भाववृद्धिकरः स्मृतिः ॥" इति। तत्र षष्ठाष्टमांत्यभावानां विपरीतानि फलान्याह वराहः—"समुपचयविपत्ती सौम्यभावेषु सत्यः कथयति विपरीतं रिःफषष्ठाष्टमेषु ॥ १ ॥" इति। अथलग्नाधिपस्य शुभाशुभफलमाह—लग्नाधिप इति। लग्नाधिपे वर्षलग्नस्वामिनि वीर्ययुते पंचवर्गीबलेन बलिष्ठे सति सुखानीत्यादि शुभाशुभफलं स्यात्। मध्यवीर्ये मध्यबले सति सुखार्थलाभः अल्पः स्यात्। अल्पवीर्ये हीनबले सति क्लेशाधिकत्वं विपत्स्यात् ॥ २ ॥ अथ वर्षाधिकारिग्रहे नष्टबले सति विशेषफलमाह—जन्माब्दांगेति। जन्माब्दांगपती जन्मलग्नस्वामी वर्षलग्नस्वामी वा इंथिहापतिः मुथहास्वामी वा समानाथादि वर्षस्वामी आदिशब्दात्त्रैराशिकदिनरात्रिस्वामिनः अधिकारवान् एतेष्वाधिकारिषु सूर्यादिग्रहेषु यः कश्चिन्नष्टबलः पंचाल्पबलस्तस्य फलमाह। तत्रादौ सूर्यश्चेन्नष्टबलस्तदा त्वगक्षिविलयं त्वक् त्वचा तस्य कुष्ठादिना विलयं नाशं कुर्यात्। अक्षिनेत्रयोरंधत्वेन विलयं नाशं कुर्यात् निरुत्साहतामुत्साहराहित्यं कुर्यात्। नीचत्वमधमवृत्त्या जीवनं पितृतो मातृतोपि अभिभवः

क्लेशः अथ चंद्रफलमाह–चन्द्र इति । स्पष्टम् ॥ ३ ॥ अथ भौमादीनां फलमाह–श्लोकद्वयेन । भौम इतिस्पष्टम् ॥ ४ ॥ ५ ॥

**लग्नं पापयुतं सौम्यैरदृष्टं सहितं नृणाम् ॥ विवादं वंचनंदुष्टमशनंचापिविंदति ॥ ६ ॥ जन्माब्दांगपरंध्रपाब्दमुथहानाथा बलाढ्यास्तदा रम्यं वर्षमुशंति सर्वमतुलं सौख्यं यशोऽर्थागमः ॥ षष्ठाष्टांत्यगतां नचेदिहपुनस्ते दुःखभीतिप्रदा निर्वीर्या यदि वर्षमेतदशुभं वाच्यं शुभेक्षां विना ॥७॥ सूतौ धनप्रदः खेटो धनाधीशश्च तौ यदि॥वर्षे नष्टौ वित्तनाशान्यनिक्षेपापवाददौ ॥८॥ एवं समस्तभावानां सूतौ नाथाश्च पोषकाः ॥ अब्दे नष्टबलास्तेषां नाशायोह्या विचक्षणैः ॥ ९ ॥ इति प्रथमभावविचारः ॥**

अथ लग्नफलमाह–लग्नमिति । लग्नं वर्षलग्नं पापग्रहैर्युतं सौम्यैः शुभग्रहैरदृष्टमसहितं तदा नृणां मनुष्याणां विवादमित्यादिफलं विंदति प्राप्नोति ॥ ६ ॥ अथाधिकारिणि बलिष्ठे सति फलमाह–जन्माब्दांगेति । जन्मलग्नस्वामी वर्षलग्नस्वामी वा वर्षलग्नादष्टमस्थानस्वामी वा वर्षीयमुथहास्वामी वा एते बलिष्ठाश्चेत् षष्ठाष्टमांत्यगता न स्युस्तदा अतुलं सर्वं वर्षरम्यमुशंति वदंति सौख्यं यशोर्थागमश्च स्यात् । एते बलिष्ठाः संतः षष्ठाष्टमां त्यगता यदि स्युस्तदा दुःखप्रदा इत्यर्थसिद्धम् । इह पुनस्ते चत्वारो निर्वीर्याः बलरहिताः संतः षष्ठाष्टमांत्यगताः स्युस्तदा दुःखभीतिप्रदाः स्युः । शुभेक्षां विना यदि एते चत्वारः शुभग्रहैर्न दृष्टास्तद्वर्षमशुभं वाच्यं यदि शुभग्रहाः पश्यंति तदा पूर्वोक्तं शुभं वाच्यमिति ॥ ७ ॥ अथ धननाशयोगमाह–सूताविति । सूतौ जन्मकाले जन्मलग्ने धनप्रदः खेटो धनप्राप्तिकर्ता यो ग्रहः धनस्थानाधीशश्च तौ द्वौ ग्रहौ यदि वर्षे नष्टबलौ भवतस्तदा वित्तनाशो भवति । अन्यस्यापि तद्द्रव्यस्य अभिशापं ददाति दत्तोपि न त्वया दत्तमित्यभिशापं ददातीत्यर्थः । अर्थाद्यदि द्वौ बलिष्ठौ तदा धनप्राप्तिकरौ भवत इत्यर्थः ॥ ८ ॥ अथान्यदाह–एवमिति । एवमुक्तरीत्या सूतौ जन्मकाले समस्तभावानां नाथास्तद्भावबलदातारो ग्रहास्तत्तद्भावस्वामिनश्च यदि वर्षे बलिष्ठाः स्युस्तदा तत्तद्भावपोषकाः पुष्टिकरा भवंति । यदा वर्षे नष्टबलाः स्युस्तदा तेषां तत्तद्भावानां नाशाय विचक्षणैर्दैवज्ञैरूह्याः स्वयमेव ज्ञातव्याः ॥ ९ ॥ इति तनुभावः ॥ १ ॥

अथ धनभावविचारः ।

**वित्ताधिपो जन्मनि वित्तगोऽब्दे जीवो यदा लग्नपतीत्थशाली ॥ तदा धनाप्तिः सकलेपि वर्षे क्रूरेसराफे धनधान्यहानिः ॥ १ ॥**

जन्मन्यर्थावलोकीज्योऽब्देऽब्देशो बलवान्यदा ॥ तदा धनाप्तिर्बहुला विनायासेन जायते ॥ २ ॥ एवं यद्भावपो जन्मन्यब्दे तद्भावगो गुरुः ॥ लग्नेशेनेत्थाली चेद्भावजं तु सुखं भवेत् ॥ ३ ॥ तथा जनुषि यं पश्येद्भावमब्देऽब्दपो गुरुः ॥ तदा तद्भावजं सौख्यमुक्तं ताजिकवेदिभिः ॥४॥ जन्मषष्ठाधिपः सौम्यः षष्ठोऽब्दे स्वल्पलाभदः ॥ पापार्दिते गुरौ रंध्रेऽर्थे वा दंडः पतेद्ध्रुवम् ॥५॥

अथ धनभावः ॥ वित्ताधिप इति । जन्मनि जन्मकाले जीवो बृहस्पतिर्वित्ताधिपो धनभावस्वामी अब्दे वर्षे वित्तगो द्वितीयस्थानं स्थितः सन् लग्नपतीत्थशाली वर्षलग्नस्वामिना सह मुथशिलयोगं करोति तदा सकलेऽपि संपूर्णेपि वर्षे धनाप्तिर्धनप्राप्तिः स्यात् । यदा बृहस्पतिर्लग्नस्वामिव्यतिरिक्तेन क्रूरेसराफे पापग्रहेण ईसराफयोगं करोति तदा संपूर्णवर्षे धनादीनां हानिः स्यात् ॥ १ ॥ अथ द्वितीयं धनलब्धियोगमाह—जन्मनीति । जन्मकाले बृहस्पतिरर्थावलोकी अर्थं द्वितीयभावमवलोकयतीति । तादृशः सन् अब्दे वर्षे अब्देशो वर्षस्वामी भूत्वा यदा बलवान् बलिष्ठो भवेत् तदा तस्मिन्वर्षे धनाप्तिर्बहुला बहुप्रकारिका विनायासेन प्रयत्नेन विना धनाप्तिर्जायते ॥ २ ॥ अथ पूर्वोक्तमर्थं सर्वभावेषु अतिदिशति—एवमिति । एवमनुना प्रकारेण जन्मनि जन्मकाले गुरुर्बृहस्पतिर्यद्भावपो यद्यत्सहजादिभावस्वामी आस्ति । तादृशः सन् अब्दे वर्षे तत्तद्भावगश्चेल्लग्नेशेनेत्थशाली लग्नस्वामिना सह मुथशिली स्यात्तदा तद्भावजं सुखं लभेत् ॥ ३ ॥ अथ पुनस्तदेवाह—तथेति ॥ तथा तद्वज्जनुषि जन्मकाले गुरुर्बृहस्पतिर्यं भावं पश्येत्तादृशः सन् अब्दे वर्षे अब्दपो गुरुर्बृहस्पतिस्तदा तद्भावजं तद्भावसंबंधि सौख्यं ताजिकवेदिभिरुक्तम् ॥ ४ ॥ अथाल्पधनप्राप्तियोगं दंडयोगं चाह—जन्मषष्ठाधिप इति । जन्मकाले षष्ठाधिपः षष्ठभावस्वामी सौम्यो बुधः अब्दे वर्षलग्ने षष्ठः षष्ठभावगतस्तदा स्वल्पफलदः स्यात् ॥ गुरौ पापार्दिते पापग्रहैः पीडिते सति रंध्रे वर्षलग्नादष्टमभावगते अथवा धनस्थे सति ध्रुवं निश्चयेन दंडः राजकृतः पतेत् ॥ ५ ॥

गुरुर्वित्ते शुभैर्दृष्टो युतो वा राज्यसौख्यदः ॥ जन्मन्यब्दे च मुथह्यराशिं पश्यन्विशेषदः ॥६॥ एवं सितेऽब्दपे भूरिद्रव्यं धान्यं च जायते ॥ वित्तलग्नेशसं[illegible] वित्तसौख्यविनाशदः ॥ ७ ॥ एवंविधे सवीर्ये स्याल्लिपिज्ञानोद्यमैर्धनम् ॥ जन्मलग्नगताः सौम्या वर्षेऽर्थे धनलाभदाः ॥ ८ ॥ मालग्नानि वित्ते वा बुधेज्यासितसं-

युते ॥ तैर्वा दृष्टे धनं भूरि स्वकुले राज्यमाप्नुयात् ॥ ९ ॥ अर्थार्थसहमेशौ चेच्छुभैर्मित्रदृशेक्षितौ ॥ बलिनौ सुखतो लाभप्रदौ यत्नादरेर्दृशा ॥ १० ॥

अथान्यधनलाभयोगमाह-गुरुरिति । वित्ते धनस्थाने गुरुर्बृहस्पतिः शुभैः शुभग्रहैर्दृष्टो युक्तो वा स्यात्तदा राज्यार्थसौख्यदः स्यात् । अयमेको योगः । अथान्यजन्मनि जन्मलग्ने अब्दे च वर्षलग्ने मुथहाराशिं मुथहाक्रांतराशिं शुभग्रहः पश्यान्विशेषतः राज्यदः सौख्यदः स्यात् ॥ ६ ॥ अथ शुक्रयोगेन धनयोगं चाह-एवमिति पूर्वोक्तप्रकारेण सितः शुक्रः अब्दपो वर्षस्वामी सन् धनस्थाने शुभग्रैहर्दृष्टो युतो वा स्यात्तदा भूरि धनं च धान्यं च जायते भवतीत्यर्थः ॥ तथा जन्मलग्ने वर्षलग्ने च मुंथाक्रांतराशौ शुक्रेण दृष्टे युक्ते वा सति तदा विशेषतो धनधान्यं बहुतरं भवति ॥ अथ धननाशयोगः ॥ धनभवने धनभवनवर्षलग्नस्वामिनौ अनयोः संयोगे एकराशाववस्थितौ सति वित्तसौख्यविनाशदः स्यात् । ननु इदमयुक्तं धनभवनलग्नेशयोर्धनभवने संयोगस्य शुभफलत्वेनोक्तत्वादिति चेदत्रायमाशयः ॥ एकराशिसंयोगस्त्रिप्रकारकः तत्र एकः मुथशिलकृतयोगः द्वितीयः ईसराफयोगः । मुथशिलईसराफयोगाभावे केवलराशियोगस्तृतीययोगः । एवं योगत्रयमध्ये केवलराशियोगो मुथशिलयोगश्च शुभः वित्तसौख्यदः ग्रंथांतरे शुभफलत्वेनोक्तत्वात् । अस्मिन्ग्रंथेप्यग्रे वक्ष्यामि उर्वरितस्तु ईसराफस्तस्याशुभफलत्वादयं योगस्त्वशुभ उक्त इति ॥ ७ ॥ अथान्यौ धनप्राप्तियोगावाह-एवमिति । एमनुक्तरीत्या बुधे वर्षस्वामिनि सवीर्ये बलिष्ठे धनभावस्थिते शुभग्रैहर्दृष्टे युते वा तथा जन्मलग्ने वर्षलग्ने च मुथहाक्रांतराशौ बुधेन दृष्टे युते वा सति लिपिज्ञानोद्यमैर्धनं स्यादयमेको योगः ॥ अथान्यः । जन्मकालीनलग्नगताः सौम्याः शुभग्रहाश्चेत्स्युस्तदा वर्षे वर्षलग्ने ते अर्थे धनभावस्था भवंति तदा धनलाभदाः स्युः ॥ ८ ॥ अथ बहुधनप्राप्तियोगमाह-मालसद्मनीति । यवनभाषया मालशब्देन धनं सद्मशब्देन सहममेवं धनसहमे वित्ते वा धनभवने वा बुधगुरुशुक्रसंयुते अथवा तैर्बुधगुरुशुक्रैर्दृष्टे सति धनं भूरि स्वकुले राज्यमाप्नुयात् ॥ ९ ॥ अथापरं धनलब्धियोगमाह-अर्थार्थेति ॥ अर्थार्थसहमेशौ धनभवनस्वामिधनसहमस्वामिनौ चेच्छुभैः शुभग्रहैर्मित्रदृष्ट्या दृष्टौ तदा सुखतो लाभप्रदौ स्याताम् ॥ यदा अरेर्दृश शत्रुदृष्ट्या दृष्टौ तदा लाभो यत्नाद्भवतीति वाच्यम् ॥ १० ॥

मित्रदृष्ट्यामुथशिलेऽर्थांगयोः सुखतो धनम् ॥ तयोर्मूसरिफे वित्तनाशदुर्नयभीतयः ॥ ११ ॥ जन्मनीज्योऽस्ति यद्राशौ स राशिर्वर्षलग्नगः ॥ शुभस्वामीक्षितयुतो नैरुज्यस्वाम्यवि-

त्तिदः ॥ १२ ॥ सूतौ लग्ने रविर्वर्षे धनस्थो धनसौख्यदः ॥ शनौ वित्ते कार्यनाशो लाभोऽल्पोऽथ धनव्ययः ॥ १३ ॥ भ्रातृसौख्यं गुरुयुते भूतयः स्युः शुभेक्षणात् ॥ क्रूरयोगेक्षणात्सर्वं विपरीतं फलं भवेत् ॥ १४ ॥ वित्तेशो जन्मनि गुरुर्वर्षे वर्षेशतां दधत् ॥ यद्भावगस्तमाश्रित्य लाभदो लग्न आत्मनः ॥ १५ ॥

अथान्यौ धनयोगौ तन्नाशयोगावाह—मित्रदृष्टयेति । अर्थांगयोः अर्थशब्देन धनभावः अंगशब्देन वर्षलग्नमनयोः स्वामिनौ तयोर्मित्रदृष्ट्या मुथशिलयोगे सति सुखतः यत्नेन विना धनं भवति ॥ अथ तयोर्धनाधीशलग्नाधीशयोः मूसरीफयोगेः वित्तनाशः दुर्नयेन दुष्टनीत्या भीतिर्भवति ॥ अयमर्थस्तु पूर्वमेव व्यक्तीकृतः ॥ ११ ॥ अथान्यं धनयोगमाह—जन्मनीति । जन्मनि जन्मलग्ने इज्यो बृहस्पतिः यद्राशौ यस्मिन् राशौ अस्ति स राशिर्यदि वर्षलग्नगः सन् शुभग्रहैः स्वामिना वा दृष्टो युक्तो वा स्यात्तदा नैरुज्यं स्वामित्वं वित्तं च स्यात् ॥१२॥ अथान्यौ धनलाभधननाशयोगावाह—सूताविति । सूतौ जन्मकाले जन्मलग्ने रविः वर्षे धनभावस्थस्तदा धनसौख्यदः स्यात् । वित्ते धनभावे शनिश्चेत्तदा कार्यनाशादिकं स्यात् ॥ १३ ॥ अथ शनिदोषाच्चापवादधननाशयोगावाह—भ्रातृसौख्यमिति । धनभावस्थे शनौ गुरुयुते सति भ्रातृजनितं सौख्यं स्यात् ॥ शुभेक्षणात् तादृशं शनिं शुभग्रहाः पश्यंति तदा भूतयः ऐश्वर्याणि स्युः ॥ पूर्वोक्तसर्वेषु धनलाभयोगेषु धनयोगकारकान् ग्रहानतिक्रूरयोगेक्षणात्पापग्रहयोगे सति अथवा दृष्टे सति तदा विपरीतं सर्वं फलं भवेत् धनहानिरित्यर्थः ॥ १४ ॥ अथ जन्मकाले धनभावाधीशस्य गुरोर्वर्षलग्नादिद्वादशभावस्थानफलं श्लोकचतुष्टयेनाह—वित्तेश इति । यदि जन्मनि जन्मलग्ने गुरुर्बृहस्पतिर्वित्तेशो धनभावस्वामी सन् वर्षे वर्षकाले वर्षेशतां वर्षस्वामितां दधत् प्राप्तः सन् यद्भावगः यस्मिन्भावे तिष्ठति तं भावमाश्रित्य लाभदो भवति । तद्भावफलं ददातीत्यर्थः । तदेव विशदयति । लग्न इति । लग्ने वर्तमानः सन् आत्मनः शरीरस्य पुष्टिं करोति ॥ १५ ॥

वित्ते सुवर्णरूप्यादेर्भ्रात्रादेः सहजर्क्षगः ॥ पितृमातृक्ष्मादिभ्यो वित्तं सुहृदि पंचमे ॥ १६ ॥ सुहृत्तनयतः षष्ठेऽरिवर्गाद्धानिभीतिदः ॥ स्त्रीभ्यो द्यूनेऽष्टमे मृत्युरर्थहेतुः पथोऽङ्कगे ॥ ॥ १७ ॥ खे नृपादेर्नृपकुलादायेऽत्ये व्ययदो भवेत् ॥ इत्थं विमृश्य सुधिया वाच्यमित्थं परे जगुः ॥ १८ ॥ इति धनभावविचारः ॥

वित्ते धनभावे सुवर्णरूप्यादेर्वृद्धिः ॥ सहजर्क्षगस्तृतीयभावगो भ्रात्रादेः सुखं करोति। सुहृदि चतुर्थभावे पितृमातृक्षमाक्षेत्रमादिशब्देन ग्रामादिकमेतज्जनितं सुखम् । पंचमे पंचमभावे ॥ १६ ॥ सुहृत्तनयतः सुखम् । षष्ठे षष्ठभावेऽरिवर्गात् शत्रुसमूहाद्धानिः । अतिभीतिदः । द्युने सप्तमभवने स्त्रीभ्यः सुखम् । अष्टमे अष्टमभावे मृत्युः । अंकगे नवमभावे अर्थहेतुः धनार्जकः पथो मार्गः ॥ १७ ॥ खे दशमभावे नृपादेः राज्ञः सकाशात् भाग्यवृद्धिः । आये एकादशभावे नृपकुलाद्धनवृद्धिः । अंत्ये द्वादशभावे व्ययदो भवेत् । सुधिया इत्थमसुना प्रकारेण विमृश्य विचार्य वाच्यं वक्तव्यमित्यपरे आचार्याः जगुरुक्तवंतः ॥ १८ ॥ इति धनभावविचारः ॥

अथ सहजभावविचारः ॥

**अब्देशेऽर्के सिते वापि सबले पापवर्जिते ॥ सौख्यं मिथः सोदराणां व्यत्ययाद्व्यत्ययं वदेत् ॥ १ ॥ दग्धे कलिः सहजपेऽब्दपतौ तयोर्वा जीवे बलेन रहिते सहजे सहोत्थैः ॥ वैरं तृतीयभवनाधिपतीसराफे मांद्यं कलिं स्वजनसोदरतश्च विंद्यात् ॥ २ ॥ यदेत्थशालः सहजेश्वरेण गुरुस्तृतीये सहजात्सुखाप्तिः ॥ सारे विधौ स्यात्कलहस्तृतीये दृष्टौ युतौ नो गुरुणा यदा तौ ॥ ३ ॥**

अथ तृतीयभावविचारः ॥ तत्र सहजसंबंधिशुभाशुभफलमाह–अब्देशेऽर्क इति ॥ अब्देशे वर्षस्वामिनि अर्के सूर्ये सति सिते वा शुक्रे वा सति सबले बलिष्ठे सति पापवर्जिते पापग्रहयोगदृष्टिरहिते सति सोदराणामेकोदरप्रसूतानां भ्रातॄणां मिथः परस्परं सौख्यं स्यात् । व्यत्ययादिति । व्यत्ययादुक्तवैपरीत्यात् । तद्यथा । सूर्ये शुक्रे वा वर्षस्वामिनि निर्बले सति पापग्रहैर्युते दृष्टे वा सति व्यत्ययं भ्रातॄणां परस्परं विरोधादिकं वदेत् कथयेत् ॥ १ ॥ अथान्यदाह–दग्धे कलिरिति । सहजपे तृतीयभावस्वामिनि वर्षस्वामिनि, अब्दपतौ, वर्षस्वामिनि सति दग्धे अस्तंगतदुष्टस्थानादिदोषसहिते सति कलिर्युद्धादिना कलहः स्यात् । तयोर्वेति । तयोः सूर्यशुक्रयोर्वा मध्ये कश्चिदेको वर्षस्वामी भूत्वा दग्धश्चेद्भवति तदा कलिः स्यात् । जीव इति । सहजे तृतीयभावे बलेन रहिते निर्बले जीवे गुरौ सति सहोत्थैर्भ्रातृभिः सह वैरं स्यात् । तृतीय इति । वर्षस्वामी तृतीयभावस्वामिना सह ईसराफयोगं चेत्करोति । तदा मांद्यं शरीरे कष्टम् । स्वजनतः सुहृद्वर्गतः सोदरतः साक्षात् भ्रातृतः कलिं विंद्यादाप्नुयात् ॥२॥ अथान्यदाह–यदेति । यदा वर्षलग्नस्वामिना वर्षस्वामिना वा सहजेश्वरेण तृतीयभावस्वामिना सह इत्थशालः मुथशिलयोगश्चेत्तदा सहजाद्भ्रातुः सकाशात्सुखाप्तिः स्यात् । अथवा गुरुर्बृहस्पतिस्तृतीये तदापि भ्रातृतः सुखाप्तिः । सार इति । तृतीये तृतीयभावे विधौ चंद्रे सारे आरेण

भौमेन सह विद्यमाने सारे भौमयुक्ते चंद्रे सति गुरुणा युक्तौ दृष्टौ वा न भक्तः तदा भ्रातृभिः सह कलहः स्यात् ॥ ३ ॥

**सहज सहजाधीशेऽधिकारिणि समापतेः ॥ लग्नपो वा मुथशिले मिथः सौख्यं सहोत्थयोः ॥ ४ ॥ क्रूरेसराफे कलहः शनौ भौमक्षंगे रुजः ॥ ज्ञर्क्षसृज्यनुजे मांद्यं वदेत्सहजगे स्फुटम् ॥ ५ ॥ मंदर्क्षगेऽसृजि बुधे कुजर्क्षे सहजे शुभैः ॥ युतेक्षिते सोदराणां मिथः सौख्यं सुखं बहु ॥ ६ ॥ जन्माब्दपौ बुधसितौ सबलौ तृतीये सोदर्यबंधुगणसौख्यकरौ गुरुश्च ॥ वीर्यान्वितेंदुगृहगो भृगुजोऽधिकारी सूत्यब्दयोः सहजबंधुगणस्य वृद्धये ॥ ७ ॥**

अथान्यौ भ्रातृसौख्ययोगावाह—सहज इति । सहजे तृतीयभावे स्वामिसंयुक्ते सहज_स्वामिना सयुक्ते अधिकारिणि पंचाधिकारिणां मध्ये एकाधिकारी भूत्वा सहजभावस्वामी सन् सहजभावे तिष्ठतीत्यर्थः । तादृशेन सहजसमापतेर्वर्षस्वामिनो लग्नपो वा वर्षलग्नस्वामिनो वा मुथशिलयोगश्चेत्करोति तदा सहोत्थयोर्भ्रात्रोर्मिथः परस्परं सौख्यं स्यात् ॥ ४ ॥ अथ भ्रातृदौष्टयोगावाह—क्रूरेसराफ इति । क्रूरे पापग्रहे ईसराफे सहजभावस्वामिना सह ईसराफयोगं चेत्करोति तदा भ्रातॄणां परस्परं कलहः स्यात् । तथा शनौ, भौमर्क्षगे मेषवृश्चिकराशिस्थिते सहजभावे सति भ्रातरि रुजो रोगाः स्युः ॥ तथा असृजि भौमे ज्ञर्क्षमिथुनकन्याराशिस्थः सन् सहजगे सहजभावस्थिते सति अनुजे भ्रातरि स्फुटं निःशंकं मांद्यं रोगादिकं भवेत्कथयेत् ॥ ५ ॥ अथान्यद्भ्रातृसौख्ययोगमाह—मंदर्क्षग इति । असृजि भौमे मंदर्क्षगे मकरकुंभराशिस्थितः सन्सहजे भ्रातृभावे सति तथा बुधे कुजर्क्षे मेषवृश्चिकराशिस्थे सति सहजभावगे एवं योगद्वयेपि शुभैः शुभग्रहैर्युते ईक्षिते वा दृष्टे सति सोदराणामेकोदरप्रसूतानां भ्रातॄणां मिथः परस्परं बहुसुखस्नेहश्च स्यात् ॥ अयमेको योग इति ये वदंति तन्न संभवति । मंदकुजयोर्भिन्नराशिस्थयोरेकस्थानस्थितत्वासंभवात् ॥ ६ ॥ अथान्यभ्रातृसौख्ययोगद्वयं चाह—जन्माब्दपाविति । जन्मकालवर्षकालयोर्बुधशुक्रौ सबलौ सहजभावगौ चेत्स्यातां गुरुश्च तथा गुरुर्बृहस्पतिः बलिष्ठः सन्सहजभावे तिष्ठति तदा सोदर्यो भ्राता बंधुगणस्तद्भिन्नाः पितृव्यपुत्रादयस्तेषां सौख्यकरश्च स्यात् ॥ अयमेको योगः ॥ वस्तुतस्तु जन्मनि लग्नेऽथ बुधे त्वधिकारिणीति समरवाक्ये जन्मनि अर्थात् जन्मलग्ने वर्षलग्ने बुधे शुक्रे वाधिकारवति गृहहद्दाद्यधिकारवति सोदरेषु वृद्धिः अतएव जन्माब्दयोर्बुधसितौ सबले तृतीयेति युक्तः पाठः । उक्तंच समरसिंहेन "जन्मनि लग्नेऽथ बुधे त्वधिकारिणि सोदरेषु वृद्धिः स्यात्" । योगसुधानिधौ । "उभयत्र बुधेऽधिकारयुक्ते सहजस्थेप्यथ बंधुवृद्धिरब्दे" इति । जन्मा-

ब्दपा इति पाठमंगीकृत्य व्याख्यातं तत्र जन्माब्दपौ जन्मलग्नवर्षलग्नस्वामिनौ तत्र शब्दार्थाभावात् । तादृगर्थे संमतेरभावात् । अथान्यः । सूत्यब्दयोर्जन्मकालवर्षकालयोरधिकारी सन्भृगुजः शुक्रो बलिनश्चंद्रस्याधिष्ठितराशौ स्थितः सहजबंधुगणस्य वृद्ध्यै भवति ॥ ७ ॥

**पापान्विते तु सहजे सहमेशभावनाथेक्षणेन रहिते सहजस्य दुःखम् ॥ एवं सहोत्थसहमेऽपि वदेत्तदीशौ दग्धौ यदा सहजनाशकरौ विचिंत्यौ ॥ ८ ॥ तृतीयपादाब्दपतौ द्युनस्थे लग्नेश्वरे वा सहजैर्विवादः ॥ तृतीयपो जन्मनि तादृगब्दे शुभेक्षितस्तत्र सहोत्थतुष्ट्यै ॥ ९ ॥ इति सहजभावविचारः ॥**

अथ सहजे दुःखकरयोगानाह-पापान्वित इति । सहजे सहजभावे पापान्विते युक्ते सति सहमेशः भ्रातृसहमस्वामिभावनाथसहजभावस्वामी अनयोरीक्षणेन रहिते तयोर्दृष्ट्यभावे सति सहजस्य दुःखं स्यात् । एवमिति एवमनुना प्रकारेण सहोत्थसहमेपि भ्रातृसहमे पापग्रहैर्युक्ते भ्रातृसहमस्वामी भ्रातृभावस्वामी चाभ्यामदृष्टे सति सहजे दुःखं वदेत् । तदीशाविति । तदीशौ भ्रातृसहमस्वामिनौ भ्रातृभावस्वामिसहमस्वामिनौ यदा दग्धौ अस्तंगतादिदोषसहितौ स्यातां तदा भ्रातृणां नाशकरौ विचिंत्यौ ॥ ८ ॥ अथ सहजानामशुभशुभयोगावाह-तृतीयपादिति । तृतीयपात् सहजभावस्वामिनः सकाशात् अब्दपतौ वर्षस्वामिनि द्युनस्थे सप्तमस्थे । अथ वा लग्नेश्वरे वर्षलग्नस्वामिनि सहजभावस्वामिनः सकाशात्सप्तमस्थे सति । सहजैः सह विवादः कलहः स्यात् । अयमशुभयोगः । अथ शुभयोगः । जन्मनि जन्मकाले तृतीयपः तृतीयभावस्वामी तत्र सहजभावे स्थितः सन् शुभेक्षिते शुभग्रहैर्दृष्टे सति । तादृगब्दे वर्षलग्ने सहजभावे स्थितः सन् शुभेक्षितश्चेत्तदा सहोत्थतुष्ट्यै सोदराणां संतोषाय भवति ॥ ९ ॥ इति सहजभावविचारः ॥

अथ चतुर्थभाव विचारः ॥

**तुर्येरवींदू पितृमातृपीडा पापान्वितौ पापनिरीक्षितौ च ॥ जन्मस्थसूर्यर्क्षगतेऽर्कपुत्रेऽवमाननावैरकली च पित्रा ॥ १ ॥ चंद्रे जनन्यैवमुशंति बंधौ सुखाधिपे प्रीतिसुखानि पित्रोः ॥ तुर्याधिपे लग्नपतीत्थशाले वीर्यान्विते सौख्यमुशंति पित्रोः ॥ २ ॥ सौख्याधिपो जनुषि नष्टबलोऽब्दसूत्योः पित्रोरनिष्टकृदथो सहमे तयोस्तु ॥ दग्धे तुरीयगृहगे च यदींथिहाया नाशस्तयोः सहमयोरपि दग्धयोः स्यात् ॥ ३ ॥ जन्मन्यंबुगृहं यच्च तत्पति-**

स्तत्पदोपगौ ॥ शन्यारौ क्लेशदौ पित्रोर्न चेत्सौम्यनिरीक्षितौ ॥ ४॥ मातुः पितुश्च सहमे तनुपेत्थशाले तुर्येपि चेत्थमवगच्छ सुखानि पित्रोः ॥ चेदष्टमाधिपतिना कृतमित्थशालं पित्रोर्विप-द्व्ययमनिष्टकृतेसराफे ॥ ५ ॥ इति चतुर्थभावः ॥

अथ चतुर्थभावविचारः ॥ तुर्य इति ॥ तुर्ये चतुर्थभावे रविः पापग्रहैर्युतः पापदृष्टो वा तदा पितुःपीडा ॥ एवंविधुश्चंद्रश्चेत्तदामातुः पीडास्यात् ॥ द्वयोःस्थित्या उभयोरपि पीडास्यादित्यर्थः ॥ अयमेकोयोगः ॥ अथान्यः ॥ जन्मस्थसूर्यर्क्षगतेऽर्कपुत्रेजन्मकालेसूर्योयस्मिन्राशावस्तितस्मिन्राशौवर्षेशनिश्चेत्तदाअवमानना लोकेभ्यः पितुर्मानहानिः स्यात् ॥ पित्रासहवैरकलीस्याताम् ॥ १ ॥ अथान्यदाह–एवमनयारीत्याचंद्राक्रांतराशौशनौसतिजनन्यामात्रासहवैरकलीस्याताम् ॥ अथ बंधौचतुर्थस्थानेसुखाधिपेचतुर्थभावस्वामिनि सतिमातापित्रोःप्रीतिसुखान्युशंतिवदंति ॥ अथतुर्याधिपेचतुर्थभावस्वामिनिवीर्यान्विते बलिष्ठेवर्षलग्नस्वामिना सह मुथशिले सति पित्रोः सौख्यमुशंति ॥ २ ॥ अथ पित्रोरनिष्टयोगानाह–सौख्येति । जनुषि जन्मकाले सौख्याधिपः चतुर्थभावस्वामी अब्दसूत्योर्वर्षकालजन्मकालयोः नष्टबलः चतुर्थभावस्वामी नष्टबलश्चेत्तदा पित्रोर्मातापित्रोरनिष्टकृत् दुःखं करोति अथो इति ॥ तयोर्मातापित्रोः सहमेदग्धे क्रूरग्रहैः पीडिते सति यदि मुथहायाः सकाशात्तुरीयगृहगे च चतुर्थस्थानस्थे सति तदा तयोर्मातापित्रोर्नाशः स्यात् । तथा तयोर्मातापित्रोः सहमयोरपि दग्धयोरस्तंगतादिदोषाक्रांतयोः सतोः पित्रोर्नाशः स्यात् ॥ ३ ॥ अथ पित्रोः क्लेशयोगावाह–जन्मनीति ॥ जन्मनि जन्मकाले यदंबु गृहं चतुर्थस्थानंयश्चतत्पतिश्चतुर्थस्थानपतिश्चतुर्थस्थानचतुर्थस्थानस्वामिनौतत्पदोपगौ शन्यारौ तयोः पदंस्थानंतत्रगतौशनिभौमौशुभग्रहैर्युतौदृष्टौवा चेन्न तदा पित्रोः क्लेशदौ ॥ ४ ॥ अथ शुभाशुभयोगावाह–मातुरिति । मातुःपितुश्चसहमेतनुपेत्थशालेवर्षलग्नस्वामिनाइत्थशालेमुथशिलयोगेकृतेसतिपित्रोःसुखान्यवगच्छजानीहि ॥ इत्थमसुनाप्रकारेणतुर्येपिचतुर्थभावेवर्षलग्नस्वामिनाकृतेमुथशिलयोगेसति पितुः सुखान्यवगच्छ ॥ अयमेकोयोगः ॥ अथाशुभयोगः मातृपितृसहमेअष्टमाधिपतिनावर्षलग्नादष्टमभावस्वामिनाचेत्कृतमित्थशालंमुथशिलयोगेकृतेसतिपित्रोर्विपत्स्यात् ॥ अनिष्टखगेसराफे यदि मातृपितृसहमेशत्रुकृतइसराफयोगेसतिपित्रोर्विपत्स्यात् ॥ ५ ॥ इतिचतुर्थभावः ॥

अथ पंचमभावविचारः ।

पुत्रायगो वर्षपतिर्गुरुश्चेत्सूर्यारसौम्योशनसोऽथवेत्थम्॥ सत्पुत्रसौख्याय खलार्दितास्ते दुःखप्रदाः पुत्रत एव चिंत्याः॥ १॥ पुत्रे

सुतस्य सहमे सबले सुताप्तिः सौम्येक्षितेऽप्यतिसुखं यदि तत्र वर्षेट् ॥ सौम्येक्षितः शुभगृहे सकुजो बुधश्चेत्पुत्रायगः सुतसुखं विबल सुतार्त्तिम् ॥ २ ॥ जीवो जन्मनि यद्राशावब्देसौ सुतगो बली ॥ पुत्रसौख्याय भौमो ज्ञो वर्षेशोऽत्र सुताप्तिदः ॥ ३ ॥ यत्रेज्यो जनुषिगृहे विलग्नमेतत्पुत्राप्त्यै बुधसितयोरपीत्थमूह्यम् ॥ यद्राशौ जनुषि शनिः कुजश्च सोऽब्दे पुत्रार्तिं तनुसुतगः करोति नूनम् ॥ ४ ॥ पुत्रे पुण्यस्य सहमं पुत्राप्त्यै शुभदृष्टियुक् ॥ लग्नपुत्रेश्वरौ पुत्रं पुत्रदौ बलिनौ यदि ॥ ५॥

अथ पंचमभावः ॥ अथ पुत्रसंबंधि शुभाशुभफलमाह-पुत्रायगइति ॥ चेद्वर्षपति- वर्षस्वामीगुरुर्बृहस्पतिः पुत्रायगः पंचमैकादशस्थानास्थितश्चेत्तदासत्पुत्रसौख्यायभवेत् ॥ अथवा सूर्यःआरोभौमःसौम्योबुधः उशनाः शुक्रः एषांमध्येयः कश्चिद्वर्षस्वामीग्रहः सन् पंचमैकादशस्थानास्थितोवास्यात्तदेत्थंसत्पुत्रसौख्यकरइत्यर्थः॥ अथतेग्रहागुरुसूर्यभौमबुध- शुक्राः खलैःपापग्रैहरर्दिताः पीडिताश्चेत्स्युस्तदापुत्रतएवदुःखप्रदाश्चित्याः ॥१॥ अथपुत्र- प्राप्तियोगावाह ॥ पुत्रइति । पुत्रेपंचमभावेसुतस्यसहमेपुत्रसहमेसबलेबलिष्ठे सति सुताप्तिः पुत्राप्तिः स्यात् ॥ यदि तत्रपंचमभावेवर्षेट्वर्षस्वामीसौम्येक्षितेपिशुभग्रहैर्दृष्टे सति अति- सुखंस्यादयमेकोयोगः ॥ अथान्यः ॥ सकुजोबुधः भौमयुक्तोबुधश्चेत् शुभग्रहे शुभग्र- हाणां चंद्रबुधगुरुशुक्राणांराशौ कर्कमिथुनकन्याधनुर्मीनतुलानांमध्येयस्मिन्कस्मिंश्चिद्रा- शौस्थितःसन्सौम्येक्षितःशुभग्रहैर्दृष्टः सन्पुत्रायगः पंचमैकादशस्थानास्थितः सुतसुखंपुत्र- सुखंकरोति ॥ चेद्भौमयुक्तोबुधोविबलोनिर्बलः प्रोक्तस्थानेषुचेन्न तदासुतार्तिंसुतस्यपुत्रस्य आर्तिं रोगं करोति ॥२॥ अथान्यौ पुत्रप्राप्तियोगावाह-जीव इति ॥ जन्मनि जन्मकाले जीवो बृहस्पतिर्यद्राशौ यस्मिन् राशावस्ति सराशिरब्देवर्षकाले सुतगः पंचमस्थाने स्थितः सन् बली बलीष्ठश्चेद्भवति तदा पुत्रसौख्याय भवति । अयमेको योगः। अथान्यः । भौमो बुधो वा वर्षेशः सन् अत्र पंचमभावे सति तदा सुताप्तिदः ॥ ३ ॥ अथ पुत्राप्तिपुत्रदु- ष्टयोगावाह-यत्रेज्य इति ॥ जनुषि जन्मकाले यत्र यस्मिन्स्थाने इज्यो बृहस्पतिरास्ति । तत्स्थानं वर्षकाले विलग्नगृहं चेत् लग्नस्थानं चेत्स्यात् तदा पुत्राप्त्यै पुत्रप्राप्त्यै भवति । इत्थममुना प्रकारेण बुधसितयोरप्यूह्यम् । यथा बुधः शुक्रो वा यस्मिन् राशौ तिष्ठति स राशिर्वर्षकाले लग्नस्थो भवेत्तदा पुत्राप्त्यै भवति ॥ अयं शुभयोगः ॥ अथाशुभयोगः । जनुषि जन्मकाले यद्राशौ यस्मिन् राशौ शनिः कुजश्चस्यात्सराशिरब्दे वर्षकाले तनुसु- तगो भवेत् ॥ तद्यथा ॥ जन्मकालीनशन्याक्रांतराशिर्जन्मकालीनभौमाक्रांतराशिर्वा वर्ष लग्नगो भवति ॥ अथवा वर्षलग्नात्पंचमस्थाने जन्मकालीनशन्याक्रांतराशिर्भौमाक्रां तरा

शिर्वास्यात् । अथवा द्वयोरेकेत्रावस्थानं स्यात्तदा नूनं निश्चयेन पुत्रार्तिं पुत्रपीडां करोति ॥ ४ ॥ अथान्यं सुतप्राप्तियोगमाह—पुत्र इति । पुत्रे वर्षलग्नात्पंचमस्थाने पुण्यस्य सहमं शुभ ग्रहैर्दृष्टं युक्तं वा स्यात्तदा पुत्राप्त्यै पुत्रप्राप्तये भवति ॥ अयमेको योगः । अथान्यः । पुत्रे वर्षलग्नात्पंचमस्थाने वर्षलग्नस्वामिपंचभावस्वामिनौ यदि बलिनौ चेत्तिष्ठतस्तदा पुत्रदौ भवतः ॥ ५ ॥

**चंद्रो जीवोऽथवा शुक्रः स्वोच्चगः सुतदः सुते ॥ वक्री भौमः सुतस्थश्चेदुत्पन्नसुतनाशनः ॥ ६ ॥ सुताधिपो जन्मनि भार्गवोऽब्दे पुत्रे विलग्नाधिपतीत्थशाली ॥ पुत्रप्रदो मंदपदस्थपुत्रे पापाधिकारीक्षित आत्मजार्तिः ॥७॥ यद्राशिगो ग्रहः सूतौ स राशिस्तत्पदाभिधः ॥ बलीजन्मोत्थसौख्याय वर्षे तद्दुःखदोऽन्यथा ॥८॥**

**इति पँचमभावः ॥**

अथ शुभाशुभयोगावाह—चंद्र इति ॥ सुते वर्षलग्नात्पंचमस्थाने चंद्रो बृहस्पतिर्वा शुक्रो वा स्वोच्चगतः सन् चेत्तिष्ठति तदा सुतदः पुत्रप्राप्तिं करोति ॥ अयं शुभयोगः ॥ अथाशुभयोगः—वक्रीति ॥ वक्री भौमः सुतस्थः वर्षलग्नात्पंचमस्थाने चेत्तिष्ठति तदा उत्पन्नसुतनाशनः ॥ ६ ॥ अथ पुत्रप्राप्तितन्नाशयोगावाह—सुताधिप इति ॥ जन्मनि जन्मकाले सुताधिपः पंचमभावस्वामी भार्गवः शुक्रः अब्दे वर्षकाले पुत्रे पंचमस्थाने सन् विलग्नाधिपतीत्थशालः वर्षलग्नस्वामिना सह मुथशिलयोगश्चेत्तदा पुत्रदो भवति ॥ अयं सुतप्राप्तियोगः । अथाशुभयोगः ॥ जन्मकाले मंदपदस्थपुत्रे मंदः शनिः तस्य पदं स्थानमत्र वर्षे चेत्पंचमं भवेत् ॥ पापाधिकारी पापग्रहः पंचाधिकारिणां मध्ये वर्तमानः सन् ईक्षिते दृष्टे सति आत्मजार्तिः आत्मजः पुत्रस्तस्यार्तिः पीडा स्यात् ॥ ७ ॥ अन्यदाह—यद्राशिग इति ॥ सूतौ जन्मकाले यद्राशिगो ग्रहः यो ग्रहः यस्मिन्राशौ तिष्ठति स राशिस्तस्यपदाभिधः स्थानवाच्यः । फलमाह ॥ बलीति ॥ सराशिर्वर्षे तद्भावगः सन्बली चेत्तदा जन्मोक्तसौख्याय जन्मकालीनतद्भावोत्थशुभफलदो भवति ॥ अन्यथा तद्दुःखदः वर्षउक्तस्थानास्थितराशिर्निर्बलश्चेत्तदा तद्भावजनितशुभमशुभं स्यादित्यर्थः ॥ ८ ॥

इति पंचमभावविचारः ।

अथ षष्ठभावविचारः ।

**मंदेऽब्दपेऽनृजुगतौ पतिते रुगार्तिः स्यात्सान्निपातभवभीररिगेऽत्र शूलम् ॥ गुल्माक्षिरोगविषमज्वरभीर्गुरौ तु पापार्दितेऽनिलरुजोपि कबूलशून्ये ॥ १ ॥ स्यात्कामलाख्यरुगपीत्थमसृज्यसृग्भीः पित्तं च रिःफगरवौ दृशि शूलरोगः ॥ पित्तं पुना रिपुगृहेऽत्र**

भृगौ नृभेऽरौ श्लेष्माभयेक्षितयुतेऽपि कफोऽरिगेंदौ ॥ २ ॥ एवं बुधे पापयुतेऽब्दपेऽरौ वातोत्थरोगो जनिलग्ननाथः ॥ पापोऽब्दपेन क्षुतदृष्टिदृष्टो रोगप्रदो मृत्युकरः स पापः ॥ ३ ॥ सूत्यार्किभे लग्नगते रूक्षशीतोष्णरुग्भयम् ॥ शनीक्षिते याप्यता स्यात्सपापे मृत्युमादिशेत् ॥ ४ ॥ एवंभौमे क्षुतदृशारक्तपित्तरुजोऽग्निभिः ॥ ततोऽन्ये बहुला रोगाः शुभदृष्टौ रुगल्पता ॥५॥

अथ षष्ठभावविचारः-मंदेऽब्दप इति ॥ मंदे शनौ अब्दपे वर्षस्वामिनि । अनृजुगतौ वक्रिणि पतिते पापग्रहैः पीडिते अरिगे षष्ठस्थानगते सति रुगार्तिः रोगेन आर्तिः पीडा स्यात् सन्निपातो वातपित्तकफात्मकः एवं युगपदेव दोषत्रयस्य उत्पत्तिस्तदुद्भवाभीर्मरणं शूलपीडा गुल्ममुदररोगः अक्षिरोगो विषमज्वरः एभ्यो रोगेभ्यो भीर्भयं स्यात् ॥ एवं गुरौ वर्षस्वामी भूत्वा षष्ठस्थानगे वक्रिणि पापार्दिते सत्यपि कंबूलशून्ये चंद्रमसा सह कंबूलयोगरहिते सत्यनिलरुजो वातरोगाः स्युः ॥ १ ॥ अथान्यदशुभफलमाह-स्यादिति । स्यात्कामलाख्यरुगपीति पूर्वेण संबंधः । इत्थमिति अमुना प्रकारेण असृजि भौमे वर्षस्वामिनि षष्ठगे पतिते वक्रिणि सति असृग्भी रक्तविकाराख्यो रोगः । रवाविति । रवौ वर्षस्वामिनि षष्ठस्थे पतिते पित्तं स्यात ॥ रिःफगरवौ तादृशरवौ द्वादशस्थे दृशि नेत्रे शूलरोगः स्यात् । तथा तादृशे भृगौ शुक्रे रिपुगते षष्ठस्थे पुनः पित्तरोगः स्यात् । यदा नृभे नरराशौ अरौ षष्ठे तत्रस्थिते शुक्रे भयेक्षितयुतेपि भयेन षष्ठभावस्वामिना दृष्टे युक्तेपि श्लेष्माख्यो रोगः स्यात् एवंविधे चंद्रेऽरिषष्ठस्थानगे सति कफसंबंधी रोगः स्यात् ॥ २ ॥ अथ बुधस्य फलमाह-एवमिति । एवममुना प्रकारेण बुधेऽब्दपे वर्षस्वामिनि भूत्वा अरौ षष्ठस्थाने पापग्रहैर्युक्ते वक्रिणि सति वातजनितरोगः स्यात् । जनीति । जनिलग्ननाथःजन्मकालीनलग्नस्वामी पापग्रहः सन् अब्दपेन वर्तमानवर्षस्वामिना क्षुतदृष्टिदृष्टश्चतुर्थदशमैकसप्तमदृष्ट्या दृष्टस्तदा रोगप्रदः स्यात् । सपापो मृत्युकरः सजन्मकालीनलग्नस्वामी पापग्रहः सन्वर्षकाले पापग्रहयुक्तो वर्षस्वामिना क्षुतदृष्ट्या दृष्टो मृत्युप्रदः स्यादित्यर्थः ॥ ३ ॥ अथ शनिकृतारिष्टयोगमाह-सूत्यार्किभ इति । सूतौ जन्मकाले आर्किभे शन्याक्रांतराशौ लग्नगते वर्षकालीनलग्नस्थे सति रूक्षशीतोष्णरुग्भयं स्यात् । यदि जन्मकालीनशन्याक्रांतराशौ वर्षकाले शनिना क्षुतदृशा दृष्टे सति मृत्युमादिशेत् ॥ ४ ॥ अथ भौमकृतारिष्टयोगमाह-एवमिति । एवममुना प्रकारेण जन्मकाले भौमो यस्मिन् राशौ तिष्ठति स राशिर्यदि वर्षे वर्षकालीनलग्नगतो भवेत् । भौमक्षुतदृशा भौमेन क्षुतदृष्ट्या दृष्टश्चेत्तदा रक्तेत्यादिरोगा इत्यंतं फलं स्पष्टम् । सलग्नगतराशिः शुभग्रहैर्दृष्टश्चेत्तदा रोगाल्पता स्यात् ॥ ५ ॥

लग्नाधिपाब्दपतिषष्ठपतीत्थशालो रोगप्रदः खचरधातुविकारतः स्यात् ॥ कांदर्पिकामयभयं पतिते सितेऽर्कस्थानेऽथ षष्ठ इह रुक्सद्मं सपापम् ॥ ६ ॥ सपापे गुरौ रंध्रगे लग्नआरे सतंद्रास्तिमूर्छांगनाशः सचंद्रे ॥ खलाः सूतिकेंद्रेऽब्दलग्ने रुगाप्त्यै कफोद्व्यंघ्रिगैरीक्ष्यमाणे सिते स्यात् ॥ ७ ॥ दिनेऽब्दप्रवेशो विलग्नेऽब्दसूत्योर्यदा दृक्कहद्दागृहाद्योऽधिकारः ॥ रवेर्वाकुजस्यात्र पीडा ज्वरात्स्याद्दृशा सौम्यखेटोत्थयान्ते सुखाप्तिः ॥ ८ ॥ निशि सूतौ वर्द्धमाने चंद्रे भौमेत्थशालतः ॥ रुग्नश्येदेधते गं त्थशालाद्व्यत्ययेऽन्यथा ॥ ९ ॥ रवावीदृशि वित्केतुयुतेऽब्दं निखिलं गदाः ॥ अधिकारी बली सूतावब्दे केतुज्ञयुक्तथा ॥ १० ॥

अथान्यमरिष्टयोगमाह—लग्नाधिपेति ॥ लग्नाधिपः वर्षलग्नस्वामी । अब्दपतिर्वर्षस्वामी । षष्ठपतिः षष्ठभावस्वामी । अनयोः परस्परमित्थशालो मुथशिलयोगश्चेत्तदा खचरग्रहयुक्ते चेत्स्यात्तदापि मदनसंबंधी रोगः स्यात् जन्मकाले शुक्रो यस्मिन्राशावस्ति सराशिर्वर्षकाले षष्ठो भावः स्यात्तस्मिन्भावे सूर्ये सति तथा शुक्रे पतिते षष्ठाष्टमद्वादशस्थानान्यतमस्थे सति कांदर्पिकामयभयं मदनसंबंधी रोगः स्यात् ॥ अयमर्थो मूलवाक्यानुसारेण ॥ तद्वाक्यं च ॥ शुक्रस्थान इत्यादि ॥ ६ ॥ अथान्यौ रोगोत्पत्तियोगावाह—सपाप इति ॥ सपापे पापग्रहयुक्ते गुरौ रंध्रगे वर्षलग्नादष्टमस्थाने सति ॥ आरे भौमे लग्ने सति ॥ सतंद्रास्ति मूर्छा तंद्रा आलस्यं तत्सहिता मूर्छाचेष्टाराहित्यं भवति ॥ सचंद्रे चंद्रयुक्तभौमे लग्नस्थे ॥ पुनश्चंद्रयुक्तपापयुक्तगुरावष्टमस्थे सति अंगनाशः कुत्रचिदंगस्य विशेषेण नाशः स्यादयमेको योगः । अथान्यः । सूतिकेंद्रं सूतौ जन्मकाले यानि चत्वारिकेंद्राणि तेषु खलाः पापग्रहाः स्युस्ते अब्दे लग्ने वर्षकालीनलग्ने स्युः । तदा रुगाप्त्यै रोगप्राप्त्यै भवंति । तथा सिते शुक्रे द्व्यंघ्रिगैर्नरराशिस्थितैः पापग्रहैरीक्षमाणे दृष्टे सति कफोत्पत्तिः स्यात् ॥७॥ अथान्यदाह—दिन इति ॥ दिने दिवसे प्रवेशो वर्षप्रवेशः स्याद्यदा विलग्नेऽब्दसूत्योर्वर्षकालजन्मकालयोर्लग्नस्थस्य रवेः सूर्यस्य वा कुजस्य भौमस्य वा दृक्को द्रेष्काणः हद्दास्वगृहाधिकारः प्राप्तः स्यात्तदात्र वर्षे ज्वरात्पीडा स्यात् । अयमर्थः । पंचाधिकारिणां मध्ये अधिकारी भूत्वा सूर्ये भौमे वा लग्ने सति ज्वरात्पीडा स्यादित्यर्थः । दृशा सौम्यखेटोत्थयात्र तादृशि लग्ने शुभग्रहैर्दृष्टे सति अंते परिणामे सुखाप्तिः स्यात् ॥८॥ अथ रोगनाशरोगोत्पत्तियोगावाह—निशीति । निशि रात्रौ सूतौ जन्म चेत्स्यात्तत्र वर्द्धमाने शुक्लपक्षीय उपचीयमाने चंद्रे वर्षकालीनभौमेन सह

इत्थशालतो मुथशिलयोगे सति रुक् रोगः नश्येत् नाशं प्राप्नोति । यदि शुक्लपक्षस्थो-पचीयमाने चंद्रे मंदेत्थशालाच्छनिना सह मुथशिलयोगे सति रुक् रोगः एधते वृद्धिं प्राप्नोति । व्यत्ययेन्यथेति । दिवसे जन्म स्यात्कृष्णपक्षस्थचंद्रे भौमेन सह मुथशिलयोगे सति रोगवृद्धिः स्यात् पुनस्तादृशे चंद्रे शनिना सहमुथशिलयोगे सति रोगनाशः स्यादित्यर्थः ॥ ९ ॥ अथान्ययोगद्वयमाह–रवाविति । केतुबुधयुते रवावीदृशि भौमेन सह मुथशिलयोगे सति अब्दं निखिलं संपूर्णं वर्षं गदो रोगः स्यादयमेको योगः । अथान्यः । सूतौ जन्मकाले कश्चिद्ग्रहः अधिकारी वा बली सन् स ग्रहः अब्दे वर्षकाले केतुबुधयुक्तश्चेत्तदा संपूर्णं वर्षं रोगप्रदं स्यात् ॥ १० ॥

**चतुर्थेऽस्ते च मुथहा क्षुतदृष्ट्याशनीक्षिता ॥ शूलपीडापापख-गैर्दृष्टे तत्परिणामजम् ॥ ११ ॥ जन्मस्थजीवासितराशिगते महीजे सूर्यांशुगे पिटकशीतलिकादि मांद्यम् ॥ शीतोष्णगंडभ-रुरू सबुधे च सेंदौ कुष्ठं भगंदररुजोऽपि सगंडमालाः ॥ १२ ॥ जन्मलग्नेंथिहानाथौ षष्ठौ पापान्वितेक्षितौ ॥ निर्बलौ ज्वरपीडांग-वैकल्याद्यतिकष्टदौ ॥ १३ ॥ मुथहा लग्नतन्नाथाः पापांतः-स्थास्तु रोगदाः ॥ षष्ठेशे षष्ठगे सौम्ये स्त्रियः प्राप्तिरितीर्यते॥ १४॥**

अथशूलयोगमाह–चतुर्थइति । वर्षलग्ने चतुर्थस्थाने अस्ते सप्तमस्थाने वा मुथहा स्यात् शनिना क्षुतदृष्ट्या शत्रुदृष्ट्या चतुर्थदशमैकसप्तमदृष्ट्या ईक्षिता दृष्टा सती तदा शूलपीडा स्यात् ॥ तादृशी मुथहा पापग्रहैर्दृष्टा सती तत्परिणामजातस्य परिणामः शूलस्य नाशः ततो जाता शूलनाशोत्तरं शूलपीडा स्यादित्यर्थः ॥ ११ ॥ अथ सकलग्रहवशेन पिटकादियोगमाह–जन्मस्थेति । जन्मकाले जीवसितराशिगते महीजे जीवो बृहस्पतिः सितः शुक्रो वा यस्मिन्राशावस्ति वर्षे तस्मिन्राशौ महीजे भौमश्चेत्स्यात् । कीदृशो भौमः । सूर्यांशुगे अस्तंगतो भवेत्तदा पिटकशीतलिकादि मांद्यं शीतोष्णगंडभवरुक् च स्यात् ॥ बुधे च सेंदौ एवं जन्मकालिकजीवसिताधिष्ठितराशौ चंद्रयुक्तबुधे सति कुष्ठं भगंदररुजोपि सगंडमालाख्या रोगाः स्युः ॥ १२ ॥ अथान्यानिष्टयोगमाह–जन्मेति । जन्मलग्नेंथिहानाथौ जन्मलग्नस्वामिमुथहास्वामिनौ वर्षलग्नात्षष्ठौ पापान्वितेक्षितौ पापग्रहैर्युतौ दृष्टौ वा निर्बलौ स्यातां तदा ज्वरपीडांगवैकल्याद्यतिकष्टदौ भवेताम् ॥ १३ ॥ अथ रोगप्राप्तिस्त्रीप्राप्तियोगावाह–मुथहा लग्नं तन्नाथौ तयोर्मुथहालग्नयोर्नाथौ एते चत्वारः पापांतःस्था पापग्रहमध्ये स्थिताः स्युस्तदा रोगदाः स्युः ॥ अनयोर्मध्ये कश्चिदेकः पापग्रहमध्यगतस्तदा रोगप्रदः स्यात् । अयमशुभयोगः । अथशुभ-

योगः ॥ षष्ठेशेषष्ठभावस्वामिनि सौम्ये शुभग्रहः सन् षष्ठगे षष्ठस्थानेसति तदा स्त्रियाः प्राप्तिः इतीर्यते ज्ञायते ॥ अस्मिन्नर्थे वामनः "षष्ठाधिपे शुभे षष्ठस्थिते प्राप्तिः स्त्रिया भवेत्" इति केचित्। तन्न। यतोऽत्ररोगप्रकरणाद्वामिन्या रोगप्राप्तिरुचिता ॥ नतु केवलं तत्र स्त्रियाः प्राप्तिर्बाधितत्वात्। एतदर्थे समरसिंहोपि। "षष्ठाधिपे च षष्ठं प्राप्ते सौम्ये भवेत्स्त्रियां गदप्राप्तिः" इति ॥ १४ ॥

**रोगकर्ता यत्र राशावंशे स्यादनयोर्बली ॥ तत्स्थानं तस्य रोगस्य वाच्यं राशिस्वरूपतः ॥ १५ ॥ जन्मषष्ठाधिपे भौमे वर्षे षष्ठगते रुजा ॥ क्रूरेत्थशाले विपुलः शुभदृग्योगतस्तनुः॥ १६॥ इति षष्ठभावः ॥**

अथ रोगस्थानमाह–रोगकर्तेति। पूर्वोक्तरोगकर्ता ग्रहो यत्र राशावंशे स्यात्॥ यस्मिन्राशावंशे नवमांशे स्यादनयोर्बली राशिनवमांशयोर्मध्ये यो बली स राशिस्तस्य रोगस्य राशिस्वरूपतो वातपित्तकफप्रयुक्तैः कृत्वा तत्स्थानं वाच्यम् ॥ १५ ॥ अथान्यदाह। जन्मेति जन्मषष्ठाधिपे जन्मकालीनषष्ठभावस्वामिनि भौमे सति वर्षे षष्ठगते षष्ठस्थाने चेत्तदा रुजं रोगं करोति ॥ क्रूरेत्थशाले पापग्रहेण सह मुथशिलयोगे सति विपुलो भूयान्रोगः स्यात् ॥ शुभदृग्योगतः शुभग्रहैर्दृष्टः युक्तो वा तदातनुः स्वल्पो रोगस्स्यात् ॥ १६ ॥ इतिषष्ठभावः ॥



अथ सप्तमभावः।

**बली सितोऽब्दाधिपतिः स्मरस्थः स्त्रीपक्षतः सौख्यकरो विचिंत्यः ॥ इज्येक्षितोऽत्यंतसुखं कुजेनाधिकारिणा प्रीतिकरो मिथः स्यात् ॥ १ ॥ बुधेक्षिते जारता स्याल्लघ्व्या मंदेन वृद्धया ॥ गुरुदृष्ट्या नवा भार्या संततिस्त्वरितं ततः ॥ २ ॥**

अथ सप्तमभावः ॥ बली सित इति। बली सितः शुक्रः अब्दाधिपो वर्षस्वामी सन्स्मरस्थः सप्तमस्थाने चेत्तदा स्त्रीपक्षतः सौख्यकरो विचिंत्यः ज्ञेयः ॥ इज्येक्षित एतादृशः शुक्रो बृहस्पतिना दृष्टस्तदा अत्यंतं सौख्यं करोति। कुजेन भौमेन अधिकारिणा पंचाधिकारिणां मध्ये अधिकारी भूत्वा दृष्टस्तदा मिथः परस्परं प्रीतिकरः स्यात् ॥ १ ॥ अथ जारताविवाहयोगावाह–बुधेक्षित इति। तस्मिञ्छुक्रे वर्षस्वामिनि सप्तमस्थे सति। बुधेक्षिते बुधेन दृष्टे सति। लघ्व्या अल्पवयस्कया सह जारता स्यात् ॥ परविवाहितां भुंक्त इत्यर्थः। तादृशे शुक्रे मंदेने शनिना दृष्टे सति वृद्धया नार्या सह जारता स्यात्। तादृशे शुक्रे गुरुदृष्ट्या बृहस्पतिना दृष्टे नवा भार्या नवीना विवाहिता स्त्री भवति ॥

ततस्तस्याः सकाशात् त्वरितं शीघ्रं संततिः स्यात् ॥ एवं सति गुरुदृष्ट्या इति पाठः प्रामादिकः । इज्यक्षित इति पूर्वपद्ये उक्तत्वादिति तत्त्वम् । अत्र गुरुयुक्ते नवा भार्येतिपाठः साधुः पूर्वग्रंथानुरोधात् । उक्तंच जातकसारे ' संयुक्ते सुरपूजितेन नववधूप्राप्तिश्च सद्वंशतः ' इति । वामनः । ' गुरुयुक्ते नवा भार्या संततिस्त्वरितं ततः ' ताजिकयोगसुधानिधौ ' गुरुयुतेपि च नूतनवल्लभा भवति तत्र च संततिराशुहि । ' इति ॥ २ ॥

**जन्मलग्नाधिपेऽस्तस्थे दारसौख्यं बलान्विते ॥ जन्मशुक्रर्क्षमस्तेऽब्दे स्त्रीलाभायासितेऽब्दपे ॥ ३ ॥ लग्नास्तनाथयोरित्थशाले स्त्रीलाभमादिशेत् ॥ सहमेशो भावपो वा विनष्टः कष्टदः स्त्रियः ॥ ४ ॥ नष्टेन्दौ शुक्रपङ्गे मैथुनं स्वल्पमादिशेत् ॥ जन्मशुक्रर्क्षगो भौमः स्त्रीसुखोत्सवकृद्बली ॥ ५ ॥**

अथ स्त्रीसौख्यविवाहयोगावाह-जन्मेति । जन्मलग्नाधिपे जन्मलग्नस्वामिनि वर्षे बलान्विते बलिष्ठे अस्तस्थे सप्तमस्थाने सति दारसौख्यं स्त्रीजनितं सुखं स्यात् । जन्मकाले शुक्रर्क्षं शुक्रो यस्मिन्राशौ तिष्ठति स राशिरब्दे वर्षकाले अस्ते सप्तमस्थाने सति सिते शुक्रे अब्दपे वर्षस्वामिनि सति तदा स्त्रीलाभाय स्त्रीप्राप्तये भवति । इदमवधेयम् । जन्मशुक्रर्क्षमित्यत्र जन्मशुक्रर्क्षमस्ते तत्र चेच्छुक्रोऽब्दपो वर्षस्वामी तदा स्त्रीसुखमित्यत्र संमतेरभावः । यथा समरसिंहः " जातकलग्नाधिपतौ वर्षस्थे बलिनि दारसुखम् ॥ शुक्रस्थाने वर्षे परिणयति गृहस्थतां याति " इति ताजिकालंकारे " जनुर्लग्नाधीशे शरदि मदसंस्थे बलयुते भृशं योषित्तोषः सितयुतगृहे स्यात्परिणयः " इति । ताजिकयोगसुधानिधौ " जननलग्नपतौ शरदस्तगे बलयुते प्रमदासुखमीरितम् ॥ जननशुक्रगराशिगते जनुस्तनुपतौ सबले परिणायनम् " इति ॥ वामनः "जन्मलग्नाधिपे वर्षे लग्नात्सप्तमगे सति । उदिते सबले चैवं दारसौख्यं प्रजायते॥ शुक्रो जन्मनि यद्राशौ वर्षे लग्नेश्वरो यदि । तद्राशौ सप्तमस्थेपि पुंसः परिणयस्तदा ॥ " इति । अत्र पूर्वपरामर्शाल्लग्नेश्वरो जन्मलग्नेश्वर इति । नच वर्षेश्वरो यदीतिपाठः । पूर्वश्लोकविरोधात् ॥ तादृगर्थे संमतेरभावाच्च । एवंसति मूलं निर्मूलमिति मंतव्यम् ॥ ३ ॥ अथ स्त्रीलाभयोगं स्त्रीकष्टयोगं चाह-लग्नेति । लग्नं वर्षलग्नम् । अस्तं सप्तमभावः अनयोर्नाथयोः स्वामिनोरित्थशाले मुथशिलयोगे सति स्त्रीलाभं विवाहादिद्वारा स्त्रीप्राप्तिमादिशेत् कथयेत् । सहमेश इति । सहमेशः स्त्रीसहमस्वामी भावपोवा सप्तमभावस्वामीवा विनष्टश्चेत्तदा स्त्रियाः कष्टदो दुःखदो भवति ॥ विनष्टग्रहलक्षणं वामनेनोक्तम् "क्रूराक्रांतः क्रूरयुतः क्रूरदृष्टश्च यो ग्रहः ॥ विरश्मितां प्रपन्नश्च स विनष्टो बुधैः स्मृतः " इति ॥ ४ ॥ अथ स्त्रीस्वल्पसुखमहत्सुखयोगावाह-नष्टेंदाविति । शुक्रपदगे शुक्राधिष्ठितः राशीस्थिते वर्षे

नष्टे प्रागुक्तविनष्टलक्षणाक्रांते इंदौ चंद्रे सति । स्वल्पमैथुनमादिशेत्कथयेत् तथा जन्मशुक्रर्क्षगो भौमः जन्मकाले शुक्रो यस्मिन्राशावस्ति तस्मिन्राशौ वर्षकाले भौमो बली भवेत्तदा स्त्रीसुखोत्सवकृत् ॥ ५ ॥

**जन्मास्तपेऽब्दपसितेन युगीक्षिते स्यात्स्त्रीसंगमो बहुविलाससुखप्रधानः ॥ केंद्रत्रिकोणगगुरौ जनिशुक्रभस्थे स्त्रीसौख्यमुक्तमिति हद्दविवाहयोश्च ॥ ६ ॥ अधिकारीपदस्थेऽर्के स्त्रीभ्यो व्याकुलताऽनिशम् ॥ इंथिहाधिकृतस्थाने गुरुदृष्ट्या विवाहकृत् ॥ ७ ॥ इंथिहार्कारयुग्द्यूने क्रूरिते सहमे स्त्रियाः ॥ स्त्रीपुत्रेभ्यो भवेत्कष्टं पापदृष्ट्याविशेषतः ॥ ८ ॥**

अथस्त्रीसौख्ययोगचतुष्टयमाह—जन्मास्तप इति । जन्मकालीनलग्नात्सप्तमस्थानस्वामिनि अब्दपसितेन वर्षस्वामी शुक्रस्तेन युगीक्षिते युक्तो दृष्टो वा तदा स्त्रीसंगमो बहुविलाससुखप्रधानः स्यात् अयमेको योगः । केंद्रेति । जन्मकाले शुक्रभस्थे शुक्राधिष्ठितराशिस्थिते वर्षकालीनगुरौ केंद्रत्रिकोणगते सति स्त्रीसौख्यमुक्तम् । अयं द्वितीयो योगः । इति हद्दाविवाहयोश्चेति अमुना प्रकारेण वर्षलग्ने य आगतो हद्दास्वामी स जन्मकालीनशुक्राक्रांतराशिगतः सन् केंद्रत्रिकोणगो भवेत्तदा स्त्रीसौख्यं स्यात् ॥ अयं तृतीयो योगः ॥ तथा वर्षकाले यद्विवाहसहमं तत्स्वामी वा जन्मकालीनशुक्राधिष्ठितराशिगतः सन् केंद्रत्रिकोणगो भवेत् । तदापि स्त्रीसौख्यं स्यात् । अयं चतुर्थो योगः केंद्रमित्यत्र लग्नं विहाय चतुर्थसप्तमदशमान्युक्तानि समरसिंहेन तद्वाक्यं च ॥ " शुक्रस्थाने वास्यान्नवमेऽस्ते पंचमे चतुर्थे खे । जीवे सति पूर्णफलं विवाहयेद्धद्दनाथे च ॥" फलसाम्याद्युक्तिलाघवाद्ग्रंथकृता लग्नमुक्तमितिबोध्यम् ॥ ६ ॥ अथ स्त्रीक्लेशविवाहयोगावाह—अधिकारीति । पंचाधिकारिणां मध्ये यस्य कस्यचिदधिकारिणः पदस्थे स्थाने अर्के सूर्ये सति स्त्रीभ्योऽनिशं निरंतरं व्याकुलता स्यात् । एवमिंथिहाधिकृतस्थाने इंथिहा मुथहा अधिकृतस्थाने अधिकारिग्रहस्य स्थाने गुरुदृष्ट्या गुरुणा दृष्टा सती विवाहकर्त्री स्यात् ॥ ७ ॥ अथ स्त्रीक्लेशयोगावाह—इंथिहेति । द्यूने वर्षलग्नात्सप्तमस्थाने इंथिहा मुथहा आर्कारयुक् अर्कः सूर्यः आरो भौमस्तेन युक्ता चेत्तदा स्त्रीपुत्रेभ्यः कष्टं भवेत् ॥ पापग्रहदृष्ट्या विशेषतः कष्टं स्यादयमेको योगः ॥ अथान्यः । स्त्रीसहमे क्रूरिते पापाक्रांते वर्षलग्नात्सप्तमस्थाने सति स्त्रीपुत्रेभ्यः कष्टं स्यात् । पापग्रहैर्दृष्टे सति विशेषतः कष्टं स्यात् । केचित्तु क्रूरिते इत्यस्य योगद्वयेप्यन्वयः क्रूरिते द्यूने इंथिहार्कारयुगिति वदंति । तन्न अर्कारयुगित्यनेनैव द्यूनस्य क्रूरितत्वोपपत्तेः । अन्यथा योगद्वयकल्पनमपि व्यर्थं स्यादिति ॥ ८ ॥

सूतौ द्यूनाधिपः शुक्रोऽब्दे द्यूने बलवान्भवेत् ॥ लग्नेशेनेत्थशालश्चेत्स्त्रीलाभं कुरुते ध्रुवम् ॥ ९ ॥ भौमेऽब्दपे सितदृशा शुक्रेऽब्देशे कुजेक्षया ॥ तद्दृष्टे दारसहमे स्त्रीलाभो भवति ध्रुवम् ॥ १० ॥ सूतौ वा दारसहमे तद्दृष्टे योषिदाप्यते ॥ स्वामिदृष्टं स्त्रीसहमं शुक्रदृष्टं विवाहकृत् ॥ ११ ॥ सूतौ द्यूनाधिपे वर्षसहमेशे स्त्रियाः सुखम् ॥ जन्मास्तपेंथिहानाथवर्षेशः खे द्युने तथा ॥ १२ ॥

अथ विवाहयोगमाह—सूताविति । सूतौ जन्मकाले द्यूनाधिपः सप्तमभावस्वामी शुक्रः अब्दे वर्षकाले बलवान् बलिष्ठः सन् द्यूने सप्तमस्थाने भवेल्लग्नेशे नेत्थशालश्चेद्वर्षलग्नस्वामिना सह मुथशिलयोगश्चेत्तदा स्त्रीलाभं सुखं च कुरुते ॥ ९ ॥ अथ त्रीन्स्त्रीप्राप्तियोगानाह—भौम इति । भौमे अब्दपे वर्षस्वामिनि सितदृशा शुक्रेण दृष्टे सति स्त्रीलाभयोगो एकः । तथा शुक्रेब्देशे वर्षस्वामिनि कुजेक्षया भौमेन दृष्टे सति स्त्रीलाभयोगो द्वितीयः । अथवा दारसहमे वर्षीयस्त्रीसहमे तद्दृष्टे ताभ्यां शुक्रभौमाभ्यां दृष्टे सति ध्रुवं निश्चयेन स्त्रीलाभो भवति । तृतीयो योगः ॥ १० ॥ अथ पुनर्विवाहयोगद्वयमाह—सूताविति । वा प्रकारांतरेण सूतौ जन्मकाले दारसहमे तद्दृष्टे सति योषित्स्त्री प्राप्यते ॥ उक्तंच समरसिंहेन " जन्मनि दृष्टौ सत्यस्त्रीसहमाप्तौ च परिवारः " अयमर्थः यथा वर्षकाले स्त्रीसहमं तथैव जन्मकाले प्रश्नकाले च स्त्रीसहमं कार्यमिति संज्ञातंत्रे सहमप्रकरणे उक्तमास्ति ॥ अयमेको योगः । अथान्यः । स्त्रीसहमं स्वामिना दृष्टं शुक्रदृष्टं तदा विवाहकृत् ॥ ११ ॥ अथ स्त्रीसुखप्राप्तियोगावाह—सूताविति ॥ सूतौ जन्मकाले द्यूनाधिपे सप्तमभावस्वामिनि वर्षे वर्षकाले सहमेशे स्त्रीसहमस्वामी भवेत्तदा स्त्रियः सुखं स्त्रीतः सुखं स्यात् । अयमेको योगः । अथान्यः जन्मास्तपे जन्मकालीनसप्तमभावस्वामी इंथिहानाथः वर्षकालीनमुथहास्वामी वर्षेशो वर्षस्वामी एते खे दशमस्थाने तथा द्यूने सप्तमस्थाने स्युस्तदा स्त्रीतः सुखं स्यात् ॥ उक्तंच ताजिकयोगसुधानिधौ " जन्मास्तनाथेऽब्दपतौ च मुंथेशेऽस्तंगते व्योमगतेऽपि तद्वत् " अत एव वर्षेशाश्चेद्द्यूने तथेति पाठकल्पनमपि निरस्तम् ॥ १२ ॥

मुथहातोद्यूनसंस्थः स्वगृहोच्चगतः शशी ॥ विदेशगमनं कुर्यात्क्लेशः पापेक्षणाद्भवेत् ॥ १३ ॥ इतिजायाभावविचारः ॥

अथ सप्तमस्थानस्य मार्गस्थानत्वाद्विदेशगमयोगमाह—मुथहात इति ॥ वर्षे स्वगृहस्वोच्चगतः शशी चंद्रो मुथहातो मुथहाधिष्ठितस्थानात् द्यूनस्थः सप्तमस्थाने स्यात्तदा

विदेशगमनं कुर्यात् । एतादृशश्चंद्रः पापेक्षणात् पापग्रहैर्दृष्टश्चेत्तदा क्लेशदो भवेत् ॥१३॥
इति सप्तमभावविचारः ॥

अथाष्टमभावविचारः ।

**भौमेऽब्दपे क्रूरहतेऽयसाघातो बलोज्झिते ॥ अग्निभीरग्निभे क्रूरनराद्द्विपद्भे मृतिः ॥ १ ॥ वियत्यवनिपामात्यरिपुतस्करजं भयम् ॥ तुर्ये मातुः पितृव्याद्वा मातुलात्पितृतो गुरोः ॥ २ ॥ लग्नेंथिहा पतिसमापतयो मृतीशाश्चेदित्थशालिन इमे निधनप्रदाः स्युः ॥ चेत्पाकरिष्टसमये मृतिरेव तत्र सार्के कुजे नृपदिवसेऽब्दवेशे ॥ ३ ॥**

अथ अष्टमभावविचारः ॥ भौम इति । भौमे अब्दपे वर्षस्वामिनि सति क्रूरहते युद्धादिना पीडिते बलोज्झिते निर्बले यत्किंचित्स्थानगते सति अयसा लोहेन घातो भवेत् । तथा भौमे अग्निभे वह्निराशौ संज्ञातंत्रोक्तमेषसिंहधनुषाख्ये स्थिते सति अग्निभीर्वह्निसंबंधाद्भीतिभयं भवति ॥ तथा भौमे द्विपद्भे मिथुनकन्याधनुःपूर्वार्द्धराशिस्थे क्रूरनरात् उग्रस्वभावमनुष्याच्चौरादितो मृतिर्मरणं स्यात् ॥ १ ॥ अथ तादृशस्य भौमस्य विशेषस्थानगतस्य योगावाह—वियतीति । वर्षस्वामिनि भौमे निर्बले क्रूरहते एतादृशे यदि वियति दशमस्थानगते सति तदा अवनिपामात्यात् राजप्रधानतो रिपुतः शत्रुतः तस्करतश्चौरतो भयं वक्तव्यम् । अथ तादृशे भौमे तुर्ये चतुर्थस्थानस्थे सति मातुः पितृव्याद्वा मातुलात् पितृतः गुरोः पितुः सकाशाद्गुरोः सकाशाद्भयं वाच्यम् ॥ २ ॥ अथ महामृत्युयोगानाह—लग्नेंथिहापतिसमापतयो मृतीशा इति । वर्षलग्नस्वामी मुथहास्वामी वर्षस्वामी एते त्रयो मृतीशाश्चेदित्थशालिनः अष्टमभावस्वामिना सह मुथशिलयोगश्चेत्तदा निधनप्रदा मरणप्रदाः स्युः । चेत्पाकरिष्टस्य दशारिष्टस्य समये मृतिरेव स्यात् । अयमर्थः । जन्मकालिकपापग्रहदशायां पापग्रहस्यांतर्दशा चेद्भवति तदा मरणमेव स्यादित्यर्थः । अन्यदाह । तत्रेति । तत्र वर्षकाले दिवसेऽब्दवेशे दिवावर्षप्रवेशे सति सार्के कुजे सूर्यसहिते भौमे सति नृपभयं राज्ञः सकाशाद्भयं स्यात् ॥ ३ ॥

**सूर्य्येमूसरिफेसितेनजननेवर्षेधिकारीतथा केंद्रेराजगदाद्भयंचरुगसृक्स्थानेधिकारींदुजे ॥ सौम्येक्रूरदृशाकुजस्यरुगसृक्दोषादिनांशुस्थिते दग्धेबंधमृतीविदेशतइतिप्राहुर्बुधे तादृशे ॥ ४ ॥ भौमस्थानेधिकारींदौगुप्तंनृपभयंरुजः ॥ मंदोधिकारीखेलोहहृते पीडाकरः स्मृतः ॥ ५ ॥**

अथ चतुरो मृत्युयोगानाह-सूर्ये इति । सूर्ये जनने जन्मकाले सितेन शुक्रेण सह मूस रिफयोगे सति । तथा वर्षे अधिकारी पञ्चाधिकारिणां मध्ये अधिकारी भवति केंद्रे सति राजगदाद्भयं च राज्ञः सकाशात् तथा रोगाद्भयं स्यात् । अयमेको योगः । अथ द्वितीयः । जन्मकाले असृक्स्थाने भौमाक्रांतराशौ अधिकारिणि वर्षपंचाधिकारिणां मध्ये अधिकारिणि इंदुजे बुधे सति रुक् रोगः स्यात् । अथ तृतीयः ॥ अथवा सौम्ये बुधे अधिकारिणि सति क्रूरदृशा कुजस्य भौमस्य क्रूरदृशा चतुर्थदशमैकसप्तमदृष्ट्या दृष्टे सति असृग्दोषादिनारक्तविकारजनितदोषादिना रुक् रोगः स्यात् । अथ चतुर्थो योगः । पुनरपि तादृशे बुधे अधिकारिणि क्रूरदृष्ट्या भौमेन दृष्टे अंशुस्थिते अर्थात्कुजस्यांशुस्थिते कुजरश्मिस्थिते दग्धे सति कुजेन युद्धादिना पीडिते इत्यर्थः । तदा विदेशतः परदेशे बंधनमृती स्यातामिति बुधाः प्राहुः ॥ उक्तंच समरसिंहेन दग्धे चं रश्म्यधः स्यात्परदेशबंधनंमरणमिति ॥ ताजिकालंकारे । सौम्ये क्रूरदृशा क्षतिः कुजदृशा दग्धं च तद्रश्मिभिनिर्बंधे हननं विदेशमरणं मृत्योर्लभेन्निश्चित इति ॥ केचित्तु इनांशुस्थिते सूर्यसान्निध्येनास्तंगते सूर्यमंडलगते इत्यर्थः ॥ दग्धे पापाक्रांते कुजपदसान्निध्येन कुजयुक्त इत्यर्थः । अतएव वामनः । 'भौमयुक्ते बुधे सार्के विदेशे बंधनं मृतिः' इति । तन्न । भिन्नराशिस्थितस्यापि बुधस्यास्तंगतत्वेन सार्कत्वाभावात्समरवाक्ये सूर्यपदसांनिध्याभावेन सूर्यस्याप्रसक्त्या सूर्यरश्म्यधःस्थादित्यर्थकल्पनस्यान्याय्यत्वाच्च । नच वामनवाक्यस्य का गतिरितिवाच्यम् भौमयुक्ते बुधे इत्यस्य स्वोक्तार्थविरुद्धार्थत्वाभावेन सार्केस्याधिकोक्त्या विरोधाभावादिति ॥ ४ ॥ अथ रोगयोगावाह । भौमस्थान इति । जन्मकाले भौमस्थाने भौमो यस्मिन् राशावस्ति तस्मिन् राशौ वर्षे अधिकारिणि इंदौ चंद्रे सति गुप्तमप्रकाश्यं नृपभयं राज्ञः सकाशाद्भयं रुजो रोगाः स्युः । अयमेको योगः ॥ अथान्यः । मंदः शनैश्चरः । अधिकारी पंचाधिकारिणां मध्ये अधिकारी भूत्वा खे दशमस्थाने चेत्स्यात्तदा लोहहतेर्लोहप्रहारात्पीडाकरः स्मृतः ॥ ५ ॥

**भौमोऽष्टमे भयं वह्नेः प्रहारोवानृपाद्भयम् ॥ आरेखस्थेचतुष्पद्भ्यः पातोदुःखंरुजोसृजा ॥ ६ ॥ वित्ताष्टगेज्योधनहा यद्यब्देशोऽशुभेक्षितः ॥ मंदेघ्नेदुर्वचनापवादकालिभर्त्सनम् ॥ ७ ॥ पतितेज्ञक्रूरदृशाऽऽरेत्थशालेमृतिंवदेत् ॥ कुजहद्दास्थितेनाज्ञः सौम्यदृष्ट्याशुभं वदेत् ॥ ८ ॥**

अथाल्पमृत्युयोगावाह-भौम इति । वर्षलग्नादष्टमस्थाने भौमे सति वह्नेः सकाशात भयं प्रहारो वा शस्त्रादिना घातो वा नृपात् राज्ञः सकाशाद्भयं वा स्यात् । अयमेको योगः ॥ अथान्यः । आरे भौमे खस्थे दशमस्थानेसतिचतुष्पाद्भ्यः चतुष्पदेभ्यः पातः

पतनं दुःखम् असृजः रक्तविकारजनितरुजो रोगाः स्युः ॥ ६ ॥ अथ धननाशविवादयोगावाह–वित्ताष्टगेति । यदिअब्देशः वर्षेशः इज्यो गुरुः वित्ताष्टगः द्वितीये अष्टमस्थाने वा सन् अशुभेक्षितः पापग्रहदृष्टस्तदा धनहा धननाशकर्ता स्यात् । अयमेको योगः । अथान्यः । मंदे शनौ द्यूने सप्तमस्थाने सति दुर्वचनापवादकलिभर्त्सनं धिक्कारं प्राप्नोति ॥७॥ अथ महाल्पमृत्युयोगावाह–पतित इति । पतिते ज्ञे बुधे क्रूरदृशा चतुर्थदशमैकसप्तमदृष्ट्या आरे भौमेत्थशाले मुथशिलयोगं करोति तदा मृतिं वदेत् । अयमेको योगः । अथान्यः । तादृशे बुधे कुजहद्दास्थिते भौमहद्दायां स्थिते नाशः द्रव्यस्य स्यादित्यपरो योगः । शुभदृष्ट्या तादृशे बुधे योगद्वयेपि दृष्टश्चेत् शुभं वदेत् ॥ ८ ॥

**लग्नाधिपेनष्टदग्धेयोषिद्वादोऽशुभान्विते ॥ जन्मन्यष्टमगोजीवोनाधिकारीकलिः पृथुः ॥ ९ ॥ जयः शुक्रेक्षणादुक्तः प्रत्युत्तरवशेनतु ॥ भौमेंत्यगेधनेसूर्येवादात्क्लेशंविनिर्दिशेत् ॥ १० ॥**

अथ झकटकयोगावाह । लग्नाधिप इति ॥ लग्नाधिपे वर्षलग्नस्वामिनि नष्टदग्धे नष्टेहीनबले दग्धे अस्तंगते अशुभान्विते अशुभैः पापग्रहैरन्विते युक्ते सति योषिद्भिः अन्यस्त्रीभिः सह वादः कलहः स्यात् । अयमेको योगः । अथान्यः । जन्मनि जन्मकाले अष्टमगो अष्टमस्थाने जीवो बृहस्पतिश्चेत्स वर्षे न आधिकरिणां मध्ये अधिकारी न स्यात् । तदा पृथुर्महान्कलिः कलहः स्यात ॥ ९ ॥ अथ जयवादयोगावाह । जय इति । प्रागुक्ततादृशे गुरौशुक्रेक्षणात् शुक्रेण दृष्टे सति स्त्रीविवादे प्रत्युत्तरवशेन जय उक्तः कथितः अयमेको योगः । अथान्यः । भौमेंऽत्यगे भौमे अंत्यगे वर्षलग्नाद्द्वादशस्थाने सति धने द्वितीयस्थाने सूर्येसति तदावादात्क्लेशं विनिर्दिशेत् ॥ १० ॥

**रिपुगोत्रकलिर्भीतिः संख्ये कुजहतेऽब्दपे ॥ दग्धोजन्माङ्गपो वर्षेऽष्टमो रोगकली दिशेत् ॥ ११ ॥ सूत्यब्दयोरधिकृतो भौमस्थाने गुरुर्हतः ॥ पापैर्वादः स्फुटोप्येवं तादृशोदो शनेः पदे ॥ १२ ॥**

अथान्यौ कलिरोगयोगावाह–रिपुगइति । अब्दपे वर्षस्वामिनि कुजे हते भौमेन पीडिते सति रिपुभिः शत्रुभिर्गोत्रैः स्ववंशस्थैः सह कलिः स्यात् ॥ संख्ये संग्रामे भीतिभयं च स्यात् । अयमेको योगः । अथान्यः । जन्मांगपो जन्मकालीनलग्नस्वामिवर्षे दग्धोऽस्तंगतः सन्नष्टमोऽष्टमस्थाने चेद्भवति तदा रोगकली दिशेत् कथयेत् ॥ ११ ॥ अथ कलहयोगावाह–सूत्यब्दयोरिति । गुरुर्बृहस्पतिः । सूत्यब्दयोर्जन्मकालवर्षकालयोरधिकृतो अधिकारी भूत्वा भौमस्थाने जन्मकालिकभौमाक्रांतराशिस्थः सन् हतः पापैर्ग्रहैर्हतश्चेद् भवति तदा लोकैः सह स्फुटो वादः स्यादयमेको योगः । अथान्यः । शनेः

पदे जन्मकालिकशन्याक्रांतराशौ तादृशि जन्मकालवर्षकालयोरधिकारिणि पापग्रहैश्च हते इंदौ चंद्रे तिष्ठति सति एवमेवं फलं स्फुटः कलहः स्यात् ॥ १२ ॥

**सूत्यब्दयोरधिकृते चंद्रे बुधपदे हते ॥ क्रूरैर्विदेशगमनं वादः स्याद्विमनस्कता ॥ १३ ॥ मेषे सिंहे धनुष्यारे वृषे रंध्रेऽसितो भयम् ॥ मृतौमृतीशलग्नेशौ मृत्युदौ पापदृग्युतौ ॥ १४ ॥**

अथ विदेशगमनादियोगमाह-सूत्यब्दयोरिति । सूत्यब्दयोर्जन्मकालवर्षकालयोः अधिकृते अधिकारं प्राप्ते चंद्रे बुधपदे जन्मकालीनबुधाक्रांतराशौ स्थिते हते क्रूरैः पापग्रहैर्हते सति विदेशगमनं वादः विमनस्कता वा स्यात् ॥ १३ ॥ अथाल्पमृत्युयोगावाह-मेषइति । आरे भौमे मेषे सिंहे धनुषि वृषे रंध्रे अष्टमस्थाने सति असितः खड्गाद्भयं स्यात् ॥ अयमेको योगः । अथान्यः मृतौ अष्टमस्थाने मृतीशलग्नेशौ अष्टमस्थानस्वामिवर्षलग्नस्वामिनौ पापदृग्युतौ पापग्रहैर्दृष्टौ युतौ वा सत्यां मृत्युदौ मरणदौ भवतः ॥ १४ ॥

**यत्रर्क्षे जन्मनि कुजः सोऽब्दलग्नोपगो यदा ॥ बुधो वर्षपतिर्नष्टबलस्तत्र न शोभनम् ॥ १५ ॥ सार्केशनौ भौमयुते खाष्टस्थे वाहनाद्भयम् ॥ सार्के भौमेऽष्टमस्थेतु पतनं वाहनाद्भवेत् ॥ १६ ॥ सारेऽब्दपेऽष्टमे मृत्युश्चंद्रेंत्यारिमृतौ मृतिः ॥ उदिते मृतिसद्मेशे निर्बले जीविते मृतिः ॥ १७ ॥ पुण्यसद्मेश्वरः पुण्यसहमादष्टगो यदा ॥ सूत्यष्टमेशः पुण्यस्थो मृतिदः पापदृग्युतः ॥ १८ ॥**

अथ सामान्यवर्षयोगमाह-यत्रर्क्ष इति । जन्मनि जन्मकाले कुजो भौमः यत्रर्क्षे यस्मिन् राशौ स्यात्सराशिर्यदा अब्दलग्नोपगः वर्षलग्ने भवेत्तत्र बुधो वर्षपतिर्वर्षस्वामी सन्नष्टबलो भवेत्तदा न शोभनं शुभफलदो न स्यात् ॥ १५ ॥ अथ वाहनाद्भयपतनयोगावाह-सार्के इति । सार्के शनौ सूर्ययुक्तशनौ भौमयुते सभौमे खाष्टस्थे दशमाष्टमस्थानस्थे सति वाहनाद्भयं भवति ॥ अयमेको योगः । अथान्यः । सार्के भौमे सूर्ययुक्तभौमेऽष्टमस्थानस्थे सति वाहनात्पतनं वदेत्कथयेत् ॥ १६ ॥ अथ महामृत्युयोगावाह-सारेब्दप इति । सारेऽब्दपे आरेण भौमेन सह वर्तमाने सारे एवादृशे अब्दपे वर्षस्वामिनि अष्टमे सति मृतिर्मरणंस्यात् । तथा अंत्यारिमृतौ द्वादशषष्ठाष्टमस्थानेषु चंद्रे सति मृतिर्मरणम् । अयमेको योगः ॥ अथान्यः । मृतिसद्मेशे मृत्युसहमस्वामिनि उदिते उदयं प्राप्ते निर्बले बलरहिते सति जीविते मृतिः स्यात ॥ १७ ॥ अथान्यौ महामृत्युयोगावाह-पुण्यसद्मेश्वर इति । पुण्यसद्मेश्वरः पुण्यसहमस्वामी पुण्यसहम-

स्थानादष्टमस्थानस्थः। पापदृग्युतः पापग्रहैर्दृष्टो युक्तो वा स्यात्तदा मृतिः स्यात्। अयमेको योगः। अथान्यः। सूत्यष्टमेशः सूतौ जन्मकाले अष्टमेशः अष्टमस्थानस्वामी पुण्यस्थः। पुण्यसहमस्थानस्थः पापग्रहेण दृष्टो युतो वा स्यात्तदा मृतिर्मरणं स्यात् ॥ १८ ॥

**सूत्यष्टमगतो राशिः पुण्यसद्मनि नाथयुक् ॥ अब्दलग्नाऽष्टमर्क्षं वा चेदित्थं स्यान्मृतिस्तदा ॥ १९ ॥ पुण्यसद्माशुभाक्रांतं मृतीशोऽन्त्यारिरंध्रगः ॥ मुथहेशोऽब्दपो वापि मृत्युं तत्र विनिर्दिशेत् ॥ २० ॥**

अथान्यौ मृत्युयोगावाह—सूत्यष्टमगत इति। सूत्यष्टमगतो राशिः सूतौ जन्मकालिकलग्नादष्टमराशिर्वर्षकालीनपुण्यसद्मनि पुण्यसहमस्थानस्थो भवन्नाथयुक् स्वस्वामिना युक्तश्चेत्तदा मृत्युः स्यात्। अयमेको योगः। अथान्यः। तथा अब्दलग्नाद्वर्षलग्नादष्टमर्क्षमष्टमो राशिरित्थं पुण्यसहमस्थस्वामिना युक्तश्चेत्तदा मृत्युः स्यात् ॥१९॥ अथान्यमृत्युयोगावाह—पुण्यसद्मेति। पुण्यसद्मपुण्यसहममशुभाक्रांतं पापग्रहैर्युक्तं स्याद्यदि मृतीशः अष्टमस्थानस्वामी अंत्यारिरंध्रगः द्वादशषष्ठाष्टस्थानस्थश्चेद्भवति तदा मृत्युं वदेत् ॥ अयमेको योगः। अथान्यः। मुथहेशः मुथहास्वामी अब्दपो वा वर्षस्वामी वा तत्र तथैव पापाक्रांतः द्वादशषष्ठाष्टमस्थानस्थश्चेत्तदा मृत्युं विनिर्दिशेत् ॥२०॥

**सक्रूरे जन्मपे मृत्यौ मृतिश्चेदिंथिहार्कियुक् । भौमक्षुतेक्षणे तत्र मृत्युः स्यादात्मघाततः ॥ २१ ॥ मंदोऽष्टमे मृतीशेत्थशालान्मृत्युकरः स्मृतः ॥ शुभेत्थशालात्सर्वेऽपि योगा नाशुभदायकाः ॥ २२ ॥**

अथ महामृत्युयोगानाह—सक्रूर इति। जन्मपे जन्मलग्नस्वामिनि सक्रूरे वर्षे पापग्रहयुक्ते मृत्यौ अष्टमस्थानस्थे सति मृतिर्मरणं स्यात् ॥ चेदिंथिहा मुथहा यत्र कुत्रापि स्थिता। आर्कियुक्ता शनियुक्ता तदा मृतिः ॥ भौमक्षुतेक्षणात् भौमेन क्षुतदृष्ट्या चतुर्थदशमैकसप्तमदृष्ट्या दृष्टा सती तत्र ईदृशे योगे आत्मघाततो मृत्युः स्यात् ॥ २१ ॥ अथ महामृत्युयोगं सर्वमृत्युयोगपरिहारं चाह—मंद इति। मंदश्शनैश्चरः अष्टमे वर्षलग्नादष्टमस्थाने स्थितः ॥ मृतीशेत्थशालात् मृतीशः अष्टमभावस्वामी तेन सह मुथशिलयोगान्मृत्युकरः स्मृतः कथितः। अथैतद्योगानामपवादमाह—सर्वेपि मृत्युयोगाः शुभेत्थशालात् यद्यरिष्टकारकाणां ग्रहाणां शुभग्रहैः साकं मुथशिलयोगस्तर्हि अशुभदायका अनिष्टदायका न भवंति ॥ २२ ॥

**सूतिरंध्रपतिर्मंदोऽष्टमोऽब्दे लग्नपेन चेत् ॥ इत्थशालीक्रूरदृशा तत्कालं मृत्युदायकः ॥ २३ ॥ पुण्यसद्मनि विधुस्तनो**

तथाऽस्ते खलो मृतिरथार्थरिःफगौ ॥ मृत्युदौ खलखगावथो जनुर्वर्षवेशतनुपौ मृतौ मृतिः ॥ २४ ॥ इत्यष्टमभावः ।

अथ महामृत्युयोगमाह–सूतिरंध्रपतिरिति । सूतौ जन्मकाले रंध्रपतिः अष्टमभावस्वामी मंदः शनिः अब्दे वर्षे वर्षलग्नादष्टमस्थानस्थः सन् लग्नपेन वर्षलग्नस्वामिना चेत्क्रूरदृशा चतुर्थदशमैकसप्तमदृष्ट्या इत्थशाली मुथशिलयोगं करोति तदा तत्काले तस्मिन् समये मृत्युदायको भवति ॥ २३ ॥ २४ ॥ इति अष्टमभावविचारः ।

अथ भाग्यभावविचारः ।

भौमेऽब्दपे त्रिनवगे क्रूरायुक्ते बलान्विते ॥ गुणावहस्तदा मार्गश्चिरं कार्यं स्थिरं ततः ॥ १ ॥ त्रिधर्मस्थोऽब्दपः सूर्यः कंबूली मार्गसौख्यदः ॥ अन्यप्रेषणयान स्यात्स चेन्नाधिकृतो भवेत् ॥ २ ॥

अथ नवमभावविचारः । तत्र नवमभावे मार्गधर्मविचारस्तावद्गमनयोगमाह–भौम इति भौमेऽब्दपे भौमे वर्षस्वामिनि त्रिनवगे तृतीयगे नवमस्थाने वा क्रूरायुक्ते क्रूरैः पापग्रहैरयुक्ते योगरहिते बलान्विते बलिष्ठे सति तदा मार्गः गमनं गुणावहः लाभादिसुखकरः । चरं कार्यं त्वरया साध्यमपि कार्यं ततः तस्मात्स्थिरं विलंबसा भवति ॥ १ ॥ अथान्यदाह–त्रिधर्मस्थ इति । सूर्यः अब्दपः वर्षस्वामी भूत्वा कंबूली कंबूलयोगवान्सन् त्रिधर्मस्थः तृतीयनवमस्थानस्थस्तदा मार्गसौख्यदः स चेन्नाधिकृतः पंचाधिकारिणांमध्ये पंचाधिकारी न भवेत्तदा अन्यप्रेषणेन यानं गमनं स्यात् ॥ २ ॥

शुक्रेऽब्दपे त्रिनवगे मार्गे सौख्यं विलोमगे ॥ अस्ते वा कुगतिः सौम्ये देवयात्रा तथाविधे ॥ ३ ॥ क्रूरार्दिते कुयानं स्यात्क्रूराचेवं विचिंतयेत् । इत्थशाले लग्नधर्मपत्योर्यात्रास्त्यचिंतिता ॥ ४ ॥

अथान्यान्गमनयोगान्सार्द्धश्लोकेनाह–शुक्र इति । क्रूरार्दित इति ॥ शुक्रेऽब्दपे वर्षस्वामिनि त्रिनवगे तृतीयनवमस्थाने सति मार्गे गमनं मार्गे सौख्यं स्यात् । अथ तादृशे शुक्रे विलोमगे वक्रिणि अस्ते वा अस्तंगते वा सति कुगतिः कुत्सितगतिः कुगमनं कार्यसिद्धिर्न स्यादित्यर्थः । तथा बुधे तादृशे वर्षस्वामिनि सबले त्रिनवगे सौम्ये बुधे सति देवयात्रा देवोद्देशेन यात्रा स्यात् । इदं तीर्थयात्रादेरप्युपलक्षणम् तादृशे शुक्रे बुधे क्रूरार्दिते पापग्रहैः पीडिते युक्ते वा सति कुयानं कुत्सितगमनं स्यात् । एवमनुना प्रकारेण वर्षस्वामिनि त्रिनवगे गुरौ सति देवयात्रां विचिंतयेत्कथयेत् तस्मिन् गुरौ क्रूरार्दिते तु कुयानं स्यात् । अथ चिंतितयात्रायोगमुत्तरार्द्धेनाह–इत्थशाल इति । लग्नधर्मपत्योः वर्षलग्नस्वामिना सह नवमभावस्वामिनः इत्थशाले मुथशिलयोगे सति अचिंतिता अकस्मात् यात्रा स्यात् ॥ ३ ॥ ४ ॥

लग्नेशो धर्मपं यच्छन्स्वं महश्चिंतिताध्वदः ॥ एवं लग्नाब्दपयोर्योगे मुथहांगपयोरपि ॥ ५ ॥ गुरुस्थाने कुजे धर्मे सद्यात्रा भृत्यवित्तदा ॥ ज्ञस्थाने लग्नपो भौमो दृष्टः सद्यानसौख्यदः ॥ ६ ॥

अथ विपरीतं मुथशिलमन्यत्रातिदेशमाह—लग्नेश इति । लग्नेशो वर्षलग्नस्वामी धर्मपेन नवमभावस्वामिना मुथशिलयोगं करोति तदा चिंतितगमनम् । एवमनुना प्रकारेण लग्नाब्दपयोर्योगे वर्षलग्नस्वामी वर्षस्वामी अनयोर्योगे सति तथा मुथहास्वामी अंगपो वर्षलग्नस्वामी अनयोर्योगे सति मुथशिलं पूर्वोक्तं स्यात् ॥ ५ ॥ अथ सद्यात्रायोगावाह—गुरुस्थान इति । गुरुस्थाने जन्मकाले गुरुर्बृहस्पतिर्यस्मिन् राशावस्ति तस्मिन् राशौ वर्षकालीने कुजे भौमे धर्मे नवमस्थानगते सति सद्यात्रा समीचीना यात्रा । भृत्यः सेवकः वित्तं भृत्यद्रव्यप्राप्तिकारिका स्यात् । अयमेको योगः । अथान्यः । ज्ञस्थाने जन्मकाले बुधो यस्मिन्राशावस्ति तस्मिन्राशौ वर्षकालीने भौमे लग्नस्वामिना दृष्टः सन्सद्यानसौख्यदः स्यात् ॥ ६ ॥

स्वस्थानगो वा बलवाँल्लग्नदर्शी सुयानदः ॥ जन्माधिकारी ज्ञो मंदस्थाने क्रूरयुतो यदा ॥ ७ ॥ पंथा रिपोर्झकटकाद्गुरुरध्वेंदुजीवयोः ॥ धर्मेशनिर्नाधिकारी पंथानमशुभं वदेत् ॥ ८ ॥

अथान्यं सद्यात्रायोगं श्लोकार्द्धेनाह—स्वस्थानग इति । जन्मकाले भौमः स्वस्थानगो मेषवृश्चिकगतो वर्षेपि मेषवृश्चिकराशिगतः सन् । नवमे बलवान् स्यात् । लग्नदर्शी लग्नं पश्यति । तदा सुयानदः शुभगमनं भवेत् । अथ शुभयात्रायोगान्सार्द्धश्लोकेनाह—जन्माधिकारीति । ज्ञो बुधः जन्माधिकारीति । ज्ञो बुधः जन्माधिकारी जन्मकाल अधिकारी भूत्वा मंदस्थाने जन्मकालीनशन्याक्रांतराशिगतः सन्वर्षे नवमस्थानगतः क्रूरयुतः पापग्रहयुक्तो यदा भवेत्तदा रिपोः शत्रोर्झकटकात् कलहप्रसंगात्पंथा मार्गगमनं स्यात् । गुरुरध्वेति । इंदुजीवयोः इंदुश्चंद्रः जीवो बृहस्पतिः अमुना प्रकारेण जन्मकाले अधिकारी भूत्वा जन्मकालीनशन्याक्रांतराशिगतः सन्वर्षे नवमस्थानगतयोः पापग्रहयुतयोः सतोः शत्रुकलहाद्गुरुर्भूय अध्वा मार्गः स्यात् । धर्मे इति । वर्षे नाधिकारी पंचाधिकारी रहितः शनिर्धर्मे नवमस्थाने सन्नशुभं पंथानं वदेत्कथयेत् ॥ ७ ॥ ८ ॥

इत्थं गुरौ दूरयात्रानृपसंगस्ततो गुणः ॥
कुजेऽब्दपे नष्टबले स्वजनाद्दूरतो गतिः ॥ ९ ॥

अथ दूरयात्रायोगावाह—इत्थमिति । इत्थममुना प्रकारेण वर्षे अधिकाररहिते नवमस्थानगते गुरौ सति दूरयानं स्यात् । नृपसंगः राज्ञा सह मेलनं स्यात्ततो गुणः ततः

राज्ञः सकाशाद्विगुणः द्रव्यप्राप्तिश्च स्यात् । अयमेको योगः । अथान्यः । कुजे भौमे अब्दपे वर्षस्वामिनि नष्टबले नवमस्थानगते सति स्वजनात्स्वकीयकुटुंबवर्गाद्दूरे गतिः गमनं स्यात् ॥ ९ ॥

**द्यूनेंथिहा धर्मे इंदौ सबलेऽध्वा विदेशगः ॥ वर्षेशो बलवान्पापायुतः केंद्रेऽधिकारवान् ॥ १० ॥ अधिकारो गतिः संख्ये सेनापत्योपि वा वदेत् ॥ एवं बुधे कुजे जीवयुतेऽर्कान्निर्गते पुनः॥ ११॥ परसैन्योपरि गतिर्जयः ख्यातिसुखावहः ॥ जीवान्नवमगे भौमे शुभा यात्रा नृणां भवेत् ॥ १२ ॥ इति नवमभावविचारः ॥**

अथ प्रबलविदेशयात्रायोगं श्लोकपूर्वार्धेनाह-द्यूनेंथिहेति । द्यूनं सप्तमस्थाने इंथिहा मुथहा धर्मे इंदौ चंद्रे सबले बलिष्ठे सति विदेशगः परदेशगमनप्रयोजकः अध्वा मार्गो भवति । अथ वर्षाधीशस्य केंद्रगत्वेन विशेषफलमेतच्छ्लोकोत्तरार्द्धाग्रिमश्लोकपूर्वार्द्धाभ्यामाह-वर्षेश इति । वर्षेशो वर्षस्वामी बलवान् बलिष्ठः पापयुतः पापग्रहैर्न युतः अधिकारवान् पंचाधिकारिणां मध्ये अधिकारी भूत्वा केंद्रे सति अधिकारो गतिः प्राप्तिः स्यात्संख्ये संग्रामे सेनापत्यं वदेत् । अथान्यदाह-एवमिति । एवमुक्तप्रकारेण बुधे कुजे भौमे वा बलयुते अर्कान्निर्गते उदिते जीवयुते बृहस्पतियुते केंद्रवर्तिनि सति पुनः परसैन्योपरि गतिर्गमनं स्यात् । तत्सकाशाज्जयः ख्यातिसुखावहः स्यात् । अथोत्तरार्द्धेन विशेषमाह-जीवादिति । जीवात् गुर्वाक्रांतराशेः सकाशान्नवमगे नवमस्थाने भौमे सति नृणां मनुष्याणां यात्रा शुभा भवेत् ॥१०॥११॥१२॥ इति नवमभावविचारः ॥

अथ दशमभावविचारः ।

**सबलेऽब्दपतौ खस्थे राज्यार्थसुखकीर्तयः ॥ स्थानांतराप्तिरन्यस्मिन्केंद्रे गृहसुखाप्तयः ॥ १ ॥ इत्थं बली रविर्भूस्थः पूर्वार्जितपदाप्तिकृत् ॥ एकादशेऽस्मिन्सख्यं स्यान्नृपामात्यगणोत्तमैः ॥ २ ॥ रविस्थानेंथिहा लग्ने खे वा राज्याप्तिसौख्यदा ॥ नीचेर्कः पापसंयुक्तो भूपाद्बंधवधं दिशेत् ॥ ३ ॥**

अथ दशमभावविचारः-सबल इति । सबले बलिष्ठे अब्दपतौ वर्षस्वामिनि खस्थे दशमस्थानस्थे सति राज्यार्थसुखकीर्तयो भवंति । अयमेको योगः । अथान्यः । अन्यस्मिन्केंद्रे दशमव्यतिरिक्तस्थाने स्थानांतराप्तिः गृहसुखाप्तयश्च भवंति ॥ १ ॥ अथ स्थानविशेषेण वर्षस्वामिनः सूर्यस्य विशेषफलमाह-इत्थमिति । इत्थमनुना प्रका-

रेण वर्षस्वामी भूत्वा बली बलिष्ठो रविः सूर्यः भूस्थः चतुर्थस्थानस्थः पूर्वार्जितपदाप्तिकृत् । अस्मिन्नेतादृशे सूर्ये एकादशस्थानस्थे सति नृपामात्यगुणोत्तमैः सख्यं स्यात् ॥ २ ॥ अथ राज्यप्राप्तियोगं चाह–रविस्थानेंथिहेति । रविः स्थाने जन्मकालीनसूर्याधिष्ठितराशौ वर्षकाले इंथिहा मुथहा भवेत् लग्ने वर्षलग्ने खे दशमस्थाने वा राज्यप्राप्तिसौख्यदा स्यात् । अयमेको योगः । अथान्यः । तथा अर्कः सूर्यः नीचे नीचराशिगतः पापसंयुक्तः पापग्रहयुक्तः सन् दशमस्थानगतश्चेत्तदा भूपाद्राज्ञः सकाशाद्बंधः बंधनं हननं च दिशेत्कथयेत् ॥ ३ ॥

**सिंहे रविर्बली खस्थः स्थानलाभो नृपाश्रयः ॥ स्थानांतराधिकाराप्तिरिंदुरारपदे बली ॥ ४ ॥ खेशलग्नेशवर्षेशेत्थशालो राज्यदायकः ॥ वर्षेशे राज्यसहमेऽर्केत्थशाले महानृपः ॥ ५ ॥ शनिस्थाने कुजः पश्यन्मुथहां पापकर्मतः ॥ नृपभीतिं वित्तनाशं दद्याद्दशमगो यदि ॥ ६ ॥**

अथान्यौ स्थानप्राप्तियोगावाह–सिंह इति । सिंहे रविः मूलवाक्यानुरोधाज्जन्मनीति पदमत्राध्याहार्यम् । जन्मकाले सिंहराशिगतः सूर्यो वर्षकाले बली बलिष्ठः सन् खस्थः दशमस्थानस्थश्चेत्तदा स्थानं पदं तस्य लाभो नृपाश्रयः राजाश्रयश्च स्यात् । अयमेको योगः । आथान्यः । एवं जन्मकाले आरपदे भौमाक्रांतराशौ वर्षे तद्राशिगतः । इंदुश्चंद्रः बली चेत्तदा स्थानांतरे अधिकारप्राप्तिः ॥४ ॥ अथान्यौ राज्यप्राप्तियोगावाह–खेश इति खेशः वर्षकालीनदशमस्थानस्वामी लग्नेशः वर्षलग्नस्वामी वर्षेशः एतेषां इत्थशाले परस्परमुथशिलयोगे सति राज्यदायकः राज्यप्रदो भवति । अयमेको योगः । अथान्यः । वर्षेशे वर्षस्वामिनि राज्यसहमे राज्यसहमस्थानगते सति अर्केत्थशाले सूर्येण सह मुथशिलयोगे सति महानृपो राजा स्यात् ॥ ५ ॥ अथान्यं द्रव्यनाशयोगमाह–शनिस्थान इति । जन्मकाले शनिस्थाने शन्याक्रान्तराशौ वर्षकाले कुजो भौमः दशमगः सन्यदि मुथहां पश्यति तदा पापकर्मतः नृपभीतिवित्तनाशं च दद्यात् ॥ ६ ॥

**इंदृशे त्रिनवस्थेऽस्मिन्दग्धनष्टेऽघसंचयः ॥ मंदोऽब्दपोऽधिकारी त्रिधर्मगो धर्मवृद्धिदः ॥ ७ ॥ तस्मिन्दग्धे विनष्टे च पापकृद्धर्मनिंदकः ॥ इंदृशीदृक्फलं सूर्ये गुरावित्थं नयार्थभाक् ॥ ८ ॥**

अथ पापपुण्यवृद्धियोगावाह–इंदृशे जन्मकालीनशन्याक्रांतराशौ वर्षे त्रिनवस्थे तृतीयनवमस्थानस्थेऽस्मिन्भौमे दग्धेऽस्तंगते नष्टे हीनबले अघसंचयः अघस्य पापस्य संचयो वृद्धिः स्यात् । अयमेको योगः । अथान्यः । मंदः शनैश्चरः अब्दपः, वर्षस्वामी

आधिकारी पूंचाधिकारिणां मध्ये अधिकारी भूत्वा त्रिधर्मगः तृतीयनवमस्थानस्थश्चेत्स्यात्तदा धर्मवृद्धिदो भवति ॥ ७ ॥ अथ दुष्टयोगौ शुभयोगं चाह–तस्मिन्निति । तस्मिन्वर्षस्वामिनि शनौ अधिकारिणि दग्धे वा विनष्टे वा सति । पापकृद्धर्मनिंदकश्च भवेत् । अयमेको योगः । अथान्यः । ईदृशि सूर्ये वर्षस्वामिन्यधिकारिणि त्रिनवगे दग्धे वा विनष्टे वा सति ईदृक्फलं पापकृद्धर्मनिंदकश्च पुरुषः स्यात् । अथ शुभयोगः । गुराविथमिति । इत्थममुना प्रकारेण वर्षस्वामिन्यधिकारिणि तृतीयनवमगे दग्धे वा विनष्टे वा गुरौ सति नयार्थभाक् नयेन नीतिमार्गेणार्थं द्रव्यं प्राप्नोति ॥ ८ ॥

**तत्रस्था मुथहा पुण्यागमं पापं खलाश्रयात् ॥ सूतौ खेशे रवौ खस्थे वर्षे मुथशिलं यदि ॥ ९ ॥ लग्नाधिपेन राज्याप्तिरुक्ता वीर्यानुमानतः ॥ धर्मकर्माधिपौ दग्धौ धर्मराज्यक्षयावहौ ॥ १० ॥ इति राज्यभावविचारः ॥**

अथ मुथहासंबंधिशुभाशुभफलं श्लोकपूर्वार्द्धेनाह–तत्रस्थेति । तत्रस्था तृतीयनवमस्थानस्था मुथहा पुण्यागमनं करोति । अथ राज्यप्राप्तियोगमाह–सूताविति । सूतौ जन्मकाले खेशे दशमभावस्वामिनि रवौ सूर्ये वर्षे वर्षकाले खस्थे दशमस्थाने स्थितः सन् यदि लग्नाधिपेन वर्षलग्नस्वामिना सह मुथशिलं मुथशिलयोगो भवेत्तदा वीर्यानुमानतः सूर्यस्य विश्वात्मकबलानुमानेन राज्याप्तिः राज्यप्राप्तिरुक्ता कथिता । अथ धर्मराज्यनाशयोगौ श्लोकस्योत्तरार्द्धेनाह–धर्मेति । धर्मकर्माधिपौ नवमभावस्वामी दशमभावस्वामी एतावुभौ दग्धौ स्यातां तदा धर्मराज्यक्षयावहौ नाशकर्तारौ भवतः । नवमभावस्वामी दग्धबलश्चेत्तदा धर्मनाशः । दशमभावाधीशश्चेद्दग्धबलस्तदा राज्यनाशः ॥ ९ ॥ १० ॥

अथाऽऽयभावविचारः ।

**अब्दपे ज्ञेऽर्थगे लाभो वाणिज्याच्छुभदृग्युते ॥**
**सेंथिहेऽस्मिँल्लग्नगते लाभः पठनलेखनात् ॥ १ ॥**

अथायभावविचारः ॥ तत्र लाभयोगमाह–अब्दपे ज्ञ इति ॥ अब्दपे वर्षस्वामिनि ज्ञे बुधेऽर्थगे धनभावगे शुभदृग्युते शुभग्रहैर्दृष्टे युक्ते सति वाणिज्याल्लाभः स्यात् । अयमेको योगः । अथान्यः । अस्मिन्बुधे वर्षस्वामिनि शुभग्रहैर्दृष्टे युक्ते सेंथिहे इंथिहायुक्ते लग्नगते वर्षकालीनलग्नगते सति पठनलेखनाल्लाभः ॥ १ ॥

**अस्मिन्षष्ठाष्टांत्यगते सक्रूरे नीचकर्मकृत् ॥ क्रूरेक्षणेन वा लाभोऽस्तंगते लिखनादितः ॥ २ ॥ जीवेऽब्दपे क्रूरहते लग्ने हानिर्भयं नृपात् ॥ अस्मिन्नधिकृते द्यूने व्यवहाराद्धनाप्तयः ॥ ३ ॥**

अथाशुभं फलमाह—अस्मिन्निति । अस्मिन् बुधे वर्षाधीशे षष्ठाष्टान्त्यगते षष्ठाष्टमद्वादशस्थानगते सक्रूरे पापग्रहयुक्ते सति नीचकर्मकृत् पुरुषः स्यात् । तादृशो बुधो वर्षस्वामी सन् षष्ठाष्टांत्यगे क्रूरेक्षणे पापग्रहैर्दृष्टे सति लाभो नास्तीति वाच्यम् ॥ वा अस्तंगते सति लिखनादितः लेखनतः लाभो नास्ति ॥ २ ॥ अथाशुभशुभयोगावाह—जीव इति । जीवे गुरौ अब्दपे वर्षस्वामिनि क्रूरहते पापग्रहपीडिते लग्ने वर्षलग्ने सति हानिर्द्रव्यनाशः नृपात् राज्ञः सकाशात् भयं च स्यात् । अयमेको योगः । अथान्यः । अस्मिन्गुरौ अधिकृते पंचाधिकारिणां मध्ये अधिकारी सन् द्यूने सप्तमस्थाने सति व्यवहाराद्वणिक्कर्मणा धनाप्तयः द्रव्याप्तिः स्यात् ॥ ३ ॥

**लग्नायेशेत्थशाले स्याल्लाभः स्वजनगौरवम् ॥ सर्वेपि लाभे वित्ताप्त्यै सबला निर्बला न तु ॥ ४ ॥ सवीर्यो ज्ञः समुथहो लग्नेऽर्थसहमे शुभाः ॥ तदा निखातद्रव्यस्य लाभः पापदृशा न तु ॥ ५ ॥ इत्यायभावविचारः ॥**

अथ प्राप्तियोगावाह—लग्नायेशेत्थशाल इति । वर्षलग्नस्वामी आयेशः लाभभावस्वामी अनयोरित्थशाले परस्परमुथशिलयोगे सति लाभः स्यात् स्वजनेषु गौरवं च स्यात् । अयमेको योगः । अथान्यः । सर्वेपि सर्वग्रहाः सबलाः संतः लाभे एकादशस्थाने सन्तो वित्ताप्त्यै द्रव्यप्राप्त्यै भवंति । यदि लाभस्थाः सर्वे ग्रहाः निर्बलास्तदा द्रव्यप्राप्त्यै न भवंति ॥ ४ ॥ अथ निखातद्रव्यप्राप्तियोगमाह—सवीर्य इति । ज्ञो बुधः सवीर्यः बलयुक्तः पुनः कीदृशः समुथहा मुथहायुक्तो लग्ने वर्षलग्ने स्यात् । बलिष्ठो मुथहा सहितो बुधो वर्षलग्ने स्यादित्यर्थः । अर्थसहमे द्रव्यसहमेपि शुभाः शुभग्रहा लग्ने चेत्स्युस्तदा निखातद्रव्यस्य गर्तस्थापितद्रव्यस्य लाभो भवेत् । पापदृशा एतादृशा लग्नस्थयोगे पापग्रहैर्दृष्टे सति निखातद्रव्यस्य लाभो न स्यान्नास्त्येव ॥ ५ ॥ इत्यायभावविचारः ॥

अथ व्ययभावविचारः ।

**लग्नाब्दपौ हतबलौ व्ययषण्मृतिस्थौ यद्राशिगौ तदनुसारिफलं विचिंत्यम् ॥ षष्ठेऽब्दपे भृगुसुतेऽथ विनष्टवीर्ये दृष्टे खलैः क्षुतदृशा द्विपदर्क्षसंस्थे ॥ १ ॥ भृत्यक्षतिस्तुरगहा चतुरंघ्रिभस्थेऽन्यस्मिन्नपीदमुदितं फलमब्दनाथे । खस्थे कुजे शशियुते तुरगादिनाशः स्याद्व्याकुलत्वमशुभोपहते व्यये वा ॥ २ ॥**

अथ व्ययभावविचारः । अथ सार्द्धश्लोकेन व्ययविचारमाह—लग्नाब्दपाविति । लग्नाब्दपौ वर्षलग्नस्वामिवर्षस्वामिनौ हतबलौ निर्बलौ व्ययषण्मृतिस्थौ द्वादशषष्ठाष्टम-

स्थानगतौ संतौ यद्राशिगौ यस्मिन्राशावास्थितौ स्याताम् । तदा तदनुसारिफलं तस्मिन्स्थाने यादृशं फलमुक्तं तादृशं फलं विचिंत्यं ज्ञातव्यम् । यथा वर्षस्वामी षष्ठगतः स चतुष्पदराशिगतश्चेत्तदा चतुष्पदनाशो वाच्यः ॥ एवमष्टमद्वादशस्थयोरपीत्यर्थः । अथ षष्ठस्थानस्थितस्य शुक्रस्य विशेषमाह–शुक्र इति । भृगुसुते शुक्रेऽब्दपे वर्षस्वामिनि षष्ठे षष्ठस्थाने । विनष्टवीर्ये हीनबले खलैः पापग्रहैः क्षुतदृशा चतुर्थदशमैकसप्तमदृष्ट्या दृष्टे द्विपदर्क्षसंस्थे नृराशिसंस्थे सति भृत्यक्षतिः सेवकानां नाशः स्यात् । तादृशे शुक्रे चतुरं घ्रिभस्थे चतुष्पदराशिगते सति तुरगहा अश्वहानिकरः स्यात् । अश्व इत्युपलक्षणम् । अन्यचतुष्पदहानिरपि द्रष्टव्या । एवमन्यस्मिन्नपि अब्दनाथे वर्षस्वामिनि षष्ठाष्टमद्वादशस्थाने पुनरपि तद्राशिगते सति इदमुदितं पुर्वोक्तभृत्यनाशादि फलं वाच्यम् । अथ वर्षस्वामी भौमस्तस्य स्थानविशेषे फलं श्लोकस्योत्तरार्द्धेनाह–खस्थ इति । वर्षस्वामिनि कुजे भौमे शशियुते चंद्रयुक्ते खस्थे दशमस्थानस्थे सति अश्वादीनां नाशः मनसि व्याकुलत्वं च स्यात् । अथ तादृशे चंद्रयुक्ते वर्षस्वामिनि भौमे अशुभोपहते पापग्रहहते व्यये द्वादशस्थानस्थे सति अश्वादीनां नाशादिफलं वाच्यम् ॥ अत्र शशियुते इति पाठः स्वबुद्ध्या ग्रंथकर्त्रा कृतः । वस्तुतस्तु खस्थे कुजे शनियुत इति पाठः पूर्वग्रंथानुरोधात् । उक्तंच समरसिंहेन "शनियुजि कुजे गगनगे बह्वाकुल्यं तुरंगनाशश्च " इति ॥ ताजिकालंकारे । " भौमे मंदयुते स्थिते च दशमे स्यादाकुलत्वं मनस्यश्वानां क्षतिरेव " इति ॥ तथाच खस्थे कुजे शनियुते तुरगादिनाशः आकुलत्वं च । अयमेको योगः । अथान्यः । कुजे अशुभोपहते व्यये सतीत्यर्थः । अथवा पापाक्रांते व्ययभवने सति तुरगादिनाश इत्यादि ॥ १ ॥ २ ॥

**षष्ठे रवौ खलहते चतुरंघ्रिभस्थे भृत्यैः समं कलिरथाष्टमरिःफगेऽपि ॥ मंदेऽब्दपे बलयुते रिपुरिःफसंस्थे भूवासनद्रुमजलाशयनिर्मितिश्च ॥ ३ ॥ स्वर्क्षोच्चगे कर्मणि सूर्यपुत्रे नैरुज्यमर्थाधिगमश्च जीवे ॥ सूर्ये नृपाद्बाहुबलात्कुजेऽर्थो बुधे भिषग्ज्योतिषकाव्यशिल्पैः ॥ ४ ॥**

अथ सूर्यशन्योरप्यब्दपयोरशुभस्थानगतयोः फलमाह–षष्ठे इति । रवौ सूर्ये वर्षस्वामिनि षष्ठे षष्ठस्थाने खलहते पापग्रहाक्रांते चतुरंघ्रिभस्थे चतुष्पदराशिसंस्थे अथाष्टमरिःफगेपि अष्टमस्थानगतेऽथवा द्वादशस्थानगते सति भृत्यैः सेवकैः सह कलिः कलहः स्यात् ॥ अथ मंदे शनौ अब्दपे वर्षस्वामिनि बलयुते रिपुरिःफस्थे षष्ठद्वादशस्थानसंस्थे सति भूवासनमुज्जटभूमौ ग्रामनिर्मितिः तस्मिन्भूमौ द्रुमाणां जलाशयानां कूपतडागानां निर्मितिश्च स्यात् ॥ ३ ॥ अथ स्थानांतरगतानां ग्रहाणां

फलमाह–स्वर्क्षोच्चग इति । सूर्यपुत्रे शनौ वर्षस्वामिनि स्वर्क्षे स्वराशौ मकरकुंभसंस्थे स्वोच्चे तुलाराशौ स्थिते कर्मणि दशमस्थाने सति नैरुज्यं शरीरे आरोग्यमर्थाधिगमः द्रव्यप्राप्तिश्च स्यात् । एतादृशे जीवे गुरौ वर्षस्वामिनि धनुर्मीनकर्कस्थे दशमगते सति आरोग्यं द्रव्यप्राप्तिश्च स्यात् तादृशे सूर्ये सिंहमेषस्थे सति दशमस्थे राज्ञो नृपात्सकाशादर्थप्राप्तिः । एतादृशे कुजे भौमे वर्षस्वामिनि मेषवृश्चिकमकरगते सति दशमस्थे स्वबाहुबलात् द्रव्यप्राप्तिः स्यात् । एतादृशे बुधे वर्षस्वामिनि मिथुनकन्यास्थे सति दशमस्थे भिषग्ज्योतिषकाव्याशिल्पैः कृत्वा द्रव्यप्राप्तिः स्यात् ॥ ४ ॥

**मंदेऽब्दपे गतबले नैराश्यं दौःस्थ्यमादिशेत् ॥ सूर्येऽब्देशे शशिस्थाने मंदेऽब्दजनुषोर्हते ॥ ५ ॥ सर्वकर्मसु वैकल्यं वक्रेऽस्ते च तथा पुनः ॥ कर्मकर्मेशसहमनाथाः शनियुतेक्षिताः ॥ ६ ॥**

अथ निर्बलशनेः फलं श्लोकपूर्वार्धेनाह–मंदइति ॥ मंदे शनैश्चरे अब्दपे वर्षस्वामिनि गतबले निबले दशमस्थिते सति नैराश्यमाशाराहित्यं दौःस्थ्यं चंचलचित्तत्वमादिशेत् कथयेत् । अथ वर्षेशसूर्यस्य फलमाह श्लोकोत्तरार्द्धोत्तरश्लोकपूर्वार्द्धाभ्याम् । सूर्येऽब्देशे वर्षस्वामिनि सति मंदे शनैश्चरे अब्दजनुषोः अब्दे वर्षकाले जनुषि जन्मकालीनराशिस्थाने चद्राक्रांतराशिगते तथा हते वर्षकालजन्मकालयोर्हते पापग्रहैः पीडिते सति सर्वकर्मसु वैकल्यं ज्ञानादिराहित्यं स्यात् । तथा तादृशे पुनः शनौ वक्रे अस्तंगते वा सति सर्वकर्मसु वैकल्यं स्यात् । अथ कर्मभावकर्मेश्वरकर्मसहमेश्वराणां शनियुतिदृष्टिभ्यामशुभफलमुत्तरार्द्धेनाह–कर्मेति । कर्मभावकर्मेशकर्मभावस्वामिसहमनाथाः कर्मसहमाधीशाः शनियुतेक्षिताः शनिना युक्तदृष्टाश्चेद्भवंति तदा सर्वकर्मसु वैकल्यं स्यात् ॥ ५ ॥ ६ ॥

**षडष्टव्ययगेऽब्देशे कर्मेशे च बलोज्झिते ॥ सूतावब्दे च न शुभं तत्राऽब्दे मृतिपे तथा ॥ ७ ॥ यत्र भावे शुभफलो दुष्टो वा जन्मनि ग्रहः ॥ वर्षे तद्भावगस्तादृक्तत्फलं यच्छति ध्रुवम् ॥८॥**

अथ दुष्टस्थानस्थस्य वर्षेशस्य फलमाह–षडष्टव्ययग इति । अब्देशे वर्षस्वामिनि षडष्टव्ययगेऽष्टमगते द्वादशगते वा सति । तथा कर्मेशे च दशमभावस्वामिनि सूतावब्दे च सूतौ जन्मकाले अब्द वर्षकाले च बलोज्झिते निर्बले न शुभं स्यात् ॥ तत्राब्दे तस्मिन्वर्षे मृतिपेष्टमभावस्वामिनि तथा तद्वत् षष्ठाष्टमद्वादशगते निर्बले वा सति नैव शुभं स्यात ॥ ७॥ अथ वर्षे सामान्यतः शुभाशुभफलमाह–यत्र भाव इति । जन्मनि

जन्मकाले यत्र यस्मिन्भावे शुभफलदो दुष्टफलदो वा यः कश्चिद्ग्रहोऽस्ति स ग्रहो वर्षेऽपि तद्भावगः सन् तादृशस्तत्फलं शुभाशुभफलं ध्रुवं निश्चितं यच्छति ददाति ॥८॥

**ये जन्मनि स्युः सबला विवीर्या वर्षे शुभं प्राक् चरमे त्वनिष्टम्॥**
**दद्युर्विलोमं विपरीततायां तुल्यं फलं स्यादुभयत्र साम्ये ॥ ९ ॥**
**इति व्ययभावविचारः ॥**

अथ वर्षे ग्रहाणां फलपाककालमाह—ये जन्मनि स्युरिति । जन्मनि जन्मकाले ये ग्रहाः सबलाः बलिष्ठाः स्युस्ते ग्रहाः वर्षे विवीर्या निर्बलाः स्युस्तदा ते ग्रहाः प्राग्वर्षस्य पूर्वार्द्धे सुखं दद्युः । चरमे वर्षस्योत्तरार्द्धे त्वनिष्टमशुभफलं दद्युः । अथ विपरीततायामुक्तवैपरीत्ये विलोमं विपरीतं फलं दद्युः । तद्यथा ये ग्रहाः जन्मकाले निर्बलाः वर्षकाले सबलास्ते वर्षपूर्वार्द्धे अनिष्टं फलं दद्युः । वर्षोत्तरार्द्धे सुखं दद्युः । उभयत्र साम्ये तुल्यं फल स्यात् । तद्यथा । ये ग्रहा जन्मकाले वर्षकालेपि बलिष्ठास्ते संपूर्णे वर्षे शुभं फलं दद्युः । ये ग्रहा जन्मकाले वर्षकाले च निर्बलास्ते संपूर्णे वर्षे दुःखमेव दद्युः । ग्रहजनितं सर्वं फल तत्तद्ग्रहदशायामंतर्दशायां वाच्यमिति तत्त्वम् ॥ ९ ॥
इति व्ययभावविचारः ॥

**श्रीगर्गान्वयभूषणो गणितविच्चिंतामणिस्तत्सुतोऽनंतोऽनंतमतिर्व्यधात्खलमतीध्वस्त्यै जनुःपद्धतिम् ॥ तत्सूनुः खलु नीलकंठविबुधो विद्वच्छिवानुज्ञया सत्तुष्टयै व्यदधाद्विवेचनमिदं भावेषु सत्ताजिकात् ॥ १० ॥**

**इति ताजिकनीलकंठ्यां द्वादशभावविचारः ॥ २ ॥**

अथाधिकारोपसंहारमाह—श्रीगर्गेति । स्पष्टम् ॥ १० ॥

इति दिवाकरविरचितवर्षतंत्रटीकायां द्वादशभावविचाराध्यायो द्वितीयः ॥ २ ॥

---

अथ दशाक्रमविचारः ।

**स्पष्टान्सलग्नान्खचरान्विधाय राशीन्विनात्यल्पलवं तु पूर्वम् ॥**
**निवेश्य तस्मादधिकाधिकांश्च क्रमादयं स्यात्तु दशाक्रमोऽब्दे १॥**
**न्यूनं विशोध्याधिकतः क्रमेणांशाद्यं विशुद्धांशकशेषकैक्यम् ॥**
**सर्वाधिकांशोन्मितमेव तत्स्यादनेन वर्षस्य मितिस्तु भाज्या२॥**
**शुद्धांशकांस्तान्गुणयेदनेन लब्धध्रुवांकेन भवेद्दशायाः ॥ मानं**
**दिन द्यं खलु तद्ग्रहस्य फलान्यथासां निगदेत्तु शास्त्रात् ॥ ३ ॥**

शुद्धांशसाम्ये बलिनो दशाद्या बलस्य साम्येऽल्पगतेस्तु पूर्वा ॥ साम्ये विलग्नस्थ खगेन चिंत्या बलाधिकालग्नपतेर्विचिंत्या ॥ ४ ॥ हेममुक्ताफलद्रव्यलाभमारोग्यमुत्तमम् ॥ कुरुते स्वामिसन्मानं दशा लग्नस्य शोभना ॥ ५ ॥ लाभं दृष्टेन वित्तस्य मानहीनस्य सेवनम् ॥ मनसो विकृतिं कुर्याद्दशा लग्नस्य मध्यमा ॥ ६ ॥ विदेशगमनं क्लेशबुद्धिनाश कदव्ययम् ॥ मानहानिं करोत्येवं कष्टा लग्नदशाफलम् ॥ ७ ॥ क्रूरलग्नदशा मध्या सौख्यं स्वल्पं धनव्ययम् ॥ अंगपीडां त्वपुष्टिं च कुरुते मृत्युविग्रहम् ॥ ८ ॥

अथ दशाध्यायो व्याख्यायते । तत्र दशासाधन पूर्वमेवोक्तम् । अथ दशाफलान्याह तत्र पूर्णमध्याधमनष्टबलनां ग्रहाणा फलपद्यानि स्पष्टार्थानि ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

दशा रवेः पूर्णबलस्य लाभ गजाश्वहेमांबररत्नपूर्णम् ॥ मानोदयं भूमिपतेर्ददाति यशश्च देवाद्विजपूजनादेः ॥ ९ ॥ दशारवेर्मध्यबलस्य पूर्वमिदं फलं मध्यममेव दत्ते ॥ ग्रामाधिकारव्यवसायधैर्यैः कुलानुमानाच्च सुखादिलाभः ॥ १० ॥ दशा रवेरल्पबलस्य पुंसां ददाति दुःखं स्वजनैर्विवादात्॥ मतिभ्रमं पित्तरुज स्वतेजो विनाशनं धर्षणमप्यरिभ्यः ॥ ११ ॥ दशारवेर्नष्टबलस्य पुंसां नृपाद्रिपोर्वा भयमर्थनाशम् ॥ स्त्रीपुत्रमित्रादिजनैर्विवादं करोति बुद्धिभ्रममामयं च ॥ १२ ॥

॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

लग्नाद्रविः षट्त्रिदशायसंस्थो निंद्योपि दत्ते शुभमर्द्धमेव ॥ मध्यत्स्मूनः शुभतां च मध्यो यातीत्थमत्यंतशुभः शुभः स्यात् ॥ १३ ॥ अथ चंद्रदशाफलम् ॥ इंदोर्दशापूर्णबलस्य दत्ते शुक्लांबरस्त्रङ्मणिमौक्तिकाद्यम् ॥ स्त्रीसंगमं राज्यसुखं च भूमिलाभं यशःकांतिबलाभिवृद्धिम् ॥ १४ ॥ इंदोर्दशामध्यबलस्य सर्वमिदं

फलं मध्यममेव दत्ते ॥ वाणिज्यमित्रांबरगेहसौख्यं धर्मे मतिं कर्षणतोऽन्नलाभम् ॥ १५ ॥ इंदोर्दशास्वल्पबलस्य दत्ते कफामयं कांतिविनाशमाहुः॥मित्रादिवैरं जननं कुमार्या धर्मार्थनाशं सुखमल्पमत्र ॥ १६ ॥ इंदोर्दशा नष्टबलस्य लोकापवादभीतिं धनधर्मनाशम् ॥ शीतामयं स्त्रीसुतमित्रवैरं दौःस्थ्यं च दत्ते विरसान्नभुक्तिम् ॥ १७ ॥

अथ सूर्यस्थानविशेषावस्थित्या फलतारतम्येन दशाफलमाह–लग्नादिति । लग्नाद्रविः सूर्यः निंद्योपि नष्टबलोपि त्रिदशायसंस्थः षष्ठतृतीयदशमैकादशस्थानसंस्थः सन्नर्द्धमेव शुभफलं स्वदशायां दत्ते ददातीत्यर्थः । एवं षट्त्रिदशायसंस्थो रविरूनः हीनबलोपि सन्मध्यत्वं मध्यमफलदः स्यात् । एवमुपचयस्थानगतो मध्यो मध्यबलोपि शुभतां च शुभफलं ददाति । इत्थममुना प्रकारेणोपचयस्थानगः शुभः पूर्णबलः अत्यंतशुभः पूर्णबलः अत्यंतं शुभः स्यात् । एतत्स्थानरहितो रविः अन्यस्मिन् स्थाने यथोक्तफलदः स्यात् । एवं सर्वत्र व्याख्या ॥ १३ ॥ १४ ॥ १५ ॥ ॥ १६ ॥ १७ ॥

षष्ठाष्टमांत्येतरराशिसंस्थो निंद्योपि दत्तेऽर्द्धसुखं दशायाम् ॥ मध्यत्वमूनः शुभतां च मध्यो यातीत्थमिंदुः सुशुभः शुभः स्यात् ॥ १८ ॥ अथ भौमदशाफलम् ॥ दशापतिः पूर्णबलो महीजः सेनापतित्वं तनुते नराणाम् ॥ जयं रणे विद्रुमहेमरत्नवस्त्रादिलाभं प्रियसाहसत्वम् ॥ १९ ॥ दशापतिर्मध्यबलो महीजः कुलानुमानेन धनं ददाति ॥ राजाधिकारोप्यथ तत्परत्वं तेजस्विता कांतिबलाभिवृद्धिम् ॥ २० ॥ दशापतिः स्वल्पबलो महीजो ददाति पित्तोष्णरुजां शरीरे ॥ रिपोर्भयं बंधनमास्यतोऽसृक्स्रवं च वैरं स्वजनैश्च शश्वत् ॥ २१ ॥ दशापतिर्नष्टबलो महीजो विवादमुग्रं जनयेद्व्रणं वा ॥ चोराद्भयं रक्तरुजं ज्वरं च विपत्तिमन्यस्वहृतिं च खर्जूम् ॥ २२ ॥ त्रिषडायगतो भौमो नष्टवीर्यः शुभार्द्धदः ॥ मध्यो हीनः शुभो मध्यः शुभोऽत्यंतं शुभावहः ॥ २३ ॥ अथ बुधदशाफलम् ॥ दशापतिः

पूर्णबलो बुधश्चेद्यशोऽभिवृद्धिं गणितात्सुशिल्पात् ॥ तनोति सेवां सफलां नृपादेर्दूत्यं च वैदूष्यगणोदयं च ॥ २४ ॥ दशापतिर्मध्यबलो बुधश्चेद्गुरोः सुहृद्भ्यो लिपिकाव्यशिल्पैः ॥ धनाप्तिदायी सुतमित्रबंधुसमागमान्मध्यममेव सौख्यम् ॥ २५ ॥ दशापतौ स्वल्पबले बुधे स्यान्मानस्य नाशः स्वजनापवादः ॥ अकार्यकोपस्खलनाद्यनिष्टं धनव्ययं रोगभयं च विंद्यात् ॥ ॥ २६ ॥ दशापतौ हीनबले बुधे स्यात्स्वबुद्धिदोषो वधबंधभीतिः ॥ दूरे गतिर्वातकफामयार्तिर्निखातवित्तस्य च नापि लाभः ॥ २७ ॥ षडष्टांत्येतरर्क्षस्थो नष्टो ज्ञोऽर्द्धशुभप्रदः ॥ मध्यो हीनः शुभो मध्यः शुभोऽत्यंतं शुभावहः ॥ २८ ॥ अथ गुरुदशाफलम् ॥ गुरोर्दशापूर्णबलस्य दत्ते मानोदयं राजसुहृद्गुरुभ्यः ॥ कीर्त्यर्थलाभोपचयं सुखानि राज्यं सुताप्तिं रिपुरोगनाशम् ॥ २९ ॥

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ ॥ २८ ॥ २९ ॥

गुरोर्दशामध्यबलस्य धर्मं मतिं साक्षित्वं नृपमंत्रिवर्गैः ॥ तनोति मानार्थसुखाभिलाभं सिद्धिं सदुत्साहबलातिरेकाम् ॥ ३० ॥ दशा गुरोरल्पबलस्य दत्ते रोगं दरिद्रत्वमथारिभीतिम् ॥ कर्णामयं धर्मधनप्रणाशं वैराग्यमर्थं च गुणं न किंचित् ॥ ३१ ॥ गुरोर्दशा नष्टबलस्य पुंसां ददाति दुःखानि रुजं कफार्तिम् ॥ कलत्रपुत्रस्वजनारिभीतिं धर्मार्थनाशं तनुपीडनं च ॥ ३२ ॥ षडष्टारिःफेतरगो गुरुर्निंद्योऽर्द्धसत्फलः ॥ मध्यो हीनः शुभो मध्यः शुभोऽत्यंतं शुभावहः ॥ ३३ ॥ अथ शुक्रदशाफलम् ॥ दशा भृगोः पूर्णबलस्य सौख्यं स्रग्गंधहेमांबरकामिनीभ्यः ॥ हयादिलाभः सुतकीर्तितोषानेरुज्यगांधर्वरतिः पदाप्तिः ॥ ३४ ॥ दशा भृगोर्मध्यबलस्य दत्ते वाणिज्यतोर्था-

गमनं कृपेश्च ॥ मिष्टान्नपानांबरभोगलाभं मित्रांश्च योषित्सुतसौख्यलाभम् ॥ ३५ ॥ दशा भृगोरल्पबलस्य दत्ते मतिभ्रमं ज्ञानयशोऽर्थनाशम् ॥ कदन्नभोज्यं व्यसनामयार्तिं स्त्रीपक्षवैरं कलिमप्यरिभ्यः ॥ ३६ ॥ दशा भृगोर्नष्टबलस्य दत्ते विदेशयानं स्वजनैर्विरोधम् ॥ पुत्रार्थभार्याविपदो रुजश्च मतिभ्रमोऽपि व्यसनं महच्च ॥३७॥ षडष्टरिःफेतरगो भृगुर्निंद्योऽर्द्धसत्फलः ॥ मध्यो हीनः शुभो मध्यः शुभोऽत्यंतं शुभावहः ॥ ३८ ॥

अथ शनिदशाफलम् ॥ दशा शनेः पूर्णबलस्य दत्ते नवीनवेश्मांबरभूमिसौख्यम् ॥ आरामतोयाश्रयनिर्मितिश्च म्लेच्छातिसंगान्नृपतेर्धनाप्तिः ॥ ३९ ॥ दशा शनेर्मध्यबलस्य दत्ते खरोष्ट्रपाखंडजतो धनाप्तिम् ॥ वृद्धांगनासंगमदुर्गरक्षाधिकारचिंताविरसान्नभोगः ॥ ४० ॥ दशा शनेः स्वल्पबलस्य पुंसां तनोति दुःखं रिपुतस्करेभ्यः ॥ दारिद्र्यमात्मीयजनापवादं रोगं च शीतानिलकोपमुग्रम् ॥ ४१ ॥ दशा शनेर्नष्टबलस्य पुंसामनेकधातुव्यसनानि दत्ते ॥ स्त्रीपुत्रमित्रस्वजनैर्विरोधं रोगाभिवृद्धिं मरणेन तुल्यम् ॥ ४२ ॥ त्रिषष्ठलाभोपगतो मन्दो निंद्योऽर्द्धसत्फलः ॥ मध्यो हीनः शुभो मध्यः शुभोऽत्यंतं शुभावहः ॥ ४३ ॥

॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥
॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

दशा तनोः स्वामिबलेन तुल्यं फलं ददातीत्यपरो विशेषः ॥
चरे शुभा मध्यफलाऽधमा च द्विमूर्तिभे स्याद्विपरीतमूह्यम् ॥ ४४॥

अथ लग्नदशाफलं वक्तुकामस्तावल्लग्नस्वामिफलानि चरादिलग्नगतद्रेष्काणवशेन फलतारतम्यं श्लोकाभ्यामाह–दशा तनोरिति । तनालग्नस्य दशा स्वामिबलन तुल्यं स्वस्वामिनो यादृशं बलं तादृशं फलं ददाति । अथ लग्नदशायामपरो विशेषः । चरे चरलग्ने सति प्रथमे द्रेष्काणे यदि तदा शुभा शुभफलदा दशा स्यात् । यदि द्वितीयद्रेष्काणे

लग्नं तदा मध्यफलदा दशा स्यात् ॥ यदि तृतीयद्रेष्काणे लग्नं तदा अधमफलदा दशा स्यात् द्विमूर्तिभे द्विस्वभावलग्ने अस्माच्चरलग्नाद्विपरीतमूह्यम् । तद्यथा । द्विस्वभावराशौ लग्नं प्रथमद्रेष्काणे दशा अधमफलदा द्वितीयद्रेष्काणे तदा दशा मध्यफलदा । तृतीयद्रेष्काणे तदा शुभफलदा स्यादित्यर्थः ॥ ४४ ॥

**अनिष्टमिष्टं च समास्थिरर्क्षे क्रमाद्दृकाणैः फलमुक्तमाद्यैः ॥ सत्स्वामियोगेक्षणतः शुभं स्यात्पापेक्षणात्कष्टफलं च वाच्यम् ॥ ४५॥ दशामानं समामानं प्रकल्प्योक्तेन वर्त्मना॥ अंतर्दशाः साधनीयाः प्राक्पात्यांशवशेन तु ॥४६॥ आदावंतर्दशा पाकपतेस्तत्क्रमतोऽपराः ॥ शुभेक्षणान्वयान्मैत्र्या तत्फलं परिचिंतयेत् ॥ ४७॥ चंद्रारजीवाः सौम्येज्यशुक्रा रविविधू तथा ॥ मंदेज्यशुक्राः सूर्येंदुभौमाः सौम्येज्यसूर्यजाः ॥ ४८ ॥ जीवज्ञशुक्राः सूर्यादेः शुभा अंतर्दशा इमाः ॥ अन्येषामशुभा ज्ञेया इति वामनभाषितम् ॥ ४९॥ इति ग्रहदशाफलानि ।**

आनष्टमात । स्थिरर्क्षे स्थिरराशौ लग्नगते यदि प्रथमद्रेष्काणस्तदानिष्टमनिष्टफलदा दशा । यदि द्वितीयो द्रेष्काणस्तदा इष्टमुत्तमफलदशा । यदि तृतीयद्रेष्काणस्तदा सममध्यमफलदा दशेत्यर्थः । क्रमादाद्यैः पूर्वाचार्यैर्द्रेष्काणैर्द्रेष्काणवशाल्लग्नदशायाः फलमुक्तम् । अथापवादमाह—सत्स्वामीति । तल्लग्नं सत् शुभग्रहः स्वामिना च योगेक्षणतः युतमीक्षितं चेत्स्यात्तदा अशुभफलमपि शुभ स्यात् शुभं चेच्छुभतरं स्यात । यदि तल्लग्नं पापेक्षणात् पापग्रहैः स्वामिव्यतिरिक्तैर्दृष्टं युतं वा चेत्स्यात्तदा कष्टफलं वाच्यम् । अत्र चतुर्विधग्रहबलवशाद्दशाफलं वाच्यम् । तद्यथा पंचदशाविंशोपकाधिको ग्रहो विंशत्यंशावधिपूर्णबलः दशाविंशोपकाधिको ग्रहः पंचदशाविंशोपकावधि मध्यबलः पंचविंशोपकाधिको दशावधि अधमबलः पंचविंशोपकादूने नष्टबल इति । उक्तं च वामनेन "पूर्णमध्याधमान्नष्टान्ग्रहर्क्षान्वा दशाफलम् । तत्क्रमेणैव वक्ष्यामि प्रत्येकं च चतुर्विधम् " ॥ इति ॥ इति दशाफलानि ॥ ग्रहदशास्वंतर्दशासाधनं पूर्वमेवोक्तम् ॥ ४५ ॥ ४६ ॥ ॥ ४७ ॥ ४८ ॥ ४९ ॥ इति दिवाकरविरचिते दशांतर्दशाध्यायः ॥

अथ भावस्थग्रहफलान्युच्यंते ॥

**सूर्यारमंदास्तनुगा ज्वरार्तिं धनक्षयं पापयुगिंदुरित्थम् ॥ शुभान्वितः पुष्टतनुश्च सौख्यं जीवज्ञशुक्रा धनधान्यलाभम् ॥५० ॥**

चंद्रज्ञजीवास्फुजितो धनस्था धनागमं राज्यसुखं च दद्युः ॥ पापा धनस्था धनहानिदाः स्युर्नृपाद्भयं कार्यविघातमार्किः ॥ ॥ ५१ ॥ दुश्चिक्यगाः खलखगा धनधर्मराज्यलाभप्रदा बलयुताः क्षितिलाभदाः स्युः ॥ सौम्याः सुखार्थसुतमानयशोविलासलाभाय हर्षमतुलं किल तत्र चंद्रः ॥ ५२ ॥ चंद्रः सुखे खलयुतो व्यसनं रुजं च पुष्टः शुभेन सहितः सुखमातनोति ॥ सौम्यः सुखं विविधमत्र खलाः सुखार्थनाशं रुजं व्यसनमप्यतुलं भयं च ॥५३॥ पुत्रवित्तसुखसंचयं शुभाः पुत्रगा भृगुसुतोऽतिहर्षदाः । पुत्रवित्तधनबुद्धिहारकास्तस्करामयकलिप्रदाः खलाः ॥५४॥ षष्ठे पापा वित्तलाभं सुखाप्तिं भौमोऽत्यंतं हर्षदः शत्रुनाशम् ॥ सौम्या भीतिं वित्तनाशं कलिं च चंद्रो रोगं पापयुक्तः करोति ॥ ५५ ॥ सपापः शशी सप्तमो व्याधिभीतिं खलाः स्त्रीविनाशं कलिं भृत्यभीतिम् ॥ शुभाः कुर्वते वित्तलाभं सुखाप्तिं यशोराजमानोदयं बंधुसौख्यम् ॥ ५६ ॥ चंद्रोऽष्टमे निधनदः खलखेटयुक्तः पापाश्च तत्र मृतितुल्यफलं च विंद्यात् ॥ सौम्याः स्वधातुवशतो रुजमर्थहानिं मानक्षयं मुथशिले शुभजे शुभं च ॥ ५७ ॥

अथ सकलभावस्य ग्रहफलान्याह-तत्र तावल्लग्नस्थितसकलग्रहफलमाह-सूर्यारेति । सूर्यभौमशनयः प्रत्येकं सामुदायिकं वा तनुगा लग्नगता यदि स्युस्तदा ज्वरार्तिं ज्वरपीडां धनक्षयं च कुर्युः इत्थमसुना प्रकारेण पापयुगिंदुः पापग्रहयुक्त इंदुश्चेत्तथापि ज्वरार्तिं धनक्षयं च कुर्यात् यदा चंद्रः पुष्टतनुः वर्द्धमानतनुः शुभान्वितः शुभग्रहैर्युक्तश्च लग्नगः सत्सौख्यं करोति तथा जीवज्ञशुक्रा लग्नगाश्चेत्स्युस्तदा धनराज्यलाभं कुर्युः ॥ ५० ॥ अथ धनभावस्थितसकलग्रहफलमाह-चंद्रेति स्पष्टम् । अष्टमभावफलपर्यंतं स्पष्टम् ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

तपसि सोदरभीः पशुपीडनं खलखगेतिमुदो रविरत्र चेत् ॥ शुभखगा धनधर्मविवृद्धिदाः खलखगेपि शुभान्यपरे जगुः ॥ ५८ ॥

अथ नवमभावगतसकलग्रहफलमाह—तपसीति । तपसि नवमस्थाने खलगे, पापग्रहे सति सोदरभीः पशुपीडनं च स्यात् अत्र चेद्रविः सूर्यस्तदा मुदः हर्षयुक्तो भवति । खेस्तत्र हर्षस्थानस्थितत्वात् । शुभखगाः शुभग्रहा नवमस्था धनधर्मविवृद्धिदाः खलखगोपि नवमस्थानस्थे सति शुभा शुभफलदा इत्यपरे जगुः ॥ ५८ ॥

गगनगो रविजः पशुवित्तहा रविकुजौ व्यवसायपराक्रमौ ॥ धनसुखानि परे च धनात्मजाऽवनिपसंगसुखानि वितन्वते ॥५९ ॥ लाभे धनोपचयसौख्ययशोभिवृद्धिं सन्मित्रसंगबलपुष्टिकराश्च सर्वे ॥ क्रूरा बलेन रहिताः सुतवित्तबुद्धिनाशं शुभास्तु तनुतां स्वफलस्य कुर्युः ॥ ६० ॥ पापव्यये नेत्ररुजं विवादं हानिं धनानां नृपतस्करादेः ॥ सौम्या व्ययं सद्व्यवहारमार्गे कुर्युः शनिर्हर्षविवृद्धिमत्र ॥ ६१ ॥ इति भावस्थग्रहफलानि । श्रीगर्गान्वयभूषणो गणितविच्चिंतामणिस्तत्सुतोऽनंतोऽनंतमतिर्व्यधात्खलमतध्वस्त्यै जनुः पद्धतिम् ॥ तत्सूनुः खलु नीलकंठविबुधो विद्वच्छिवानुज्ञया भावस्थग्रहपाकदौःस्थ्यसुखताद्युक्तं फलं सोऽभ्यधात् ॥ ६२ ॥

इति ताजिकनीलकण्ठ्यां भावफलाध्यायः ॥ ३ ॥

द्वादशपर्यंतं स्पष्टम् ॥ हर्षविवृद्धिमत्रेति द्वादशशनेर्हर्षस्थानत्वात् ॥ ५९ ॥ ६० ॥ ॥ ६१ ॥ ६२ ॥ इति वर्षतंत्रटीकायां भावफलाध्यायः ॥

---

अथ मासप्रवेशफलानि ॥

मासार्कस्य तदासन्नपंक्तिस्थेन सहांतरम् ॥ कलीकृत्यार्कगत्याप्तं दिनाद्येन युतोनितम् ॥ १ ॥ तत्पंक्तिस्थं वारपूर्वं मासार्केऽधिकहीनके ॥ तद्वाराद्ये मासवेशो द्युवेशोप्येवमेव हि ॥ २ ॥ मासप्रवेशकाले ज्ञो ग्रहान्भावांश्च साधयेत् ॥ तत्र मासतनोर्नाथो मुंथेशाजन्मपस्तथा ॥ ३ ॥ त्रिराशिपो दिननिशोरवींदुभपतिस्तथा ॥ अब्दप्रवेशलग्नेश एषां वीर्याधिकस्तनुम् ॥ ४॥ पश्यन्मासपतिर्ज्ञेयस्ततो वाच्यं शुभाशुभम् ॥ अपरे मासलग्नेशं मासाधिपतिं

मूचिरे ॥ ५ ॥ दिनेशं दिनलग्नेशं तथा प्रोचुर्विचक्षणाः ॥ मासवत्रेशयोर्वाच्यं फलं वर्षेशवद्बुधैः ॥ ६ ॥

अथ मासदिनप्रवेशफलाध्यायः । तत्र संज्ञातंत्रोक्तप्रकारेण मासदिनप्रवेशकालौ निर्णीय अधिकारिनिर्णयं श्लोकषट्केनाह-मासेति षड्भिः । मासप्रवेशकाले पूर्वोक्तप्रकारेण ग्रहान्भावांश्च तन्वादिद्वादशभावांश्च साधयेत् । तदनंतरं मासपतिनिर्णयार्थं षडधिकारिणो विचार्यास्तद्यथा । तत्र एकः मासतनोर्नाथो मासलग्नस्वामी । द्वितीयः मुथहेशो वर्षकालीनमुथहा सार्द्धद्वयांशगणितगतमाससंख्यया युता सा मासमुथहा ज्ञेया तस्याः स्वामी । तथा तृतीयो जन्मलग्नस्वामी । चतुर्थस्त्रिराशिपः त्रिराशिकस्वामी तथा दिननिशोरवींदुभपतिः पंचमः दिवसे मासप्रवेशश्चेत्तदा सूर्याक्रांतराशिस्वामी रात्रौ मासप्रवेशश्चेत्तदा चंद्राक्रांतराशिस्वामी । तथा वर्षप्रवेशलग्नस्वामी षष्ठः । एषां षण्णामधिकारिणां मध्ये वीर्याधिकः बलाधिकः सन् तनुं लग्नं पश्यन्मासपतिः स एव मासस्वामी ज्ञेयः ॥ लग्नमनीक्षमाणेत्यादि पूर्ववत् ज्ञेयम् । इतः मासपतेः सकाशाच्छुभाशुभफलं वाच्यम् । अत्र अपरे आचार्याः मासलग्नस्वामिनमेव मासस्वामीत्यूचिरे उक्तवंतः ॥ तेषां मते पूर्वोक्ताधिकारिणः संत्येव । तथा अन्येषां मते दिनलग्नेशं दिनप्रवेशलग्नस्वामिनं दिनेशं विचक्षणाः दैवज्ञाः प्रोचुः ॥ अत्रापि अधिकारिनिर्णयो नास्त्येव । एवं निर्णीतयोर्मासदिनप्रवेशस्वामिनोः फलं वर्षेशवद्बुधैर्वाच्यम् ॥ १ ॥ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

लग्नांशाधिपतिर्विलग्नपनवांशेशेन मैत्रीदृशा दृष्टो वा सहितः शशी च यदि तौ मैत्रीदृशालोकते ॥ तस्मिन्मासि तनौ सुखं बहुविधं नैरुज्यमित्थं फलं तावद्यावदिमे स्युरित्थमथतान्संचार्यवाच्यं फलम् ॥ ७ ॥ तौ चेच्छत्रुदृशा मिथश्च शशिना दृष्टौ मनोदुःखदौ रोगाधिक्यकरौ च कश्चिदनयोर्नीचोस्तगो वा यदि ॥ कष्टात्सौख्यमिह द्वयं यदि पुनर्नीचास्तगं स्यान्मृतिः सूत्यब्दोद्भवारिष्टतो मृतिसमं स्यादन्यथेत्यूचिरे ॥ ८ ॥

अथ मासफलमाह-लग्नांशाधिपतिरिति । लग्नांशाधिपतिः मासलग्नगतनवांशस्वामी विलग्नपनवांशेशेन मासलग्नस्वामी ग्रहाक्रांतराशितन्नवांशस्वामिना शुभग्रहेण पापग्रहेण वा मैत्रीदृशा मित्रदृशा तृतीयैकादशनवमपंचमदृष्ट्या दृष्टो वा युक्तश्चेत्स्यात् च पुनः शशी चंद्रः यदि तौ मासलग्नस्वामिमासलग्ननवांशस्वामिनौ मैत्रीदृशा मित्रदृष्ट्या

आलोकते पश्यति तदा तस्मिन्मासि तनौ शरीरे नानाविधं बहुप्रकारं सुखं, नीरोगता च स्यात् । इत्थममुना प्रकारेण मासफलं तावत्कालपर्यंतं स्यात् यावदिमे ग्रहाः लग्ननवांशस्वामिलग्नेश्वरांशस्वामिनौ चंद्रश्च इत्थमेवंप्रकारकाः स्युः ॥ अयमर्थः ॥ एषत्रयाणां प्रत्यहं गच्छतां यावत्तद्राशिसंचारस्तावत्कालपर्यंतं शुभफलं वाच्यम् ॥ ७ ॥ अथानिष्टफलमाह—तौ चेच्छत्रुदृशेति । तौ लग्नांशनाथलग्नेश्वरांशनाथौ चेत् मिथः परस्परं शत्रुदृशा चतुर्थदशमैकसप्तमदृष्ट्या दृष्टौ पुनस्तादृशौ शशिना चंद्रेणापि शत्रुदृष्ट्या दृष्टौ संतौ मनोदुःखदौ मानसदुःखकरौ रोगाधिक्यकरौ च स्याताम् ॥ अनंयोर्लग्नांशनाथलग्नेश्वरांशनाथयोर्मध्ये यः कश्चिन्नीचो नीचराशिगतोऽस्तंगतो वा यदि स्यात्तदा कष्टात्सौख्यं कष्टं प्राप्य पश्चात्सौख्यदः स्यात् इह यदि द्वयं तौ द्वावपि पुनः नीचास्तगौ नीचगामिनौ अस्तंगतौ अथवा एकः नीचगः अपरः अस्तंगतो वा तदा मृतिर्मरणं स्यात्सूतौ जन्मकाले । अब्दे वर्षकाले च रिष्टयोगोत्पत्तिः स्यात् ॥ अन्यथा जन्मकालवर्षकालयोरिष्टयोगाभावस्तदा मृतिसमं कष्टं स्यादित्यूचिरे उक्तवंतः ॥ ८ ॥

**भावांशाधिपतिः स्वभावपनवांशेशेन मैत्रीदृशा दृष्टो वा सहितः शशी च यदि तौ मैत्रीदृशालोकते ॥ तद्भावोत्थसुखं विलोक्यमथतद्व्यत्यासतः कीर्तितं नीचास्तादिफलं च लग्नवदिदं विद्भिरूह्यं धिया ॥ ९ ॥ लग्नेशमासेशसमेश्वरांशनाथा यदंशाधिपमित्रदृष्ट्या ॥ दृष्टा युता वा शनिना च तत्तद्भावोत्थसौख्याय न चेदनिष्टम् ॥ १० ॥**

अथ मासलग्नसंबंधि शुभाशुभफलमुक्त्वा इदानीं धनभवनादि द्वादशांतेषु भावेषु तादृशमेव शुभाशुभफलमाह—भावांशाधिपतिरिति । भावांशाधिपतिः मासलग्ने यद्भावविचारः क्रियते तद्भावनवांशस्वामी स्वभावपनवांशेशेन तद्भावस्वामिनो नवांशस्वामिना मैत्रीदृशा मित्रदृष्ट्या दृष्टो वा सहितो युक्तो वा भवेत्तत्र शशी चंद्रोपि यदि तौ द्वौ भावनवांशस्वामि भावस्वामिनवांशस्वामिनौ मित्रदृष्ट्यालोकते पश्यति तदा तद्भावोत्थसुखं तस्मिन्मासि भवति । अथ तद्व्यत्यासतः विलोममिति । तद्यथा । यदा तौ द्वौ ग्रहौ शत्रुदृष्ट्या दृष्टौ युक्तौ वा भवतस्तौ चेच्चंद्रोपि शत्रुदृष्ट्या पश्यति । तदा विलोमं विपरीतं तद्भावसंबंधि कष्टं तस्मिन्मासि कीर्तितं कथितम् । इदं नीचास्तादिफलं च लग्नवद्धिया बुद्ध्या विद्भिरूह्यं ज्ञातव्यम् । तद्यथा । तयोर्द्वयोर्मध्ये एको नीचगः अस्तगो वा भवेत्तदा तद्भावसंबंधिदुःखमनुभूय पश्चात्सुखं प्राप्नोति । यदा तु द्वावपि नीचगावस्तगौ वा तदा तस्मिन्मासि तद्भावोत्थदुःखप्राप्तिरेव स्यात् ॥ ९ ॥ अथ प्रकारांतरेण तद्भावसौख्य-

माह-लग्नेशेति । । लग्नेशो वर्षलग्नस्वामी मासेशः मासस्वामी । समेश्वरो वर्षस्वामी अंशनाथः मासलग्नस्यांशस्वामी एते चत्वारो यद्यस्य यस्य भावस्यांशाधिपनवांशस्वामिना स्वामिभ्यां स्वामी वा मित्रदृष्ट्या दृष्टो युतो वा तथैते पुनः शशिना चंद्रेण मित्रदृष्ट्या दृष्टा युक्ता वा चेत्स्युस्तद्भावोत्थसौख्याय तस्य भावस्य धनसहजादेः सौख्यं स्यात । न चेदनिष्टमिति अनिष्टं भवति ॥ १० ॥

निर्बला व्ययषष्ठाष्टांशपाः सत्फलदायकाः ॥
अन्ये सवीर्याः शुभदा व्यत्यये व्यत्ययः स्मृतः ॥ ११॥
लग्नेशमासेशसमेशमुंथाधीशाः षडष्टोपगताः सपापाः ॥
दृष्टाः खलैःशत्रुदृशात्रमासे व्याध्यादिविड्डिड्भयदुःखदाःस्युः १२

अथ केवललग्ननवांशवशादेव तत्तद्भावजशुभाशुभफलमाह-निर्बला इति । एषां व्ययषष्ठाष्टांशपाः व्ययभावषष्ठभावाष्टमभावानामनिष्टानामंशपाः नवांशस्वामिनश्चेन्निर्बलाः स्युस्तदा सत्फलदायकाः तद्भावेभ्यः शुभफलदायकाः स्मृताः । अन्ये उर्वरितभावानां नवांशस्वामिनः सवीर्या बलिष्ठाश्चेत्स्युस्तदा तत्तद्भावेभ्यः शुभदाः शुभफलदातारः स्युः । व्यत्यये व्यत्यय इति । यदा व्यत्ययेन षष्ठाष्टमभावनवांशस्वामिनः सबलाश्चेत्स्युस्तदा दुष्टफलदातारः स्युः ॥ तथा अन्यभावनवांशस्वामिनश्चेन्निर्बलाः स्युस्तदा दुष्टफलदातार इत्यर्थः ॥ ११ ॥ अथाधिग्रहाणा विरुद्धस्थानावस्थित्यानिष्टफलमाह-लग्नेशेति । लग्नेशः वर्षलग्नस्वामी मासेशः मासस्वामी समेशो वर्षस्वामी मुंथाधीशो मुंथास्वामी एते चत्वारः षडष्टोपगताः षष्ठाष्टमस्थानस्थिताः संतः सपापाः पापग्रहयुक्ताः खलैः पापग्रहैः शत्रुदृशा चतुर्थदशमैकसप्तमदृष्ट्या दृष्टा अत्र अस्मिन्मासे व्याधिविड्भयदुःखं व्याधिशत्रूद्भवभयदुःखदाः स्युः ॥ १२ ॥

केंद्रत्रिकोणायगतास्तु लग्नमासाब्दपा वीर्ययुता नराणाम् ॥
नैरुज्यशत्रुक्षयराज्यलाभमानोदयात्यद्भुतकीर्तिदाः स्युः ॥ १३॥
इंथिहा लग्नपो राशियों बली तत्र हद्दपाः ॥
दशेशाः स्वांशतुल्याहैरित्युक्तं कैश्चिदागमात् ॥ १४ ॥

अथैषामेव अधिकारिग्रहाणां विहितस्थानावस्थित्या शुभाशुभफलमाह-केंद्रत्रिकोणेति । वर्षलग्नेशमासेशवर्षेश्वराः बलिनः केंद्रत्रिकोणायगताः केंद्राणि लग्नचतुर्थसप्तमदशमस्थानानि त्रिकोणं नवमं पंचममायमेकादशमेतदन्यतमस्थानास्थिताः क्रमेणान्वयः सर्वेषां शुभस्थानानां साधारण्यात् शेषं स्पष्टम् ॥ १३ ॥ अथ मतांतरमाह-इंथिहालग्नयोरिति । इंथिहा मासमुंथहालग्नपोर्मासलग्नपोर्मध्ये बली राशिः तत्र तस्मिन्

राशौ ये हद्दांशस्वामिनः ते स्वांशतुल्यैर्दिनैर्दशास्वामिनो भवंति । पाठक्रमेण एवमागमात् मूलशास्त्रात् कैश्चिदुक्तम् ॥ १४ ॥

**रवींद्वोरसमावेशान्नैतद्युक्तं परे जगुः ॥ दशांतरदशाछेदे फलमाब्दं तु युज्यते ॥ १५ ॥ दिनप्रवेशकालेऽपि ग्रहान्भावांश्च साधयेत् ॥ चन्द्रलग्नांशकाभ्यां तु फलं तत्र वदेद्बुधः ॥ १६ ॥**

अथान्यैरेतद्दूषितमित्याह–रवींद्वोरिति । परे आचार्याः एतत् पूर्वमतं सूर्यचंद्रयोः असमावेशात्संबंधाभावात् । युक्तं सत् न जगुः नेत्याहुः । अथ मासदशांतर्दशयोः फलमाह–दशांतर्दशाच्छेद इति । दशांतर्दशायां वर्षदशांतर्दशाविभागरीत्या कृतविभागे वर्षोक्तं दशाफलं वक्तुं युक्तं भवति ॥ १५ ॥ अथ दिनेशफलमाह–दिनप्रवेशेति । दिनप्रवेशसमयेपि मासप्रवेशकाले । च समुच्चयार्थः । खेदान् सूर्यादिग्रहान् लग्नादिद्वादशांशाधिभावान् साधयेत् कुर्यात् ॥ तत्र दिनप्रवेशे चंद्रलग्नयोर्नवांशाभ्यां बुधः पंडितः फलं शुभाशुभं कथयेत् ॥ १६ ॥

**चतुष्कमिंथिहेशादिदिनमासाब्दलग्नपाः ॥ एषांबलीतनुंपश्यन्दिनेशःपरिकीर्तितः॥ १७॥ त्रिकोणकेंद्रायगताः शुभाश्चेचंद्रात्तनोर्वा बलिनः खलास्तु ॥ त्र्यायगास्तत्र दिने सुखानि विलासमानार्थयशोयुतानि ॥ १८ ॥ षडष्टरिःफोपगता दिनाब्दमासेन्थिहेशाः खलखेटयुक्ताः ॥ गदप्रदा मानयशोहराश्च केन्द्रात्रिकोणायगताः सुखाप्त्यै ॥ १९ ॥**

अथ दिनस्वामिनिर्णयमाह–चतुष्कमिति । इंथिहेशादिचतुष्कं मुथहेशजन्मलग्नेशत्रैराशिकेशादिनप्रवेशेशादि नात्रांश इति । दिनमासाब्दलग्नपाः दिनलग्नेशमासलग्नेशवर्षलग्नेशा इति त्रयः इत्येतेषां सप्तानां मध्ये यो बली दिनलग्नं पश्येत्स दिनस्वामी बुधैरुक्तः ॥ १७ ॥ १८ ॥ १९ ॥

**लग्नांशकः सौम्यखगैः समेतो दृष्टोपि वा मित्रदृशेंदुनापि ॥ नैरुज्यराज्यादिशरीरपुष्टिर्मासोक्तिवद्दुःखमतोऽन्यथात्वे ॥ २० ॥ यद्दंशकः सौम्ययुतेक्षितो वा स्निग्धेक्षणाद्भावजसौख्यकृत्सः ॥ दुःखप्रदः प्रोक्तवदन्यथात्वे सर्वेषु भावेष्वियमेव रीतिः ॥ २१ ॥ षष्ठांशकः सौम्ययुतो रोगदः पापयुक्छुभः ॥ व्ययांशे शुभयुग्दृष्टे सद्व्ययः पापतस्त्ववसत् ॥ २२ ॥**

अथ दिने ग्रहाणां शुभाशुभफलमाह-लग्नांशक इति । लग्नांशकः दिनलग्नांशराशिः सौम्यखगैः शुभग्रहैः समेतो युक्तोऽथवा दृष्टो मित्रदृशा तृतीयैकादशनवमपंचमदृष्ट्या चंद्रेणापि युक्तस्तदृष्ट्या दृष्टस्तदा नैरुज्येत्यादि स्पष्टम् अतः अस्मात्कारणात् अन्यथात्वे मासोक्तिवत् चेत्तौ शत्रुदृशेति मासोक्तरीत्या वैपरीत्ये दुःखं स्यात् ॥ २० ॥ अथोक्तरीतिभावफलार्थमतिदिशति-यदंशक इति ।, यदंशकः यस्य भावस्य नवांशराशिः शुभग्रहैर्युक्तः स्नेहदृष्ट्या दृष्टो वा स भावांशस्तद्भावजनितसौख्यकृत्स्यात् । अन्यथात्वे वैपरीत्ये प्रोक्तवत् पूर्वोक्तरीत्या दुःखदः स्यात् । इयं रीतिः सर्वेषु भावेषु ज्ञेया ॥२१॥ अथ षष्ठद्वादशभावयोर्विशेषमाह-षष्टांशक इति । षष्ठांशकः षष्ठभावस्य नवांशराशिः सौम्ययुक्तः शुभग्रहयुक्तः रोगदः रोगप्रदः स्यात् । पापयुक्पापग्रहयुक्तः शुभः शुभफलदः । व्ययांशे व्ययभावनवांशराशौ शुभदृग्दृष्टे शुभदृष्ट्या तृतीयैकादशपंचमनवमभस्थानदृष्ट्या दृष्टस्तदा सद्व्ययः भवेत् ॥ पापतः पापग्रहयुक्तदृष्टः असत् असन्मार्गे व्ययः स्यात् ॥ २२ ॥

जायांशः सौम्ययुग्दृष्टः स्वस्त्रीसौख्यविलासकृत् ॥ पापैर्गृहकलिर्दुःखं पापांतःस्थे मृतिं वदेत् ॥२३॥ शुभमध्यस्थिते द्यंशे बहुलंकामिनीसुखम् ॥ स्वस्यां रतिर्गुरावन्यखगेन्यासु रतिं वदेत्२४॥

जायांश इति ॥ जायांशः जायाभावस्य अंशकः शुभयुग्दृष्टः तदा स्त्रीविलासादिसौख्यं स्यात् ॥ पापैः दृक्दृष्टः गृहकलिर्दुःखं स्यात् ॥ पापांतःस्थे पापग्रहमध्यवर्ती चेत्तदा मृतिं वदेत् ॥ २३ ॥ अथान्यदाह-शुभमध्यस्थिते द्यंश इति । सप्तमभावनवांशराशिः शुभग्रहमध्यस्थितः बहुलं कामिनीसुखं स्यात् ॥ द्यंशस्थिते गुरौ स्वस्यां स्वकीयकामिन्यां रतिं प्राप्तिं वदेत् ॥ अन्यखगे द्यंशस्थे अन्यासु परकीयकामिनीषु रतिं वदेत् ॥ २४ ॥

मृत्यंशे मृत्युगे सौम्यैर्युग्दृष्टे मरणं रणे॥ मिश्रैर्मिश्रं खलैः सौख्यं वर्षलग्नानुसारतः॥२५॥ द्विर्द्वादशे खला हानिं व्यये सौम्याः शुभं व्ययम् ॥ कर्तरीपापजा रोगं करोति शुभजा शुभम् ॥ २६ ॥ लग्नेऽष्टमे वा क्षीणेंदुर्मृत्युदः पापदृग्युतः ॥ रोगो वा ग्रहणं वापि रिपुतः शत्रुभीरपि ॥२७॥ चंद्रे सभौमे निधनारिसंस्थे नृणां भयं शस्त्रकृतं रिपोर्वा ॥ पापैः सुखस्थैः पतनं गजाश्वयानात्तनौ स्याद्बहुला च पीडा ॥ २८ ॥

अथाष्टमभावफलमाह—मृत्यंश इति । मृत्यंशे अष्टमभावनवांशराशिः मृत्युगैः सौम्यैः दिनप्रवेशलग्ने अष्टमस्थानस्थितैः शुभग्रहैर्युग्दृष्टे रणे मरणं भवेत् ॥ मिश्रैः शुभपापग्रहमिश्रितैर्युग्दृष्टं मिश्रं मिश्रितं फलं वदेत् । खलैः पापग्रहैर्युग्दृष्टे सौख्यं स्यात् । वर्षलग्नानुसारतः ॥ २५ ॥ अथ कर्त्तरीयोगफलमाह—द्विर्द्वादश इति । द्विर्द्वादशे दिनप्रवेशलग्नाद्द्वितीयद्वादशस्थाने खलाः पापग्रहास्तदा हानिं द्रव्यादिनाशः । व्यये द्वादशस्थाने सौम्याः शुभग्रहास्तदा शुभव्ययं सद्व्ययमित्यर्थः । पापजा पापग्रहजनिता कर्तरी रोगं करोति । शुभजा शुभग्रहजनिता कर्तरी शुभं शुभफलदा स्यात् ॥ २६ ॥ अथ चंद्रकृदनिष्टफलमाह—लग्नइति ॥ लग्ने अष्टमस्थाने वा क्षीणेंदुः पापदृग्युतः पापग्रहदृष्टियुक्तः मृत्युदः । अन्यत्स्पष्टम् ॥ २७ ॥ अथान्यदाह । चंद्रे सभौम इति । स्पष्टम् ॥ २८ ॥

**शुभा द्यूने विजयदा द्यूतादर्थसुखावहाः ॥ नवमे धर्मभाग्यार्थराजगौरवकीर्तिताः ॥ २९ ॥ दिनप्रवेशेऽस्ति विधुरवस्थायां तु यादृशि ॥ तदवस्थातुल्यमसौ फलं दत्ते न संशयः ॥ ३० ॥ विहाय राशिं चंद्रस्य भागा द्विघ्नाः शरोद्धृताः ॥ लब्धं गता अवस्थाः स्युर्भोग्यायाः फलमादिशेत् ॥ ३१ ॥**

अथ शुभफलमाह—शुभा द्यून इति । शुभाः शुभग्रहाः द्यूने सप्तमस्थाने सति द्यूनात् जयदा जयप्रदाः । अर्थे द्वितीये स्थाने सुखावहाः नवमे नवमस्थाने। धर्मेत्यादिस्पष्टम् २९॥ अथ दिनप्रवेशे चंद्रावस्थामाह—दिनप्रवेशेऽस्तीति ॥ दिनप्रवेशे यादृशि अवस्थायां विधुश्चंद्रः अस्ति तदवस्थातुल्यं फलमसौ दत्ते ददाति न संशयः संदेहो नास्तीत्यर्थः ॥ ३०॥ अथावस्थानयनमाह—विहाय राशिं चंद्रस्येति चंद्रस्य राशिं विहाय त्यक्त्वा शेषभागा द्विघ्नाः द्विगुणाः कार्याः शरोद्धृताः पंचभिर्भक्ताः लब्धाः प्राप्ता गता अवस्थाः स्युः या भोग्या एष्या तस्याः फलमादिशेत्कथयेत् ॥ ३१ ॥

**प्रवासः प्रवासोपगे रात्रिनाथेऽर्थनाशस्तु नष्टोपगे मृत्युभीतिः ॥ मृतावस्थिते स्याज्जयायां जयस्तु विलासस्तु हास्योपगे कामिनीभिः ॥ ३२ ॥ रतौ स्याद्रतिः क्रीडिता सौख्यदात्री प्रसुप्तापि निद्रां कलिं देहपीडाम् ॥ भयं तापहानी सुखं स्यात्तु भुक्त्वा ज्वरांकंपितासु स्थितासु क्रमेण ॥ ३३ ॥**

अथ श्लोकद्वयेन फलमाह—प्रवास इति । प्रवासावस्थायां गते रात्रिनाथे चंद्रे प्रवासः स्यात् ॥ नष्टोपगे नष्टावस्थायामर्थनाशः द्रव्यनाशः । मृतावस्थायां मृत्युभीतिः

स्यात् ॥ जय्यायामवस्थायां जयः । हास्योपगे हास्यावस्थायां कामिनीभिर्विलासः रतौ रत्यवस्थायां रतिः विषयसौख्यं स्यात् । क्रीडितावस्था सौख्यदात्री प्रसुप्ता प्रसुप्तावस्था निद्रां कलिं कलहमपि कुरुते । भुक्तावस्था देहपीडाम् । ज्वरावस्था भयम् । कंपितावस्था तापहानी । आसु स्थितासु स्थितावस्थाऽसुखं सुखं क्रमेण स्यादित्यन्वयः ॥ ३२ ॥ ३३ ॥

इति दिवाकरविरचिते मासदिनप्रवेशादिविचारः ॥

---

अथ मृगयाविचारः ॥

**सवीर्यौ कुजज्ञौ नृपाखेटसिद्ध्यै न सिद्धिर्यदा वीर्यहीनाविमौ स्तः । जलाखेटमाहुः सवीर्यैर्ग्रहर्क्षैर्जलाख्यैर्नगाख्यैर्नगाखेटमाहुः ॥ ३४ ॥ लग्नास्तनाथौ केंद्रस्थौ निर्बलौ क्लेशदायिनी ॥ मृगयोक्ता शुभफला वीर्याढ्यौ यदि तौ पुनः ॥ ३५ ॥ अथ भोजनचिंता ॥ लग्नाधिपो भोज्यदाता सुखेशो भोज्यमीरितम् ॥ बुभुक्षामदपः कर्म पतिर्भोक्तेति चिंतयेत् ॥ ३६ ॥**

अथ मृगयाविचारः । सवीर्याविति । कुजज्ञौ भौमबुधौ सवीर्यौ बलिष्ठौ तदा नृपाखेटसिद्ध्यै राज्ञां मृगयासिद्ध्यै भवतः ॥ अथ यदा तौ वीर्यहीनौ निर्बलौ तदा मृगयासिद्धिर्न स्यात् ॥ जलाख्यैः जलसंज्ञकराशिभिः कर्कवृश्चिकमीनाख्यैः जलाखेटमाहुः जलसंबंधि आखेटं मृगयामाहुः । पर्वतसंज्ञकराशिभिः मेषसिंहधनुर्धराख्यैः ॥ नगाखेटं पर्वतसंबंधिमृगयां प्राहुः ॥ ३४ ॥ अथान्यदाह । लग्नास्तनाथाविति । लग्नास्तनाथौ लग्नसप्तमभावस्वामिनौ केंद्रे १ । ४ । ७ । १० । एतदन्यतमस्थानस्थितौ विबलौ निर्बलौ तया मृगया क्लेशदायिनी उक्ता कथिता ॥ पुनर्यदि तौ वीर्याढ्यौ बलिष्ठौ तदा मृगया शुभफला ॥ ३५ ॥ अथ भोजनचिंता ॥ लग्नाधिप इति । लग्नस्वामी भोज्यदाता भोजनदाता ॥ सुखेशः चतुर्थस्थानस्वामी भोजनं भोजनवस्तु ईरितमुक्तम् । मदपः सप्तमस्थानस्वामी बुभुक्षा भोक्तुमिच्छा । कर्मपतिः दशमस्थानस्वामी भोक्ता भोजनकर्ता इति चिंतयेत् विचारयेत् ॥ ३६ ॥

**लग्ने लाभे च सत्खेटयुतदृष्टे सुभोजनम् ॥ जीवे लग्ने सिते वापि सुभोज्यं दुःस्थितावपि ॥ ३७ ॥ मंदे तमसि वा लग्ने सूर्येणालोकिते युते ॥ लभ्यते भोजनं नात्र शस्त्रभीतिस्तदा क्वचित् ॥ ३८ ॥ रविदृष्टं युतं वापि लग्नं न यदि तत्र हि ॥ उपवास-**

स्तदा वाच्यो नक्तं वा विरसाशनम् ॥ ३९ ॥ चंद्रे कर्मगते भोज्यमुष्णं शीतसुखे कुजे ॥ तुर्ये खेटस्य वशतो भोज्यान्नैरसमादिशेत् ॥ ४० ॥ स्निग्धमन्नं सिते तुर्ये तैलसंस्कृतमर्कजे ॥ नीचोपगे कदशनं विरसं न च संस्कृतम् ॥ ४१ ॥

अथान्यदाह—दुःस्थितावपि भोजनप्रात्त्यसंभवज्ञानेपि । अकस्मात्सुभोजनप्राप्तिः ॥ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

सूर्यादिभिर्लग्नगतैः सवीर्यैराजादिगेहे भुजिमामनंति ॥ सुखे सुखेशे सबले सुभोज्यं चरादिकं स्यादसकृत्सकृद्विः ॥ ४२ ॥ मूलत्रिकोणगे खेटे लग्ने पितृगृहेऽशनम् ॥ मित्रालये मित्रभस्थे शत्रुगेहेऽरिगेहगे ॥ ४३ ॥

स्थिरराशिगते सति सकृदेकवारं द्विस्वभावराशिगते द्विवारम् ॥ ४२ ॥ मूलेति । यस्मिन्कस्मिंश्चित्खेटे मूलत्रिकोणस्थलग्नस्थे सति पितृगेहे भोजनम् ॥ ४३ ॥

शुभेक्षितयुते लग्ने बलाढ्ये स्वगृहे भुजिः ॥ गृहराशिस्वभावेन यत्नादन्यत्र चिंतयेत् ॥४४॥ तिलान्नमर्के हिमगौ सुतंडुलाभोमे मसूराश्चणकाश्च भोज्यम् ॥ बुधे समुद्गाः खलु राजमाषा गुरौ सगोधूमभुजिः सवीर्ये ॥ ४५ ॥ शुक्रे यवा बाजरिका युगंधराः शनौ कुलित्थादि समाषमन्नम् ॥ भोज्यं तृषान्नं शिखिराहुवीर्याच्छुभेक्षणालोकनतः सहर्षम् ॥ ४६ ॥ सूर्ये मूलं पुष्पमिंदौ कुजे स्यात्पत्रं शाखा चापि शाकं सवीर्ये ॥ शुक्रेज्यज्ञैर्व्यंजनं भूरिभेदं मंदेनेत्थं सामिषं राहुकेत्वोः ॥ ४७ ॥ अथ स्वप्नचिंता ॥ लग्नांशगेऽर्के तनुगेऽपि वास्मिन्दुःस्वप्नमीक्षेत यथार्कबिंबम् ॥ रक्तांबरं वह्निमथापि चंद्रे शुभ्राश्वरत्नांबरपुष्पवस्त्रम् ॥ ४८ ॥ स्त्रियः सुरूपाश्च कुजे सुवर्णरक्तांबरस्रङ्मणिविद्रुमाणि ॥ बुधे ह्यस्वर्गतिधर्मवार्ता गुरौ रतिर्धर्मकथासुरेक्षा ॥ ४९ ॥ सद्बंधुसंगश्च सिते जलानां पारेगतिर्दैवरतिर्विः

लासः ॥ शनावरण्यादिगतिश्च नीचैः सगश्च राहौ शिखिनीत्थमेव ॥ ५० ॥ सहजधीमदनायरिपुस्थितो यदि शशी गुरुभानुसितेक्षितः ॥ नवमकेंद्रगतेषु शुभग्रहे स्वबलया मनुजो रमते तदा ॥ ५१ ॥ इति स्वप्नचिंता ॥ आसीदसीमगुणमंडितपंडिताग्र्यो व्याख्यद्भुजंगपगवीः श्रुतिवित्सुवृत्तः ॥ साहित्यरीतिनिपुणो गणितागमज्ञश्चिंतामणिर्विपुलगर्गकुलावतंसः ॥ ५२ ॥ तदात्मजोनंतगुणोस्त्यनंतो योऽधोक्र सदुक्तिं किल कामधेनुम् ॥ संतुष्ट्ये जातकपद्धतिं च न्यरूपयद्दुष्टमतं निरस्य ॥ ५३ ॥ पद्मांबयासावित्ततो विपश्चिच्छ्रीनीलकंठः श्रुतिशास्त्रनिष्ठः ॥ विद्वच्छिवप्रीतिकरं व्यधासीत्समाविवेकं मृगयावतंसम् ॥ ५४ ॥ शाके नंदाभ्रबाणेंदु १५०९ मित आश्विनमासके ॥ शुक्लेऽष्टम्यां समातन्त्रं नीलकंठबुधोऽकरोत् ॥ ५५ ॥

इति श्रीगर्गवंशोद्भवश्रीदैवज्ञानंतसुतश्रीनीलकंठदैवज्ञविरचितं वर्षतंत्रं समाप्तम् ॥ २ ॥

अन्यदासमाप्ति स्पष्टम् ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥

इति दिवाकरदैवज्ञात्मजश्रीविश्वनाथदैवज्ञविरचितायां वर्षतन्त्रटीकायां स्वप्नविचारः समाप्तः ॥ समाप्तमिदं द्वितीयं तन्त्रम् ॥ २ ॥

---

श्रीगणेशाय नमः ।

## अथ प्रश्नतन्त्रं प्रारभ्यते ।

तत्रादौ प्रथमप्रकरणम् ॥ अथ प्रश्नविचारस्य प्रयोजनमाह वराहः–दैवज्ञस्य हि दैवेन सदसत्फलवाञ्छया ॥ अवश्ये गोचरे मर्त्यः सर्वः समुपनीयते ॥ १ ॥ अश्रौषीच्च पुरा विष्णोर्ज्ञानार्थं समुपस्थितः ॥ वचनं लोकनाथोपि ब्रह्मा प्रश्नादिनिर्णयम् ॥२॥ आदिशब्देन स्वरशकुनादिकम् ॥ तस्मान्नृपः कुसुमरत्नफलाग्रहस्तः प्रातः प्रणम्य वरयेदपि प्राङ्मुखस्थः ॥ होरांगशास्त्रकुशलान् हितकारिणश्च संहृत्य दैवगणकान्सकृदेव पृच्छेत् ॥ ३ ॥ उत्पलः–दशभेदं ग्रहगणितं जातकमवलोक्य निरवशेषमपि ॥ यः कथयति शुभमशुभं तस्य न मिथ्या भवेद्वाणी ॥ ४ ॥ एतच्च प्रश्ननिरूपणं विनीतेभ्यो दीयमानं सत्फलं नान्येभ्य इत्युक्तं समरसारे–विनयावनताय दीयमाना प्रभवेत्कल्पलतेव सत्फलाय । इति ॥ ५ ॥ श्रुतिरपि–विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेहमास्मि । असूयकायानृजवेऽयताय न मां ब्रूया वीर्यवती तथा स्याम् । इति ॥ शेवधिर्निधिः । दीयमानमित्यनेन उपदेशः शिष्येभ्यः प्रष्टृभ्यो निरूपणमुभयमप्युच्यते । अत एव श्रुतौ न मां ब्रूया इति सामान्येनोक्तम् ॥ वचिरत्र प्रतिपादनक्रिया । यस्तत्र प्रष्टा कुटिलः सरलो वेति ज्ञानं प्रश्नतंत्रे–ऋजुरयमनृजुर्वायं प्रष्टा पूर्वं परीक्ष्य लग्नबलात् ॥ गणकेन फलं वाच्यं दैवं तच्चित्तगं स्फुरति ॥ १ ॥ लग्नस्थे शशिनि शनौ केंद्रस्थे ज्ञे दिनेशराशिगते ॥ भौमज्ञयोः समदृशा लग्नगचंद्रे ऋजुः प्रष्टा ॥ २ ॥ लग्ने शुभग्रहयुते सरलःक्रूरान्विते भवेत्कुटिलः ॥ लग्नेऽस्ते सौम्यदृशा विधुगुरुदृष्ट्या च सरलोऽयम् ॥ ३ ॥ यदि गुरुबुधयोरेकः पश्यत्यस्ताधिपं च रिपुदृष्ट्या ॥ तत्कुटिलः प्रष्टा खल्वनयोरेकस्तयोः साधुः ॥ ४ ॥ दशभेदा दीप्तादयस्तांश्च समनंतरमेव वक्ष्यामः ॥ अपरे तु मध्यमदेशांतरचरा-

न्तरादयांतरभुजफलस्फुटीकरणवक्रमार्गोदयास्तभेदेन दशभेदत्वमाहुः ॥ यदा चरांतरदेशांतरमध्यगतमेवेति मतं तदा जीवसंस्कारवशेन दशभेदतोह्याः । अथ यत्र बहवः प्रश्ना युगपत्संभवंति तत्र निरूपणप्रकारश्चण्डेश्वरप्रश्नविद्यायाम्–आदिमं लग्नतो ज्ञानं चंद्रस्थानाद्द्वितीयकम् ॥ सूर्यस्थानात्तृतीयं स्यात् चुर्यं जीवगृहाद्भवेत् ॥ बुधभृग्वार्बलीयः स्यात्तद्ग्रहात्पंचमं पुनः । इत्यादिरुक्तः स तु न युक्तः सकृदेव पृच्छेदिति वराहवाक्यस्वरसात् । नानाकर्तृकानेकप्रश्नेष्वपि गणकस्यानेकनिरूपणानिषेधात् तदुक्तं ज्ञानमुक्तावल्याम्–सम्यग्विचार्य लग्नं ब्रूयात्प्रश्नं सकृद्यथाशास्त्रम् ॥ यस्त्वेकं ब्रूतेऽसौ तस्य न मिथ्या भवेद्वाणी ॥ अत एव चिंतामणौ–शशिचक्रं समभ्यर्च्य फलैः पुष्पैः सरत्नकैः ॥ प्रष्टा सुभूमौ दैवज्ञानेकं पृच्छेत्प्रयोजनम् ॥ दशभेदं ग्रहाणां च गणितं भावजं तथा ॥ विमृश्यैकं च कथयेन्नानेकं प्राह पद्मभूः । इति ॥ दीप्ताद्यं दशभेदं च ग्रहाणां भावजं फलम् ॥ विचार्य प्रवदेद्यस्तु तस्योक्तं नान्यथा भवेत् ॥ दीप्तो दीनोथ मुदितः स्वस्थः सुप्तो निपीडितः ॥ मुषितः परिहीनश्च सुवीर्यश्चाधिवीर्यकः ॥ स्वोच्चे दीप्तः समाख्यातो नीचे दीनः प्रकीर्तितः ॥ मुदितो मित्रगेहस्थः स्वस्थश्च स्वगृहे स्थितः ॥ शत्रुगेहस्थितः सुप्तो जितोन्येन निपीडितः ॥ नीचाभिमुखगो हीनो मुषितोऽस्तंगतो ग्रहः ॥ सुवीर्यः कथितः प्राज्ञैः स्वोच्चाभिमुखसंस्थितः ॥ अधिवीर्यो निगदितः सुरश्मिः शुभवर्गजः ॥ दीप्ते सिद्धिश्च कार्याणां दीने दुःखसमागमः ॥ स्वस्थे कीर्तिस्तथा लक्ष्मीरानंदो मुदिते महान् ॥ सुप्ते रिपुभयं दुःखधनहानिर्निपीडिते ॥ मुषिते परिहीने च कार्यनाशोऽर्थ संशयः ॥ गजाश्वकनकावाप्तिः सुवीर्ये रत्नसंपदः ॥ अधिवीर्ये राज्यलब्धिर्ग्रहोर्मैत्रार्थसंगमः ॥

---

१ स्वोच्चस्थेदशसूर्येनवचंद्रेपंचभूपुत्रे । पंचेंदुजेतथेज्येसप्ताष्टौभार्गवेशनौपंच ॥ नीचविहीनचक्राच्छुद्धः षड्नवतोयदाभ्यधिकः आत्मीयरश्मिगुणितः षड्भक्तताद्रश्मयोयस्मात् पंचेंदुतोयथायथाधिकास्तथातथाशुभफलाधिक्यम् ॥

॥ अथ ग्रहस्वरूपम् ॥

पूर्वः सत्त्वं नृपस्तातः क्षत्रं ग्रीष्मोरुणश्चलः ॥ मधुदृक्पैत्तिको धातुः सूरः सूक्ष्मकचो रविः ॥ कफो वर्षामृदुर्मातः पयोगौरश्च सात्त्विकः ॥ जीवो वैश्यश्चरो वृत्तो मारुताशो विधुः सुदृक् ॥ ग्रीष्मः क्षत्रतमो रक्तो याम्यः सेनाग्रणीश्वरः ॥ युवा धातुश्च पिंगाक्षः क्रूरः पित्तं शिखी कुजः ॥ शरदीशो हरिर्दीर्घः षंढो मूलं कुमारकः ॥ लिपिज्ञ उत्तरेशश्च शूद्रः सौम्यस्त्रिधातुकाः ॥ सत्त्वं पित्तो हिमः श्लेष्मा दीर्घो मंत्री द्विजो नरः ॥ मध्वैशानी कफो जीवो मधुपिंगलदृक्तथा ॥ शुक्रः शांतो द्विजो नारी वैश्यो मंत्री चरः सितः ॥ आग्नेयी दिक्कफश्चाम्लः कुटिलासितमूर्द्धजः ॥ कृष्णस्तमः कृशो वृद्धः षंढो मूलांत्यजोऽलसः ॥ शिशिरः पवनः क्रूरः पश्चिमो वातुलः शनिः ॥ राहुर्धातुः शिखीमूलं शेषमन्यच्च मंदवत् ॥ चिंतनयिं विलग्ने ज्ञात्केंद्रगाद्वा बलाधिकात् ॥

अथ प्रश्नजातं कस्माल्लग्नादिभावाद्विचारणीयमित्याह—सौख्यमायुर्वयो जातिरारोग्यं लक्षणं गुणम् ॥ क्लेशाकृती रूपवर्णास्तनोश्चित्यं विचक्षणैः॥ मुक्ताफलं च माणिक्यं रत्नधातुधनांबरम् ॥ हयकार्याध्वविज्ञानं वित्तस्थानाद्विलोकयेत् ॥ भुवनदीपके—भगिनीभ्रातृभृत्यानां दासकर्मकृतामपि ॥ कुर्वीत वीक्षणं विद्वान्सम्यग्दुश्चिक्यवेश्मतः ॥ वाटिकाखलकक्षेत्रमहौषधिनिधीनपि ॥ विवरादिप्रवेशं च पश्येत्पातालतो बुधः ॥गर्भापत्यविनेयानां मंत्रसंधानयोरपि ॥ विद्याबुद्धिप्रबंधानां सुतस्थाने विनिर्णयः ॥ चौरभी रिपुसंग्रामखरोग्रक्रूरकर्मणाम् ॥ मातुलातंकभृत्यानां रिपुस्थानाद्विनिर्णयः ॥ वाणिज्यं व्यवहारं च विवादं च समं परैः ॥ गमागमकलत्राणि पश्येत्प्राज्ञः कलत्रतः ॥ नद्युत्तारेध्ववैषम्ये दुर्गे शात्रवसंकटे ॥ नष्टे दुष्टे रणे व्याधौ छिद्रे छिद्रं निरीक्षयेत् ॥ वापीकूपतडागादि प्रपादेवगृहाणि च ॥ दीक्षां यात्रां मठं धर्मं धर्मान्निश्चित्य कीर्तयेत् ॥ राज्यं मुद्रां परं पुण्यं स्थानं तातं प्रयोजनम् ॥ वृष्ट्यादिव्योमवृत्तान्तं

व्योमस्थानान्निरीक्षयेत् ॥ गजाश्वयानवस्त्राणि सस्यकांचनकन्यकाः ॥ विद्वान्विद्यार्थयोर्लाभं लक्षयेल्लाभलग्नतः ॥ त्यागभोगविवादेषु दानेष्टकार्पि-कर्मसु ॥ व्ययस्थानेषु सर्वेषु विद्धि विद्वन्व्ययं व्ययात् ॥ षट्पंचाशिका-याम्-यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्या-स्ति वृद्धिः ॥ पापैरेवं तस्य भावस्य हानिर्दैष्टव्या पृच्छतां जन्मतो वा ॥ १ ॥ सौम्ये विलग्ने यदि वा स्ववर्गे शीर्षोदये सिद्धिमुपैति कार्यम् ॥ अतो विपर्यस्तमसिद्धिहेतुं कृच्छ्रेण संसिद्धिकरं विमिश्रम् ॥ ९ ॥ भुवन-प्रदीपे-लग्नपतिर्यदि लग्नं कार्याधिपश्च वीक्षते कार्यम् ॥ लग्नाधीशः कार्यं कार्येशः पश्यति विलग्नम्॥ लग्नेशः कार्येशं विलोकयेल्लग्नपं तु का-र्येशः ॥ शीतगुदृष्टौ सत्यां परिपूर्णा कार्यसंसिद्धिः ॥ कथयंति पादयोगं पश्यति सौम्यो न लग्नपो लग्नम् ॥ लग्नाधिपं च पश्यति शुभग्रहश्चार्द्ध योगोत्र ॥ एकः शुभो ग्रहो यदि पश्यति लग्नाधिपं विलोकयति ॥ लग्नं पादोनयोगमाहुस्तदा बुधाः कार्यसंसिद्धौ ॥ लग्नपतौ दर्शने सति शुभग्र-हे द्वौ त्रयोथवा लग्नम् ॥ पश्यंति यदि तदानीमाहुर्योगं त्रिभागोनम् ॥ क्रूरावेक्षणवर्ज्यश्चंद्रः सौम्यखेचरा लग्नम् ॥ लग्नेशदर्शने सति पश्यंतः पू-र्णयोगकराः ॥ क्रूराक्रांतः क्रूरयुतः क्रूरदृष्टश्च यो ग्रहः ॥ विरश्मितां प्रप-न्नश्च सोऽनिष्टफलदायकः ॥ समरसिंहे-अमुकं वदेति कार्यं कदा भवि-ष्यत्यमुत्र पृच्छायाम् ॥ लग्नं लग्नाधिपतिः कार्यं कार्याधिपः पश्येत् ॥ लग्नस्थः कार्येशः पश्यति चेल्लग्नपं तदेव भवेत् ॥ तत्कार्यं यद्यन्यस्थितं सत्वरं तदा न स्यात् ॥ पश्यति यदा च लग्नं द्रक्ष्यति चंद्रं विलग्नपं च यदा ॥ लग्ने कार्ये च यदा द्वयोश्च योगे तदा सिद्धिः ॥ यदि लग्नपं पश्य-ति कार्याधीशो विलग्नमथ तस्य ॥ कार्यस्य हानिरुक्ता लग्नस्तते किमपि नो वाच्यम् ॥ इति सामान्यतो भावनिरूपणम् ॥

अथ प्रत्येकं भावप्रश्ननिरूपणम् । ताजिकशास्त्रोक्तप्रश्नतंत्रे-भूतं भवद्भ-विष्यन्मम किं कथयेति जातपृच्छायाम् ॥ लग्नपतेः शशिनो वा बलम

न्वेष्यं बलाभावे ॥ दृष्ट्वा नवांशकबलं शुभदृग्योगं च सर्वकालेषु ॥ प्रष्टुः शुभमादेश्यं विपरीतं व्यत्ययादेषा ॥ लग्नेशो मूसरिफो यस्मात्तस्मादतीतमाख्येयम् ॥ येन युतस्तस्माद्भवदेष्यं यो योक्ष्यते तस्मात् ॥ यदि लग्ने लग्नपतिः सौम्ययुतो वा विलोकितः सौम्यैः ॥ तत्प्रष्टुर्व्याकुलता शरीरदोषा विनश्यंति॥पापो यदि लग्नपतिस्तदा कलिव्याधिधननाशाः ॥ सौम्ये निर्वृतिबुद्धिर्द्रव्याप्तिः सौख्यमतुलं च ॥ अथ द्वितीयस्थानपृच्छा । तत्रैव–धनलाभस्य प्रश्ने लग्नेशेनेंदुनाथ धननाथः ॥ कुरुते यदीत्थशालं शुभयुतिदृग्भ्यां भवेल्लाभः ॥ क्रूरग्रहैर्धनस्थैर्दूरे लाभोऽन्यदप्यशुभम् ॥ क्रूरमुथशिले धनेशे प्रष्टा म्रियतेथवा विलग्नेशे ॥ धनधनपेत्थशाले मंदगतिर्यत्र भावानाम् ॥ तनुधनसहजादीनां प्रष्टुस्तद्द्वारतो लाभः ॥ प्रश्नदीपके– लग्नस्थं चंद्रजं चंद्रः क्रूरो वा यदि पश्यति ॥ धनलाभो भवत्याशु किंत्वनर्थोपि पृच्छतः ॥ चंद्रलग्नधनाधीशा दृष्टा युक्ताः परस्परम् ॥ धनकेंद्रत्रिकोणस्थाः सद्यो लाभकराः स्मृताः ॥ शुभदृस्वामिषड्वर्गे लग्ने सौम्ययुतेक्षिते ॥ प्रष्टुस्तात्कालिकी लब्धिरलब्धिस्तु विपर्यये ॥ चतुर्थे सप्तमे चंद्रे खे रवौ लग्नगे शुभे ॥ प्रष्टुः सद्योऽर्थलाभः स्याल्लग्ने वा सुरमंत्रिणि ॥ अथ तृतीयभावपृच्छा प्रश्नतंत्रे– सहजपतिर्यदि सहजं पश्यति चेत्तदद्वयं शुभैर्दृष्टम् ॥ तद्भ्रातरो गतरुजः स्वस्थाः क्रूरेक्षणे वामम् ॥ यदि सहजपतिः पृष्ठे तत्पतिना मुथशिलेऽथ तन्मार्गम् ॥ षष्ठेशे सहजस्थे सहजपतौ क्रूरिते वापि ॥ सूर्यस्य रश्मिसंस्थे भयावहं प्रष्टुरादेश्यम् ॥ षष्ठइत्युपलक्षणम् ॥ अष्टमस्थेपि ॥ षष्ठाष्टमभावेशौ यद्भावेशेनेत्थशालिनौ स्याताम् ॥ पीडां तस्य प्रवदेत्षष्ठाष्टमसंस्थगे वापि ॥ एवं सर्वोपि यथा पित्रोस्तुर्ये सुतानां च ॥ भृत्यचतुष्पदवर्गस्यास्ते स्त्रियाः सुहृदाये ॥ अथ चतुर्थस्थानपृच्छा ॥ लग्नपतीदुचतुर्थं यदि मुथशिलमथवा गृहे गमनम् ॥ प्रष्टुः पृथ्वीलाभदमसौख्यदृग्योगतो नैव ॥ यदि पृच्छति कृषिको मे क्षेत्राल्लाभो भवेन्न च वा ॥

लग्नं कृषिकस्तुर्यं भूमिर्द्यूनं कृषिस्तरुर्दशमम् ॥ लग्ने क्रूरोपगते स्याच्चोरोपद्रवस्तु कृषिकर्तुः ॥ वक्रातिचारवर्ज्ये क्रूरे चौरस्य कृषिलाभः ॥ लग्नस्थे शुभखेटे साफल्यं कर्षकस्य कृषितः स्यात् ॥ तुर्ये च क्रूरगते त्यक्त्वा भूमिं प्रयात्येषः ॥ द्यूने च शुभोपगते शुभं कृषेस्त्वन्यथा तु विपरीतम् ॥ दशमे दशमपतौ वा शुभयुतदृष्टे शुभा वृक्षाः ॥ भूभाटकपृच्छायां लग्नं प्रष्टा च भाटकं द्यूने ॥ तस्योत्पत्तिर्दशमे तथावसानं चतुर्थं स्यात् ॥ लग्नस्य लग्नपस्य च शुभयोगे शुभमशोभनं वामे ॥ द्यूने क्रूरोपगते यस्मादपि भाटकस्ततोऽनर्थः ॥ दशमे क्रूरोपगते नोत्पत्तिर्बहुतरा भवेत्प्रष्टुः ॥ क्रूरार्दिते तु तुर्ये स्यादवसाने शुभं नास्य ॥ अथ पंचमस्थानपृच्छा ॥ यदि पृच्छत्येतस्याः स्त्रियो भवेन्मे प्रजा नवा काश्चित् ॥ लग्नेशेंद्वोः सुतपतिना मुथशिलभावे प्रसूतिः स्यात्॥ सुतपतिर्विलग्ने लग्नपचन्द्रौ सुतेऽथवा स्याताम् ॥ सत्वरितमेव वाच्या सविलंबं नक्तयोगेन ॥ द्विशरीरे च विलग्ने शुभयुतपुत्रे ह्यपत्ययोगोऽस्ति ॥ यदि लग्नपुत्रपतिपुंराशौ तत्सुतो गर्भे ॥ अथ चंद्रः पुंराशौ पुंग्रहकृतमुथशिलयुतस्तदापि सुतः ॥ अथवा विधुरपराह्णे सूर्यात्पृष्ठे तदा स्त्री स्यात् ॥ होरास्वामी पुरुषः पुंराशौ चेत्तथापि सुतगर्भः ॥ चंद्रयुक्तेक्षिते गर्भे सौम्ययुक्तेक्षितेपि वा ॥ उच्चस्थेऽभ्युदिते तत्र पुण्यापत्यं प्रजायते ॥ पुण्यापत्यमायुष्मदपत्यम् ॥ एषा गर्भवती किल नवा प्रमाणं प्रयाति गर्भोऽयम् ॥ प्रश्ने लग्नपशशिनोः सुतस्थयोर्गर्भवत्येव ॥ यद्येतयोर्मुथशिलं केंद्रे सुतपेन गर्भिणी तदापि ॥ आपोक्लिमेत्थशालादनीक्षणाल्लग्नपुत्रयोर्नैवम् ॥ चरलग्ने क्रूरेंद्वोर्मुथशिलभावेन विनश्यति हि गर्भः ॥ लग्नपशशिनोस्तत्पतिस्थवाक्रिमुथशिलेपि तथा ॥ जीवितमरणप्रश्ने बालानामंत्यपे शुभेदृष्टे ॥ केंद्रस्थे सितपक्षे शुभयुक्तेऽत्ये विधौ जीवति ॥ क्रूरश्चेदंत्यपतिर्दग्धश्चापोक्लिमेऽरियुतः ॥ क्रूरैस्तु जातमात्रो म्रियते बालोऽ–

थवा गर्भे ॥ प्रसवज्ञानप्रश्ने भुक्ताँल्लग्नांशकान्परित्यज्य ॥ भोग्याद्रिः चिंत्य शेषाननुमित्यैवं वदेद्दिवसान् ॥ यावंतो नवमांशा गतास्तावंतो गर्भस्य मासा गताः यावंतो भोग्यास्तावद्भिरग्रतः प्रसव इति व्याख्या ॥ अप- रेतु मासज्ञानं शुक्रावस्थानादाहुः ॥ मासज्ञानस्य पृच्छायां गर्भिण्या भृगुनंदनः ॥ लग्नात्स्याद्यावति स्थाने मासानाख्याति तावतः ॥ सुता- त्संख्या तदा वाच्या यदा धर्मात्परं गतः ॥ इति भुवनप्रदीपकोक्तेः ॥ लग्नांतर्दिनराशिर्दिवाग्रहो लग्नपश्च दिनराशौ ॥ तद्दिवसे जन्म वाच्यं विपरीते व्यत्ययश्चैषाम् ॥ अथ रात्रिलग्नमह्नि तदधिपतिश्चेत्तु तस्य राशिपतेः ॥ बलमूह्यं दिनहोरा पुंराशिस्त्रीग्रहेप्येवम् ॥ अस्मिन्वर्षेऽपत्यं भविता विलग्नपंचमाधीशौ ॥ भजतो यदीत्थशालं तत्रैवाब्दे भवति नूनम् ॥ यदि वा मिथो ग्रहगतौ स्यातामेतौ च संततिस्तदापि ॥ वाच्या तस्मिन्वर्षे शुभयोगादन्यथा न पुनः ॥ सूता प्रसूतयुवतिज्ञाने सुतपोऽ- थ षष्ठपः सूर्यात् ॥ निर्गत्योदयमायात्ततः प्रसूते च नारीयम् ॥ अथ जीवसौम्यशुक्रा आकाशे उदयिनस्तथाप्येवम् ॥ अथ षष्ठस्थानपृच्छा ॥ रोगादयमुत्थास्यति नवेति लग्नं भिषग्द्यूनम् ॥ व्याधिर्दशमं रोगी हिबुकं भेषजमिहाहुराचार्याः ॥ १ ॥ क्रूरार्दिते विलग्ने वैद्यान्न गुणस्तदौषधाद्रोगः॥ वृद्धिमुपयाति दशमे क्रूरैर्निजबुद्धितोप्यगुणः ॥२॥ अस्ते च क्रूरयुते मांद्यान्मांद्यं तथौषधाद्बंधो ॥ सौम्योपगतैरेतैररोगता रोगिणो भवति ॥ ३ ॥ लग्नेशेंद्वोः सौम्येत्थशालतो रोगनाशनं वाच्यम् ॥ वक्रे तु तत्र खेटे भूयोऽपि गदः समुपयाति ॥ ४ ॥ भूमि- स्थलग्नस्थद्यूनस्थशशिमुथशिले भवेन्मृत्युः ॥ लग्नस्थे रंध्रपतौ लग्न- पशशिनोर्विनाशे वा ॥ ५ ॥ लग्नाधिपे च सूर्ये चंद्रः सप्तेशमुथशिल- विधायी ॥ सप्तेशे षष्ठस्थे तन्मरणं रोगिणो वाच्यम् ॥ ६ ॥ रंध्रेशेन विनष्टे नास्तमिते नापि केंद्रस्थे ॥ लग्नेशांस्थमुथशिले मृत्युः स्याद्रोग- पृच्छायाम् ॥ ७ ॥ अथवा तयोश्च केंद्रे मुथशिलतः क्रूरपीडिते मंर-

णम् ॥ यदि केंद्रे क्रूरग्रहस्तदा पीडा ॥ अष्टमेशलग्नेशौ च मुथशिलिनौ तदा मृत्युः स्यादिति वाच्यमित्यर्थः ॥ सूर्यद्वादशभागं प्रविष्टे लग्नेश्वरेप्येवम् ॥ ८॥ लग्ने चरे च रोगी क्षणेक्षणे स्यादरुक्सरुक्चापि ॥ द्विशरीरे पररोगः स्थिरे गदस्यैव रोगत्वम् ॥ ९ ॥ शशिनो वक्रमुथशिले स्थिररोगो मंदमुथशिले पूर्वम् ॥ मूत्रनिरोधाद्रोगोत्पत्तिर्ज्ञेया कृतप्रश्ने ॥ १० ॥ अथ पृच्छायाः पूर्वं सप्ताहानि च विलोक्य चत्वारि ॥ यदि तेषु शशांकरवी शुभयुतदृष्टौ तदा शस्तम् ॥ ११ ॥ अथ मंदोऽयमथ नवेति प्रश्ने लग्नेश्वरोऽथ चंद्रो वा ॥ षष्ठेशमुथशिली स्यात्तदस्तमितो वा तदा मंदः ॥ रोगवानित्यर्थः ॥ अथ स्वामिभृत्यचतुष्पादप्रकरणम् ॥ ईशोऽन्यो मम भविता नवेति लग्नेश्वरस्य यदि केंद्रे ॥ नो भवति मुथशिलं षष्ठांत्यपतिभ्यां तदा नान्यः ॥ १॥ वक्री वान्येन समं लग्नपतिः सहजनवमसंस्थेन ॥ कुरुते यदीत्थशालं, तदान्यनाथो भवेत्प्रष्टुः ॥२॥ लग्नपतौ केंद्रस्थे रिपुदृष्ट्या क्रूरवीक्षिते पुण्ये ॥ रविरश्मिगतेऽथ भवेद्यावज्जीवं च नान्यपतिः ॥३॥ अयमीशो भद्रो मे पृच्छायां लग्नपस्य कंबूले ॥ स्वामी स एव भव्यो द्यूनेशस्य च शुभोन्येशः ॥ ४ ॥ ग्रहभूमिस्थानानां लग्नप्रश्ने पुरोक्त एव विधिः ॥ सम्यग्विचार्य वाच्यं शुभमशुभं पृच्छतः स्वधिया ॥ ५ ॥ भृत्यचतुष्पदलाभं प्रश्ने लग्नेशशीतगू षष्ठे ॥ षष्ठेशमुथशिलो वा लग्ने षष्ठेश्वरोऽथ तल्लाभः ॥ ६ ॥ भृत्यस्य वाहनस्य च यद्वा प्रश्ने च लग्नलग्नपती ॥ अर्थी दाता सप्तमसप्तमपौ तद्वलात्प्राप्तिः ॥ ७ ॥ लग्नस्य च सप्तमेशेन मुथशिले सप्तमस्य वा लग्नेशेन मुथशिले लग्नेशसप्तमेशयोर्वा परस्परं मुथशिले भृत्यादिकस्य पृच्छकाभिलाषविषयस्य लाभ इत्यर्थः । अथ सप्तमस्थानपृच्छा ॥ स्त्रीलाभस्य प्रश्ने स्मराधिपे लग्नपेन शशिना वा ॥ कृतमुथशिले युवत्या अयाचिताया भवेल्लाभः ॥ १ ॥ यदि लग्नपो विधुर्वा द्यूने तदायाचितां स्त्रियं लभते ॥ लग्नेशान्मूसरिफे चंद्रे-

स्तपमुथशिले स्वयं लाभः ॥ २ ॥ येन समं मूथशिलं तत्र क्लिष्टे च पापयुतदृष्टे ॥ निकटीभूय तदा किल विनश्यति स्त्रीगतं कार्यम् ॥३॥ पापेऽत्र रंध्रनाथे स्त्रीजातेरेव विघटते कार्यम् ॥ सहजपतौ भ्रातृभ्यस्तुर्येशे पितृव्य एव नान्येभ्यः ॥ ४ ॥ सौम्यकृतयुक्तिदृग्भ्यां पूर्वोक्तस्थानतः शुभं वाच्यम् ॥ ५ ॥ अथ स्त्रीस्नेहः ॥ प्रीतिस्थानप्रश्ने स्मरपतिलग्नेशमुथशिले स्नेहः ॥ झकटकदृशा झकटकः शशिकंबूले तु सापि शुभा ॥ यदि मंदो लग्नेशः केंद्रे च स्यात्तदा बली प्रष्टा ॥ अस्तेश्वरे च मंदे केंद्रे प्रतिवादिनोऽस्ति बलम् ॥ २ ॥ उभयोरेकास्थितयोर्ज्ञातव्या झकटकं तयोः प्रीतिः ॥ सूर्ये न शुभं विबले नरस्य शुक्रे स्त्रियो द्वयोर्द्वितयोः ॥ ३ ॥ अथ रुष्टागमनम् ॥ मम गृहिणी रुष्टा पुनरेष्यति नाथेति भूम्यधःस्थरवौ ॥ भूपरिगते च शुक्रे नेति पुनर्वक्रितेऽभ्येति ॥ ४ ॥ सूर्यान्निर्गतशुक्रे वक्रेपि समेति चान्यथा रुष्टा ॥ क्षीणेंदौ बहुदिवसैः पूर्णविधौ च द्रुतमुपैति ॥ भूमिशब्देन चतुर्थस्थानम् ॥ तस्मादधः पूर्वलग्नपर्यंतमिति यावत् । लग्नमारभ्य चतुर्थपर्यंतं हि स्त्रीणां हर्षस्थानं न पुंसां रविश्च पुरुषग्रहस्तेन रुष्टाया नागमनम् । एवं भुवश्चतुर्थादुपरि सप्तमपर्यंतं नराणां हर्षस्थानं न स्त्रीणाम् ॥ शुक्रस्य स्त्रीग्रहत्वान्न हर्षस्थानम् ॥ इति न रुष्टागमनमित्याशयः ॥ अथ कन्यापरीक्षा ॥ एषा कुमारिका किल निर्दोषा किं नवेति पृच्छायाम् ॥ लग्ने स्थिरे स्थिरर्क्षे लग्नपशशिनोश्च निर्दोषा ॥ १ ॥ चरराशिगतैरेतैरियं कुमार्यपि च जातदोषा स्यात् ॥ द्विशरीरस्थे चंद्रे चरलग्ने स्वल्पदोषा स्यात् ॥ २ ॥ शशिभौमावेकर्क्षे स्थिरवर्जे तत्परेण गुप्तमियम् ॥ रमिता शनिचंद्रमसोर्लग्नगयोः प्रकटमुपभुक्ता ॥ ३ ॥ यदि भौमशनिर्केंद्रे विधुदृष्टो वृश्चिकेऽथ शुक्रः स्यात् ॥ तद्द्रेष्काणेऽथ तदा निर्भ्रांतं जातदोषैषा ॥ ४ ॥ अथ स्वपरप्रसूतिपरीक्षा ॥ एषा किल प्रसूता क्षिते घटे ज्ञे हरौ च नो सूता ॥ अनयोरालिवृषगतयोः सूता नारी परिज्ञेया ॥ १ ॥ सिंहस्थे बुधे शुक्रस्य

कुम्भगतत्वमसम्भावितं तेन योगद्वयमेतद्वैकल्पिकम् ॥ एवं वृषवृश्चिकगतत्वं व्याख्येयम् ॥ भौमबुधशुक्रचंद्राद्विशरीरे चापवर्जिते चेत्स्युः ॥ अग्रेऽस्ति तत्प्रसूतिश्चापे नाग्रे न पृष्ठतः सूता ॥ २ ॥ क्रूरश्चेच्चरराशौ परतः सूता स्थिरे तु निजपत्युः ॥ मिश्रे तु मिश्रमूह्यं जातकसंदेहपृच्छायाम् ॥ ३ ॥ पंचमेशलग्नेशयोरन्यः क्रूरस्ताभ्यां सहजमुथशिली वा क्रूरस्तत इदं फलमादेश्यं तदेवाग्रेऽभिव्यनक्ति ॥ गुर्विण्येषा स्वपत्युः परपुरुषाद्वेति लग्नसुतपत्योः ॥ शुभयुतिदृग्भ्यां स्वपतेः शनिभौमदृशाऽन्यतो गुर्वी ॥ ४ ॥ अथ पातिव्रत्यपरीक्षा ॥ कुलटा सतीयमथवेति लग्नपतिश्चंद्रमाश्च भौमेन ॥ एकांशे मुथशिलकृतदेवभवने भजत्यन्यम् ॥ १ ॥ यदि निजगृहगोभौमस्तदान्यदेशं प्रयाति जारकृते ॥ रविणेति मुथशिले सत्युपभुक्ता तु राजपुरुषेण ॥ २ ॥ सौम्येन लेखकवणिङ्‌निजभे शुक्रेण योषयैव स्त्री ॥ एतैर्योगैरसती विपरीते सुचरितेति विज्ञेयम् ॥ ३ ॥ लग्नपतिनाथ शशिना मूसरिफे भूसुते भवेज्जारः ॥ युक्तः पुनर्गुरुदृशा पुत्रभयाद्रविदृशा च राजभयात् ॥ ४ ॥ सितदृष्ट्या परनारीभयात्सितज्ञैकराशिगतदृष्ट्या ॥ जारस्य स्थविरत्वाल्लज्जित्वा त्यजति जारं सा ॥ ५ ॥ अथाष्टमस्थानपृच्छा ॥ नृपसंग्रामप्रश्ने विलग्नेशसंस्थितारखेटात् ॥ शशिमूसरिफात्प्रष्टास्तास्तपसंस्थेंदुमुथशिलाच्छत्रुः ॥ १ ॥ तेषां च बलात्तयोर्बलमित्यर्थः ॥ अथवा शनिकुजजीवाः शीघ्रेभ्यो बलयुता उपरिचराः ॥ बुधसितचंद्रास्तेभ्यश्च दुर्बलाधश्चराश्च संचिंत्याः ॥ २ ॥ मंदात्त्रयो ग्रहाः शन्यादयो यदि शीघ्रेभ्योऽग्रसरा भवंति तदा सितादिभ्यः शत्रुगेहेभ्यस्तेजो लब्ध्वा जयभाजो भवंति प्रष्टारः ॥ यदा तु प्रश्नकाले शन्यादयो नाग्रेसरास्तदा शीघ्रेभ्यस्तेजो-लब्धुमशक्ताः पराभूता भवंतीत्यर्थतः सिद्धम् ॥ लग्नपतावास्तपतेः षट्त्रिदृशाथ मुथशिले द्वयोः स्नेहः ॥ वर्गद्वयमध्याधः पतितः सोऽन्येन बध्यः स्यात् ॥ ३ ॥ वर्गद्वयाधिपानां मूसरिफेऽस्तंगतेन रणदैर्घ्यम् ॥

लग्नस्वामिनि मंदे कंबूले उपरिगे जयः प्रष्टुः ॥ ४ ॥ एवंगुणे तु-तास्मि-न्विप्रविनष्टेस्तपतितनीचस्थे ॥ केंद्रेऽस्ते वास्तपतौ प्रष्टुर्हानिः प्रव-क्तव्या ॥५॥ लग्नादधः शुभे सत्युपरि च मंदे शुभः सहायः स्यात् ॥ लग्नपतौ रंध्ररंध्रपमुथाशिले मतिः प्रष्टुः ॥६॥ सप्तेशे धनसंस्थे धनेशक्र-लमुथशिले रिपोर्नाशः ॥ लग्नेशदशमपत्योर्मुथशिलतः पृच्छकस्य जयवीर्यं ॥ ७ ॥ तुर्यास्तपयोरेवं शत्रोर्योगे जयो ज्ञेयः ॥ उभयवर्गेऽपि केंद्रे तत्पतिकृतमुथाशिले बलं ज्ञेयम् ॥ ८ ॥ बलवान्मुथशिलं यत्र वर्गे तस्य वर्गस्य जय इत्यर्थः । चरराशौ सबलत्वं जित्वा प्रांते विनाशस्तु ॥ लग्नपतावंत्यस्थे प्रष्टा न(श्)यति परोऽस्तपे षष्ठे ॥ ९ ॥ खपतौ लग्ने प्रष्टुस्तुयशाऽस्ते रिपोः सहायबलम् ॥ यन्मुथाशिलौ रवींदू तस्य बलं सुखरिफे हानिः ॥ १० ॥ अथ नवमस्थानपृच्छा ॥ मम गमनं भविता किं न वेति लग्नेश्वरे न । केंद्रे ॥ नवमेशमुथाशिले साति नवमेशे वा भवेद्गमनम् ॥ १ ॥ लग्नस्थे नवमपतौ लग्नाधिपमुथाशिले च संचा-रात् ॥ रहितो याति पुनर्न नवमदृशा वर्जिते योगे ॥ २ ॥ लग्नपतौ केंद्रस्थे सहजग्रहमुथाशिले च विक्रूरे ॥ गमनं स्याद्यस्मिन्वा केंद्रे क्रूरे च नास्ति गतिः ॥ ३ ॥ अस्ते क्रूरे च यत्कार्यं निर्याति विघ्नमत एव ॥ आकाशस्थे पा(पे रा)जकुलाज्ज्येष्ठतो निजाद्वापि ॥ ४ ॥ नव-मेशो मुथशिलगे लग्नाधी(शे)न पापरिपुदृष्टे ॥ गमनेऽवसानतः स्यात्प्रष्टुः कष्टं क्षयोऽर्थस्य ॥ ५ ॥ लग्नेशे नवमेशो मुथशिलकृतिरंध्रसप्तमे कष्ट-म् ॥ उदयेऽस्मिन्वायाद्विनिःसृतिः स्यात्सुखकरः पंथाः ॥ ६ ॥ लग्ना-न्मार्गानुभवो व्योम्नः कार्यं स्मराद्गतिस्थानम् ॥ भूमेः कार्यं परिण-तिरेवं लग्ने शरीरसुखम् ॥ ७ ॥ दशमे शुभे च सिद्धिः कार्यस्यास्ते प्रयाति मत्स्थाने ॥ तत्र शुभं च चतुर्थे परिणामः सुंदरः कार्यं ॥ ८ ॥ लग्नेशं शशिनं वा यः क्रूरस्तुदति तत्र मनुजर्क्षे ॥ मनुजा(श्रि)-शिके वा तदा भयं द्विपदतो गंतुः ॥ ९ ॥ जलराशौ वारिभयं चतुष्प-

दर्क्षे तथाश्वादेः ॥ घटचापे द्रुमकंटकभयं हरौ व्याघ्रसिंहादेः ॥ १० ॥ नगरप्रवेशतोऽस्मात् फलमस्ति न वा प्रवेशलग्नमिह ॥ तस्मिन्धनपे वक्रे नो रहणं कार्यसिद्धिर्वा ॥ ११ ॥ रहणं स्थितिरित्यर्थः ॥ अतिचरिते बहुदिवसं रहणं नो कार्यसिद्धिरीषदपि ॥ नवमतृतीयगेऽस्मिन्कार्यं कृत्वाशु निजपुरं याति ॥ १२ ॥ लग्ने कर्मण्याये धनपयुते शोभनं ज्ञेयम् ॥ सक्रूरसप्तमस्थे पतिविघ्नं झकटकश्चतुर्थस्थे ॥ १३ ॥ अथ दशमस्थानपृच्छा ॥ राज्याप्तिप्रश्नलग्ने लग्नेशे शशिनि वा नभःपतिना ॥ कृतमुथशिलेंबरदृशा राज्यं रूपक्रमाद्भवति ॥ १ ॥ स्वकुलोचितं राज्यं भवतीत्यर्थः ॥ अन्योन्यभवनगमनात्क्रूराभावेऽथ चिंतितप्राप्तिः ॥ लग्नस्थेनान्येन च सौम्येनांबरस्य मुथशिलेप्येवम् ॥ २ ॥ पापार्दिते तु मंदे निकटीभूयोत्तरत्यधोराज्यात् ॥ ( मंदगामी यो ग्रहोत्राधिकारी तस्मिन्पापयुते राज्यनाश इति तात्पर्यम् ॥ ) भूमिस्थे क्रूरदृशा त्वपवादः शुभदृशा कीर्तिः ॥ ३ ॥ मंदग्रहे बलवति क्रूरवियुक्ते यदा शशी विबलः ॥ मंदे बलेन भ्रमणाद्राज्यप्राप्तिर्भवेत्प्रष्टुः ॥ ४ ॥ लग्नाधिपतौ स्वगृहे लाभो राज्यस्य तुंगगे भौमे ॥ लग्नांबराधिपौ यदि कंबूलौ केंद्रगेन्दुमुथशिलतः ॥ ५ ॥ उत्तमराज्यावाप्तिः स्वर्क्षस्थे चेंद्रुतौ विपुला ॥ यत्रर्क्षे लग्नेशस्तत्पतिरशुभे गृहे तदा कार्यम् ॥ ६ ॥ न स्याद्रस्ते कष्टाद्दशमदृशा कटुकता कार्यें ॥ राज्यप्राप्तौ सत्यां यदि पृच्छति कोपि परिणतिं च तदा ॥ ७ ॥ लग्नं शरीरकार्यं गृहकर्मास्तं नभश्च राज्यार्थम् ॥ लाभो मित्रस्यार्थे चतुर्थकं कर्मणोवसितये च ॥ ८ ॥ द्रव्यं धनायसहजं भृत्येभ्यो रिपुश्च वैरिभ्यः ॥ एतैः शुभैः शुभं स्यादशुभे वामं च सर्वकार्याणाम् ॥ ९ ॥ चित्तस्वामिनि भौमे नौचित्ये पारदारिके व्ययकृत् ॥ जीवे धर्मायरिपौ गुरुपूजायै सिते विलासाय ॥ १० ॥ वाणिज्याय ज्ञे पुनरिंदौ मुथशिलिनि चान्यथान्यार्थम् ॥ लग्नपतौ पतितस्थे विबले राज्यात्ययस्तु कंबूले ॥ ११ ॥ कोपि गुणः स्यात्पापा-

क्रांतेरशुभं च्युतो भवति ॥ नरपतिसचिवस्नेहप्रश्ने कंबूले लग्नसप्तपयोः ॥ १२ ॥ मुथशिलयोः शुभदृष्ट्या शुभता राज्ये मिथः स्नेहः ॥ राज्यं चरं स्थिरं वा लग्नपगगनेशयोः सद्दयोः ॥ १३ ॥ यद्येको मंदः स्यात्केंद्रे तत्स्थितमथोन्यथा वाच्यम् ॥ यदि वा स वाममार्गे भूमौ वा प्रच्युतिर्भवेत्पूर्वम् ॥ १४ ॥ कंबूले सति लभते शीघ्रं मुसारिफे तु न पुनः ॥ १५ ॥ अथैकादशस्थानपृच्छा ॥ नृपतेर्गौरवलाभाशादि मम स्यान्न वेति च प्रश्ने ॥ आयेशलग्नपत्योः स्नेहदृशा मुथशिले द्रुतं भवति ॥ १ ॥ रिपुदृष्ट्या बहुदिवसैः केंद्रे चायेशचंद्रकंबूले ॥ वाच्या पूर्णा वाशा चरस्थिरद्विभावगे स्वनामफलम् ॥ २ ॥ मंदे क्रूरोपहते भूत्वाशाशु प्रणाशमुपयाति ॥ क्रूरायुक्ते शुभयुज्यधिकारवशेन लब्ध्याशा ॥ ३ ॥ मित्रेण सह प्रीतिर्भविता लग्नेश्वरायपत्योश्च ॥ प्रियदृष्ट्या मुथशिलतः प्रीतिर्वान्योन्यगृहयानात् ॥ ४ ॥ केंद्रे स्थितयोरनयोर्मैत्री किल पूर्वजातैव ॥ पणफरगतौ पुरस्तादापोक्लिमतो महाप्रीतिः ॥ ५ ॥ गुप्तं कार्यमिदं मे सिध्यति लग्नेश्वरेऽथ चंद्रमसि ॥ शुभमुथशिलगे केंद्रे तन्निकटे वाथ सिद्धिः स्यात् ॥ ६ ॥ अथ द्वादशस्थानपृच्छा ॥ रिपुविग्रहपृच्छायां बलवति षष्ठे रिपुः सबलः ॥ द्वादशपे शुभदृष्टे बलवति वाच्यं बलं प्रष्टुः ॥ १ ॥ रिपुविग्रहपृच्छायां नामोच्चारे रिपोर्बलिन्यस्ते ॥ गुप्ते च द्वादशपे बलवति वाच्यं बलं प्रष्टुः ॥ २ ॥ शुभयुतदृष्टे सद्व्ययमशुभेक्षणयोगतो व्ययमनर्थात् ॥ एवं भविष्वखिलेषूह्यं सदसत्फलं सुधिया ॥ ३ ॥ इति संक्षेपतो द्वादशभावप्रश्ननिरूपणम् ॥ अथ केचिद्विशेषतः प्रश्नाः ॥ तत्रादौ पथिकागमनम् ॥ ताजिके समरसिंहे—आगमने पृच्छायां लग्नेशे लग्नमध्यसंस्थेन ॥ कृतमुथशिले समेति हि सुखमस्त तुरीयगे कंथात् ॥ १ ॥ स्थानाच्चलितः प्रश्ने लग्नपतौ सहजनवमगृहसंस्थे ॥ लग्नस्थेन मुथशिले पंथानं वहति पथिकोऽयम् ॥ २ ॥ रंध्रेथ धने तस्मिन्नाकाशसंस्थेन मुथशिलेप्येवम् ॥ केंद्रस्थितेत्थशाले लग्ने

क्षणवर्ज्यमेति न कदापि ॥ ३ ॥ लग्नाधिपतौ वक्रे लग्नं पश्यत्यमुत्र चंद्रे वा ॥ वक्रगमुथशिले सति समेति पथिकः सुखं शीघ्रम् ॥ ४ ॥ स्थितलग्नपतौ शनिना कृतमुथशिले द्रुतमुपैति ॥ लग्नाद्वापि चतुर्थाच्छुभाद्द्वितीयतृतीयगा वापि ॥५॥ कथयंति नष्टलाभं प्रवासिनश्चागमं त्वरितम् ॥ चिंतामणौ–ग्रहः षष्ठेऽथ जामित्रे वाक्पतिः कंटके स्थितः ॥ पथिकागमनं ब्रूते सिते ज्ञे वा त्रिकोणगे ॥ ६ ॥ षष्ठोदये पापदृष्टे शुभदृग्वर्जिते बुधः ॥ लग्नात्षष्ठे यदा पापा यातुश्च निधनं वदेत् ॥ ७ ॥ यदा क्रूरास्तृतीयस्था देशाद्देशांतरं गतः ॥ चौरेणैव हृतस्वश्च पथिकः केंद्रगा यदि ॥ ८ ॥ पापैः षष्ठत्रिलाभस्थैः कंटकस्थैः शुभग्रहैः ॥ प्रवासी सुखमायाति दूरस्थोपि सुनिश्चितम् ॥ ९॥ चतुरस्रे त्रिकोणे वा पापगेहस्थितः शनिः ॥ पापदृष्टश्च नियतं बंधनं यातुरादिशेत् ॥१०॥ शुभयुक्ते स्थिरे लग्ने स्थिरो बंधश्चरेऽन्यथा ॥ द्वितनौ सौम्यसंयुक्ते बंधमोक्षौ क्रमेण तु ॥ ११ ॥ पापास्त्रिकोणजामित्रे विलग्ने षष्ठकोदये ॥ शत्रुभिर्वीक्ष्यमाणाश्च यातुः कष्टं वदेत्सुधीः ॥ १२ ॥ मार्गस्थानगतैः सौम्यैर्मार्गे तस्य शुभं वदेत् ॥ क्रूरैर्दुःखं विलग्नस्थैः पापैः क्लेशमवाप्नुयात् ॥ १३ ॥ चरलग्ने चरांशे वा चतुर्थे चंद्रमाः स्थितः ॥ प्रवासी सुखमायाति कृतकार्यश्च वेश्मनि ॥१४॥ कंटकैः सौम्यसंयुक्तैः पापग्रहविवर्जितैः ॥ प्रवासी सुखमायाति निधनस्थे सुधाकरे ॥ १५ ॥ गमागमौ तु न स्यातां योगे दुरुधराकृते ॥ शुभैः शुभकृतो रोधः पापैस्तस्करतो भयम् ॥ १६ ॥ गमागमौ हि न स्यातां स्थिरराशौ विलग्नगे ॥ न रोगोपशमो नाशो द्रव्याणां न पराभवः ॥ १७ ॥ विपरीतं चरे वाच्यं फलं मिश्रं द्विमूर्तिषु ॥ स्थिरवत्प्रथमे खंडे परार्धे चरराशिवत् ॥ १८ ॥ प्रवासी शीघ्रमायाति गुरुशुक्रौ त्रिवित्तगौ ॥ चतुर्थस्थानगावेतौ शीघ्रमायाति कार्यकृत् ॥ १९ ॥ इंदुः सप्तमगो लग्नात्पथिकं वक्ति मार्गगम् ॥ मार्गाधिपश्च राश्यर्द्धात्परभागे व्यवस्थितः ॥२०॥ शुक्रार्कजीवसौम्यानामेकोपि स्याद्धरायगः ॥ तदाशु गमनं ब्रूयात्प्र-

ष्टुनें गमनं व्यये ॥२१॥ लग्नाद्यावतिथे स्थाने बली खेटो व्यवस्थितः ॥ ब्रूयात्तावतिथे मासे पथिकस्य निवर्तनम् ॥ २२ ॥ एवं कालं च-रांशस्थे द्विगुणं च स्थिरांशके ॥ द्विस्वभावांशगे खेटे त्रिगुणं चिंतये-त्सुधीः ॥ २३ ॥ यातुर्विलग्नाज्जामित्रभवनाधिपतिर्यदा ॥ करोति वक्र-मावृत्तेः कालं तु ब्रुवते परे ॥ २४ ॥ चतुर्थे दशमे वापि यदि सौम्यो ग्रहो भवेत् ॥ तदा न गमनं क्रूरैस्तत्रस्थैर्गमनं भवेत् ॥ २५ ॥ लग्नाद्वा लग्ननाथाद्वा यत्संख्याः क्रूरखेचराः ॥ नवमे द्वादशे वापि तत्संख्याः स्युरुपद्रवाः ॥ २६ ॥ लग्नाद्वा लग्ननाथाद्वा यावंतः सौम्यखेचराः ॥ मार्गे तत्रोदया वाच्याः स्थाने स्थाने विचक्षणैः ॥ २७ ॥ क्रूरयुक्तेक्षितो मंदः शुभदृग्योगवर्जितः ॥ धर्मस्थस्तनुते व्याधिं प्रोषितस्याष्टगो मृतिम् ॥ २८ ॥ जामित्रस्य शुभोत्थे याता ना याति दुरुधरायोगे ॥ मित्र-स्वामिनिषेधात्पापोत्थे शत्रुरुक् चौरात् ॥ २९ ॥ चंद्रार्कयोश्छिद्रगयो-र्यमेन संदृष्टयोः स्यात्परशस्त्रभीतिः ॥ रंध्रे सिते ज्ञे च सुखातिरारे मं-दे भयं पापयुगीक्षितेऽध्वनि ॥ ३० ॥ अथ दूरस्थो जीवति मृतोथ-वेत्थं यदा प्रश्नः ॥ लग्नेश्वरे शीतकरेऽथ षष्ठे तुर्येऽष्टमे वाप्यति-नीचगे वा ॥ अस्तंगते छिद्रपतीत्थशालयुक्ते शुभैर्दूरगतो मृतः स्यात् ॥ ३१ ॥ भूमेरधःस्थे नवचक्रगेण यदीत्थशालं कुरुते शशांकः ॥ सौम्यैरदृष्टे मरणं प्रकुर्याद्दूरस्थितस्यापि विदेशगस्य ॥ ३२ ॥ सौम्यैः षष्ठांत्यरंध्रस्थैर्विबलैश्च शुभेक्षितैः ॥ पापयुक्तौ शशांकार्कौ तदा दूर-स्थितो मृतः ॥ ३३ ॥ पृष्ठोदये पापयुते त्रिकोणकेंद्राष्टषष्ठोपगतैश्च पापैः ॥ सौम्यैरदृष्टैः परदेशसंस्थो मृतो गदार्तो नवमे च सूर्ये ॥३४॥ तुर्योपरिस्थेन खगेन चंद्रमा यदीत्थशालं कुरुते शुभेक्षितः ॥ सौम्यै-र्युतो वा परदेशसंस्थितः सुखी च जीवेत्पाथि सौख्यमेति ॥ ३५ ॥ अथ परचक्रागमनपृच्छा षट्पञ्चाशिकायाम्—मार्गान्निवर्तते शत्रुः पापैः शत्रुगृहाश्रितैः ॥ चतुर्थगैरपि प्राप्तः शत्रुर्भग्नो निवर्तते ॥ ३६ ॥ झषा-

लिकुंभकर्कटा रसातले यदा स्थिताः ॥ रिपोः पराजयस्तदा चतुष्पदैः पलायनम् ॥ ३७ ॥ मेषधनुःसिंहवृषा यद्युदयस्था भवंति हिबुके वा ॥ शत्रुर्निवर्तते तदा ग्रहसहिता वा वियुक्ता वा ॥ ३८ ॥ नागच्छति परचक्रं यदार्कचंद्रौ चतुर्थभवनस्थौ ॥ गुरुबुधशुक्रा हिबुके यदा तदा शीघ्रमायाति ॥ ३९ ॥ स्थिरोदये जीवशनैश्चरे स्थिते गमागमौ नैव वदेत्तु पृच्छतः ॥ त्रिपंचषष्ठा रिपुसंगमाय पापाश्चतुर्थां विनिवर्तनाय ॥ ४० ॥ दशमोदयसप्तमगाः सौम्या नगराधिपस्य विजयकराः ॥ आरार्कीज्ञगुरुसिताः प्रभंगदौ विजयदा नवमे ॥ ४१ ॥ नवमे भौमशनी भंगदौ बुधगुरुशुक्रा विजयदा इत्यर्थः ॥ उदयर्क्षाच्चंद्रर्क्षं भवति च यावद्भिरेश्च तावद्भिः ॥ आगमनं स्याच्छत्रोर्यदि च न मध्ये ग्रहः कश्चित् ॥ ४२ ॥ अन्यात्रापि प्रश्नप्रदीपे—दैत्येज्यवाचस्पतिसोमपुत्रैरेकर्क्षगैर्लग्नगतैर्बलाढ्यैः ॥ द्वाभ्यामथेज्ये भृगुजेऽथ लग्ने हन्याद्रणे यायिनृपं पुरेशः ॥ ४३ ॥ सूर्येन्दुभौमार्कजसैंहिकेयैः सर्वैश्चतुर्भिस्त्रिभिरेव लग्नगैः ॥ हन्यात्तदा स्थायिनमाशु यायी द्यूनस्थितैर्यायिनृपं पुरेशः ॥ ४४ ॥ शुक्रेज्यशीतांशुबुधाः सुरेज्यैः सर्वैस्त्रिभिर्द्यूनगतैर्बलाढ्यैः ॥ हन्याद्रणे स्थायिनमाशु यायी सुखास्पदस्थैश्च शुभैः सुसंधिः ॥४५॥ कुजेऽस्थशाले हिमगौ विलग्ने बंधोऽथ मृत्युर्युधि नागरस्य ॥ भौमेत्थशाले च विधौ कलत्रे बंधं मृतिं वा लभतेऽत्र यायी ॥४६॥ लग्नेशजामित्रपयोश्च मध्ये भवेद्ग्रहो यः स्वगृहोच्चसंस्थः ॥ तद्वर्गमर्त्यो नृपयोश्च संधिर्ज्ञेयो बुधे लेखकपंडिताभ्याम् ॥४७॥ राजानौ रविशीतगू इत्यादिवर्गः ॥ क्रूरे कलत्रे हृदये शुभग्रहो यच्छेद्धनं यायिनृपाय नागरः ॥ विपर्यया-

| सू. चं. | मं. | बु. | बृ. शु. | श. |
|---|---|---|---|---|
| राजानौ | सेनापतिः | युवराजः | मंत्रिणौ | दासः |

द्यायिनृपः पुरेश्वरं दुर्गाद्विनिष्कास्य ददाति वास्पदम् ॥ ४८ ॥ रवित्थशाले शशिजे सुगुप्ताश्वरा भवेयुश्च कुजेसराफात् ॥ ग्रहाच्छाशांकेन

यतश्च तस्मिन्ग्येयेन्यवेषांश्च भवंति चाराः ॥४९॥ चिंतामणौ दुर्गप्रश्नः—
प्रश्ने विलग्ने क्रूरे वा दुर्गभंगो न जायते॥विशेषतो भूमिपुत्रे राहौ वा
मूर्तिगे सति ॥ सप्तमे सिंहिकासूनौ दुर्गं शीघ्रेण लभ्यते ॥ जामित्रोद-
यगे क्रूरे रिष्फगे लग्ननायके ॥ ५१ ॥ द्वितीये वाष्टमे षष्ठे तदा दुर्गं न
लभ्यते ॥ सक्रूरो लग्नपो वक्री युद्धदः केंद्रसंस्थितः ॥ ५२ ॥ षष्ठाधिपे
द्यूनगते पापे वा युद्धमादिशेत् ॥ पृच्छायां केंद्रगैः क्रूरैः कोटदुर्गे वधो
नृणाम् ॥ ५३॥ भौमाष्टमेशावेकत्र ददेते निधनं नृणाम् ॥ स्वायपुत्र-
स्थिते जीवे कोटमध्ये भयं नहि ॥५४॥ शनौ भौमे च केंद्रस्थे बहूनां
वधबंधनम् ॥ लग्नस्थो यदि पापः पापेन युतेक्षितो वा स्यात् ॥
लग्नात्पूर्वापरगौ पापौ युद्धं तदा घोरम् ॥ ५५ ॥ अथ रोगिणः शुभा-
शुभम् ॥ विलग्ने षष्ठपः पापो जन्मराशिनिरीक्षिते ॥ रोगिणस्तस्य
मरणं निश्चयेन वदेद्बुधः ॥ ५६ ॥ चतुर्थाष्टमगे चंद्रे पापमध्यगतेपि
वा ॥ मृतिः स्याद्बलसंयुक्तसौम्यदृष्ट्या चिरात्सुखम् ॥ ५७ ॥ विधौ
लग्ने स्मरे भानौ रोगी याति यमालयम् ॥ प्रश्ने क्रूरग्रहे लग्ने रोगवृ-
द्धिश्चिकित्सकात् ॥ ५८ ॥ तथा लग्नगते सौम्ये वैद्योक्तममृतं वचः ॥
लग्ने वैद्यो द्युनं व्याधिः खं रोगी तुर्यमौषधम् ॥५९ ॥ रोगिणो भिषजो
मैत्री मैत्री भेषजरोगयोः ॥ व्याधेरुपशमो वाच्यः प्रकोपः शात्रवे
तयोः ॥ ६० ॥ लग्ननाथे च सबले केंद्रसंस्थे शुभग्रहे ॥ उच्चगे वा
त्रिकोणे वा रोगी जीवति निश्चयम् ॥ ६१ ॥ एकः शुभो बली लग्ने
त्रायते रोगपीडितम् ॥ सौम्या धर्मारिलाभस्थास्तृतीयस्था गदापहाः
॥ ६२ ॥ अथ देवदोषज्ञानम् ॥ वह्निचंकद्वादशे षष्ठ लग्नात्पापग्रहो
यदि ॥ हंतौ गदैर्जलैश्शस्त्रैस्तस्य दोषः कुलाद्भवः ॥ ६३ ॥ प्रताश्च
राहो.पितरः सुरेज्ये चंद्रेऽम्बुदेव्यस्तपनेपि दव्यः॥ स्वगोत्रदेव्यश्च शनौ
बुधे च भूतानि विद्याद्व्ययरंध्रसंस्थे ॥ ६४ ॥ शाकन्य आर भृगुजें-
बुदेव्यो गृह्णंति मर्त्यं विमुखं मुकुंदात् ॥ स्वक्षोंच्चगे वीर्ययुते च साध्या-
श्चंद्रे च नीचे विबलेन साध्याः ॥ ६५ ॥ केंद्रस्थैर्बलिभिः पापरसाध्या

देवतागणाः ॥ सौम्यग्रहैश्च केंद्रस्थैः साध्या मंत्रस्तवार्चनैः ॥ ६६ ॥ कंटकाष्टत्रिकोणस्थाः शुभा उपचये शशी ॥ लग्ने च शुभसंदृष्टे रोगी रोगाद्विमुच्यते ॥ ६७ ॥ रोगग्रहणमुपलक्षणम् ॥ संतानप्रतिबंधादावप्येवं दोषनिरूपणम् ॥ अथ स्वामिभृत्यप्रश्ने ॥ त्रैलोक्यप्रकाशे-शीर्षोदये ३। ५। ६। ७। ८। ११। सौम्ययुतेक्षिते वा सौम्यैर्द्वितीयाष्टमसप्तमस्थैः ॥ तृतीयलाभारिगतैश्च पापैः सौख्यार्थलाभो नृपसेवकस्य ॥ ६८ ॥ लग्नाद्द्वितीये मदनेष्टमर्क्षे वित्तक्षयं संभ्रममार्तिमृत्युम् ॥ कुर्वंति पापाः क्रमशो नरेंद्राद्भृत्यस्य तस्मात्परिवर्जयेत्तम् ॥ ६९ ॥ लग्नाद्द्वितीयाष्टमसप्तमर्क्षाः पापाः प्रणाशं नृपभृत्ययोर्द्वयोः ॥ कुर्वंति तेष्वेव गताश्च सौम्याः कुर्युर्धनारोग्यसुखानि चोभयोः ॥ ७० ॥ शशांकसौम्यैरुदयास्तभावो दृष्टो युतो वा सबलैर्न पापैः ॥ प्रभुस्तदा स्याद्धृदि पार्थिवस्य स्नेहप्रसादावकृपाप्रतीपात् ॥ ७१ ॥ अथान्य ईशो मम भविष्यति नवा इति प्रश्ने-षष्ठेश्वरेण व्ययपेन केंद्रे यदीत्थशालं कुरुते विलग्नपः ॥ प्रभुस्तदान्यः प्रभुरर्थदः स्यादतः प्रतीपान्न भवेत्परः प्रभुः ॥ ७२ ॥ लग्नेश्वरे स्वर्क्षगते स्वतुंगकेन्द्रास्थिते शीतकरेत्थशाले ॥ शुभग्रहैर्दृष्टयुते बलान्विते प्रष्टुर्निजस्वाम्यमितार्थलाभः ॥ ७३ ॥ जायेश्वरे स्वोच्चनिजर्क्षसंस्थे केंद्रास्थिते शीतकरेत्थशालगे ॥ शुभग्रहैर्दृष्टयुते बलोत्कटैः प्रभुस्तदान्यः प्रभुरर्थदो भवेत् ॥ ७४ ॥ इदं गृहं वा शुभमन्यदालयं स्थानं त्विदं वा शुभमन्यदालयम् ॥ ममात्र भद्रं गमनात्तु तत्र वा पृष्टोदयेत्थं विधिना विमृश्य ॥ ७५ ॥ अथ नष्टद्रव्यलाभप्रश्नः । तत्र धनप्राप्तौ प्रश्नचिन्तामणौ-प्रश्ने चतुर्थाधिपतिस्तत्रस्थे वावलोकिते ॥ अवश्य वर्तते तत्र धनं चन्द्रेऽथवा वदेत् ॥ ७६ ॥ वित्तपे धनगे बंधौ वास्ति तत्र धनं बहु ॥ पापे तुर्यगते द्रव्यं स्थितं तूर्णं न लभ्यते ॥७७॥ भौमे सप्ताष्टराशिस्थे धनमन्यत्र नाप्यते ॥ लग्ने तमोरविश्छिद्रे तदा द्रव्यं न लभ्यते ॥ सप्ताष्टदशपातालेशो विधुर्धनदो गुरुः ॥७८॥

लग्नेश्वरे द्यूनगते विलग्ने जायेश्वरे नष्टधनस्य लाभः ॥ जायेशलग्नाधिपतीत्थशाले द्यूने विनष्टं धनमेति मर्त्यः ॥ ७९ ॥ लग्नेशजायाधिपतीत्थशाले लग्नेश्वरं यच्छति तस्करोऽर्थम् ॥ सूर्ये विलग्नेऽस्तमिते शशांके न लभ्यते यद्द्रविणं विनष्टम् ॥ ८० ॥ कर्मेशलग्नाधिपतीत्थशाले चोरः स्वमादाय पुरात्पलायते ॥ चंद्रेऽस्तपे चार्ककरप्रविष्टे तल्लभ्यते नष्टधनं सतस्करम् ॥ ८१ ॥ अस्तेश्वरे केंद्रगतेऽस्ति चोरस्तत्रैव वान्यत्र पुराद्विनिर्गतः ॥ धर्मेशदुश्चिक्यपतीत्थशाले जायेशेऽन्यत्र गतः स चोरः ॥ ८२ ॥ कर्मेशलग्नाधिपतीत्थशाले तल्लभ्यते राजकुलाच्च चौर्यम् ॥ त्रिधर्मपद्यूनपतीत्थशाले त्वन्यत्प्रदेशाद्गमने तदाप्तिः ॥ ८३ ॥ शुभेत्थशाले हिमगौ विलग्ने खस्थेऽथवा नष्टधनस्य लाभः ॥ सुस्नेहदृष्ट्या रविणा शुभेन दृष्टे विलग्ने हिमगौ च लाभः ॥ ८४ ॥ षट्पंचाशिकायाम्–स्थिरोदये स्थिरांशे वा वर्गोत्तमगतेपिवा ॥ स्थितं तत्रैव तद्द्रव्यं स्वकीयेनैव चोरितम् ॥ ८५ ॥ आदिमध्यावसानेषु द्रेष्काणेषु विलग्नतः ॥ द्वारदेशे तथा मध्ये गृहांते च वदेद्धनम् ॥ ८६ ॥ प्रश्नतंत्रे–पतितधनस्थप्रश्ने मिथो गृहस्थौ विलग्नसप्तेशौ ॥ यदि मुथशिलं तयोः स्यात्तदाशु तत्रैव वदंति धनम् ॥ ८७॥ नष्टं क्व दिशि प्राप्तं पृच्छायां लग्नगे विधौ प्राच्याम् ॥ तत्स्थाने याम्यां तच्चास्ते वारुण्यां वा भुव्युदीच्याम् ॥ ८८ ॥ भुवि चतुर्थे ॥ यदि नेंदुः केंद्रे तच्चत्वारिंशांकैश्च पंचयुतैः ॥ भागे दिक्क्रम उक्तो वह्न्यवनी वायुवारिराशौ वा ॥ ८९ ॥ नष्टवीतवित्तलब्धेः पृच्छायां चोरसप्तमं ततो लाभः ॥ हिबुकं द्रव्यस्थानं लग्नं चंद्रश्च धननाथः ॥ ९० ॥ लग्नेशोऽस्तेस्तपातिना चेन्मुथशिली ततो लाभः ॥ यद्यष्टेशो लग्ने तदा स्वयं तस्करोऽर्पयति ॥ रविरश्मिगे धनेशे वास्तमिते तस्करस्य लाभः स्यात् ॥ ९१ ॥ लग्नेशदशमपत्योर्मुथशिलतः प्राप्यते स्ववांश्चोरः ॥ लग्नेशदृष्ट्यभावे चोरः सह मात्रया याति ॥ ९२ ॥ अस्ताधिपतौ दग्धे रविरश्मिगतेऽथ लभ्यते चोरः ॥ लग्नपप्रकृते-

स्थशाल राजभयाद्धनमिदं स्वयं दत्ते ॥ ९३ ॥ लग्नास्तपयोर्न स्याद्यदि दृष्टिर्लग्नपस्तथा विकलः ॥ तत्तस्करोऽस्यै हस्ताद्ददाति चौर्यं हि राजकुले ॥ ९४ ॥ लग्नपमध्यपयोगे राजकुलं प्राप्य लभ्यते चौर्यम् ॥ रंध्रचौरस्य घनं धनपे तत्राथ सप्तमे नाप्तिः ॥ ९५ ॥ रंध्रपतौ धनपस्य तु मुथशिलयोगे प्राप्यते वित्तम् ॥ रंध्रपतौ दशमपतेर्मुथशिलगे चौरपक्षकृद्भूपः ॥ धनपे विलग्नपे सति दृष्टिविहीने श्रुतिभवति नाप्तिः ॥ ९६ ॥ चौरज्ञानप्रश्ने लग्नरविशशिदृशा स्वगृहचोरः ॥ अनयोरेकदृशा गृहसमीपवर्ती वसत्येषः ॥ ९७ ॥ लग्नस्थे लग्नपतावस्तपयुक्ते च गृहगतश्चौरः ॥ अस्ताधिपतावंत्ये सहजे वा स्वीयभृत्योऽयम् ॥ ९८ ॥ अस्तेशे तुंगस्थे स्वगृहे वा तस्करः प्रसिद्धः स्यात् ॥ लग्नदशमास्तभावाः क्रमेण वीक्ष्याः स्वतुंगभवनादौ ॥ ९९ ॥ यः खेटः स्याद्बलवान्स ज्ञेयस्तस्करस्य बली ॥ लग्नादिषु यो ग्रहः स्वोच्चादिबली तिष्ठति स यज्जातिः स तस्य सहायकं करोतीत्यर्थः ॥ एवं योगं तु विना द्यूनेशस्यैव बलमभिग्राह्यम् ॥ इत्थं चौरज्ञाने चौरः सूर्ये ग्रहेश्वरस्य पिता ॥ चंद्रे माता शुक्रे भार्या मंदे सुतो भवेन्नीचे ॥ १०० ॥ जीवे गृहप्रधानं भौमे पुत्रोथवा भ्राता ॥ ज्ञे स्वजनो मित्रं वा ज्ञात्वेत्थं पुण्यसहममावेद्यम् ॥ १ ॥ तस्मिन्क्रूरादृष्टे पुरा न चोरोऽस्तपे पुरापि स्यात् ॥ अस्तेशान्मूसरिफे भौमे चोरः पुरापि निगृहीतः ॥ २ ॥ सप्तेशे रविपुत्रे चंद्रदृशा तस्करो हि पाखंडी ॥ जीवो विलोक्य लोकं भौमे खातेन पालकं भक्त्या ॥ ३ ॥ प्रतिकुंचिकयापहृतं सिते तिथिज्ञे प्रपंचकरः ॥ चौरस्य वयोज्ञाने सिते युवाज्ञे शिशुर्गुरौ मध्यः ॥ ४॥ तरुणो भौमे मंदे वृद्धोऽर्क स्यादतिस्थविरः ॥ रविनभयोः स्वमंदिरे स्मरभूमिलग्नयोर्मध्यम् ॥ ५ ॥ चराति रवौ नवमध्यमवृद्धवयोतीतकाः क्रमशः ॥ नष्टस्थाने प्रश्ने तुर्ये भूम्यग्निवायुजलमध्यात् ॥ ६ ॥ यो भवति राशिरस्मात्स्थानं गेयं गतधनस्य ॥ अथ चतुर्थगृहे तुर्येश्वरोथ यः स्याद्ग्रहस्ततो ज्ञेयम् ॥ ७ ॥ मंदे मलिनस्थाने चंद्रेंबुनि गीष्पतौ

सुराराम ॥ भौमे वह्निसमीपे रवौ गृहाधीश्वरासनस्थाने ॥ ८ ॥ तल्पे शुक्रे सौम्ये पुस्तकवित्तान्नयानपार्श्वे च ॥ अंबुपदेन कूपादिसान्निधौ हस्तपादप्रक्षालनस्थाने वेत्यर्थः ॥ चौरोयमथ नवेति क्रूरेंदोर्मुथशिले च चौरः स्यात् ॥ ९ ॥ सौम्यशशिमुथशिले खलु न भवति चौरः प्रवक्तव्यम् ॥ किमनेन तस्करत्वं कदापि विहितं नवेति पृच्छायाम् ॥ १० ॥ लग्नपशशिनोरेकस्मादपि मूसरिफेऽस्तपे विहितम् ॥ चौरः स्त्री पुरुषो वा पृच्छायामस्तपेपि स्त्रियो राशौ ॥ ११ ॥ स्त्रीखेटे स्त्रीदृष्टे चौरः स्त्रीर्व्यत्ययात्पुरुषः ॥ लग्नेशनवमांशतो वयः प्रमाणजातयो ज्ञेयाः ॥ चौरोयमिहानंतं शास्त्रं कथितोयमुद्देशः ॥ १२ ॥ अथ विशेषतः संतानप्रश्नः । लग्नेश्वरेणाथ निशाकरेण यदीत्थशालं कुरुते सुतेशः ॥ पंचमेश इत्यर्थः ॥ शुभः शुभैः संयुत ईक्षितः स्यात्स संततिं प्रष्टुरसौ विदध्यात् ॥ १३ ॥ पुंस्त्रीग्रहाः पुत्रगृहं विलग्नात्पश्यंति यावंत इहातिवीर्याः ॥ तत्संख्यकाः स्युस्तनयाश्च कन्याः शुभेशयोगात्सुतभांशतुल्याः ॥ १४ ॥ लग्नेशपुत्राधिपती परस्परं न पश्यतश्चेदुदयं च पंचमम् ॥ पापेत्थशालौ सुतलग्नपौ च प्रष्टुस्तदा संततिनास्तितां वदेत् ॥ १५ ॥ पुत्रालये सिंहवृषालिकन्याः प्रश्नोदयाज्जन्मभतस्तथेंदोः ॥ अल्पप्रजः संततिपृच्छकः स्यात्पापैः सुतर्क्षे सहितेक्षिते वा ॥ १६ ॥ स्वर्क्षस्थितौ रन्ध्रगतौ यमार्कौ प्रष्टुः स्त्रियं संदिशतश्च वंध्याम् ॥ छिद्रसितौ चंद्रबुधौ सदोषां वा काकवंध्यां तनयाप्रसूतिम् ॥ १७ ॥ अत्र चंद्रे बलवति कन्याप्रसूतिः पुंग्रहदृष्टे काकवंध्येति ज्ञेयम् ॥ बुधे बलवति वंध्या ॥ मृतप्रजाछिद्रगयोः सितेज्ययोर्गर्भस्रवाभूमिसुतेष्टमर्क्षम् ॥ छिद्रेश्वरे छिद्रगतेऽतिवीर्ये पुष्पं न विंदत्यबला सुतप्रदम् ॥ १८ ॥ शुक्रार्कयोरष्टमसंस्थयोर्वा क्रूरैर्द्धनांत्याष्टमराशिसंस्थैः ॥ जाता पुरस्तान्म्रियते प्रजा वै प्रष्टुर्न चाग्रे शुभसंततिः स्यात् ॥ १९ ॥ रिष्फेश्वरे केंद्रगते च सौम्यैर्युतेक्षिते जीवति बालकश्च ॥ आपूर्यमाणे शुभयुक्त इंदौ केंद्रे शिशुर्जीवति दीर्घकालम् ॥ २० ॥ चिंतामणौ–पंचमेशोऽथ लग्नेशो

विषमर्क्षगतौ यदा ॥ पुत्रजन्मप्रदौ ज्ञेयौ कन्यानां समराशिगौ ॥ २१ ॥ सुताधिपं नृराशिस्थं पुंराशिस्थोपि लग्नपः ॥ वीक्ष्यते पुत्रदः प्रोक्तो युग्मराशौ च दारिका ॥ २२ ॥ युग्मराशिगते लग्ने यदा तत्र शुभग्रहाः ॥ गर्भेऽपत्यद्वयं वाच्यं दैवज्ञेन विपश्चिता ॥ २३ ॥ विषमोपगतो लग्नाच्छनिः पुत्रसुखप्रदः ॥ समभे योषितां जन्म विशेषो जातकोक्तिवत् ॥ २४ ॥ अथ भोजनचिंता चिंतामणौ-कटुको लवणस्तिक्तो मिश्रितो मधुरो रसः ॥ अम्लः कषायः कथिता रव्यादीनां रसा बुधैः ॥ २५ ॥ लग्नं पश्यति यः खेटस्तस्य यः कथितो रसः ॥ भोजनेऽसौ रसो वीर्यक्रमाद्वाच्याः परे रसाः ॥ २६ ॥ चंद्रो यस्य मुथशिलस्तस्य विशेषं वदेद्भुक्तौ ॥ लग्ने राहौ मंदे रविदृष्टे भोजनाभावः ॥ २७ ॥ प्रश्नतंत्रे-कीदृङ्ममाद्यभुक्तं पृच्छायां यदि भवेत्स्थिरं लग्नम् ॥ तद्भुक्तमेकवेलं ह्यात्मनि वेलद्वयं चरेत्त्वसकृत् ॥ २८ ॥ चंद्रे लग्नगते स्यात्क्षारं भौमे च कटुकमम्लं गुरौ ॥ मधुरं दिनकृतितिक्त शुक्रे स्निग्धं बुधे च सर्वरसम् ॥ २९ ॥ मंदे कषायमशुभान्मूसरिफे शशिनि मुथशिलेशुभेऽरिदृशा ॥ उद्वाहात्प्रियदृष्ट्या प्राणयिकत्वात्समागतं भोज्यम् ॥ ३० ॥ अयमस्यार्थः ॥ चंद्रः शुभेन मुथशिली पापेसराफश्चेत्तदैतदुक्तम् । पापेसराफे च शुभेत्थशाले चंद्रे तु भुक्तं शुभमन्नमीशम् ॥ ३१ ॥ शुभेसराफे त्वशुभेत्थशाले चंद्रे कदन्नं मधुचाज्यवर्ज्यम् ॥ पापेत्थशालेऽथ खलेसराफे शक्यं न भोक्तुं परतोपि लब्धम् ॥ ३२ ॥ चंद्रे स्वनाथदृष्टे सुखभोजनमन्यथा कष्टात् ॥ गुरुमुथशिले सगौरवमर्केण मुथशिलेऽतिशुचितीक्ष्णम् ॥ ३३ ॥ शुक्रे सुस्वादुरसं सहास्यगीतं बुधे जनाकीर्णम् ॥ शस्त्रकथाढ्यं शनिना कुस्थानगतं कुजे चोष्णम् ॥ ३४ ॥ यदि वदति भोजनार्थं निमंत्रितो यामि शशिमहीसुतयोः ॥ एकस्थितयोः केंद्रे मुथशिलयोर्वापि पूर्णता भवति ॥ ३५ ॥ विधिनानेनशनेस्यात्कुभोजनं ज्ञसितयोरभीष्टान्नम् ॥ जीवस्य तुष्टिजनकं होरेशे तनुखगे स्वयमुपैति ॥ ३६ ॥ यश्चंद्रेण मुथशिली तस्मि-

भीशे तनोः स्वगृहभोज्यम् ॥ वित्तेशे भृत्यगृहे भ्रातृणां सहजपे तथाऽन्यत्र ॥ ३७ ॥ यश्चंद्रेण मुथशिली स यस्य भावस्येशस्तत्संबंधेन भोजनमिति ज्ञेयम् । लग्नस्थिते सूर्यसुतेऽथ राहौ सूर्येक्षिते वैरिनिमंत्रितस्य । स्याच्छस्त्रघातः शशिभौमयोश्च लग्नस्थयोः सौरिदृशास्ति घातः॥३८॥ जीवे सिते चंद्रगते बलाढ्ये चंद्रे बुधे केंद्रगते शुभान्विते ॥ त्रिलाभषष्ठास्पदगैश्च पापैः स्यात्प्रेम निर्वैरकरं सुभोजनम् ॥ ३९ ॥ भोज्यं बुभुक्षा भोक्ता च सुखाप्तांगबलक्रमात् ॥ लग्नपो भोज्यपस्तेषां बलेन फलमादिशेत् ॥ ४० ॥ तुर्येशलाभाधिपतीत्थशाले शुभग्रहेक्षायुतितस्सुभोजनम् ॥ इत्थं खलग्रास्तपतीत्थशाले लाभेश्वरे तत्सुखलाभ ऊह्यः ॥४१॥ अथस्वप्नः॥ लग्नेऽर्के नृपतिं वह्निशस्त्रं पश्यति लोहितम् ॥ श्वेतं पुष्पं सितं वस्त्रं गंधं नारीं च शीतगौ ॥ ४२ ॥ रक्तमांसप्रवालं च सुवर्णं धरणीसुते ॥ बुधे खे गमनं जीवे धनं बंधुसमागमम् ॥ ४३ ॥ जलावगाहनं शुक्रे शनौ तुंगावरोहणम् ॥ लग्नलग्नांशपवशात्स्वप्नो वाच्योऽथवा बुधैः ॥ ४४ ॥ सर्वोत्तमबलाद्वापि खेटान्बुद्ध्या विचिंतयेत् ॥ बलसाम्ये फलं मिश्रं दुःस्वप्नो निर्बलैः खगैः ॥ ४५ ॥ उत्पलः—रविलग्ने शशिदृष्टे रविशशिसमेतविलग्नाद्वा ॥ स्वप्नं दृष्टं प्रवदेत्प्रबलग्नांतरात्कालः ॥ ४६ ॥ अथाखेटकः ॥ लग्नेशजामित्रपतीत्थशाले सुस्नेहदृष्ट्या त्वनयोर्द्वयोश्च ॥ आखेटकः स्यात्सफलोऽरिदृष्ट्या स्यान्निष्फलो वाल्पफलोऽतिकष्टात् ॥ ४७ ॥ लग्नेश्वरे द्यूनगतो विलग्नजायेश्वरे स्यान्मृगया प्रभूता ॥ जामित्रनाथे हिबुके नभःस्थे चाखेटकः स्वल्पतरोऽपि न स्यात् ॥ ४८ ॥ ज्ञभौमौ सबलौ सिद्धिरस्तांशे मृगयाच्युतिः ॥ लग्नद्यूने तत्पती च हेतुस्तैर्जलराशिगैः ॥ ४९ ॥ जलजं खेटकं ब्रूयाद्वन्यक्षैर्वनसंभवः ॥ क्रूराक्रांतानि यावंति मध्ये भानीन्दुलग्नयोः ॥ ५० ॥ तावंतः प्राणिनो वाच्या द्वित्रिघ्नाः स्वांशकादिषु ॥ ५१ ॥ अथ कलहः ॥ भुवनदीपके—क्रूरः खचरो लग्ने विवादपृ-

च्छासु जयति विवादं तम् ॥ सर्वावस्थासु परं नीचेऽस्ते जयति न द्विषतः ॥ ५२ ॥ लग्नद्यूने मुक्त्वा परस्परं क्रूरयोर्झकटदृष्टौ ॥ विवदद्वादियुगं तच्छुरिकाभ्यां प्रहरति तदैवम् ॥ ५३ ॥ लग्ने द्यूने च यदि क्रूरः खचरो विवादिनोर्न तदा ॥ कलहानिर्वृत्तिः काले जयति हि बलवान्गतबलं तु ॥ ५४ ॥ लग्नेशसुतदः सौम्याः केंद्रे संधिर्न वान्यथा ॥ लग्नद्यूनेशषष्ठेशारित्वेप्यन्योन्यविग्रहः ॥ ५५ ॥ गृहमागतो न यदसौ किं बद्धः किमथवा हत इति प्रश्ने ॥ मूर्तौ क्रूरो यदि तन्न हतो बद्धोथवा पुरुषः ॥ ५६ ॥ त्रिकोणचतुरस्रास्तस्थितः पापग्रहो यदि ॥ ग्रहैर्निरीक्षितः पापैर्नूनं बंधनमादिशेत् ॥ ५७ ॥ सप्तमगोऽष्टमगो वा चेत्क्रूरस्तद्धतोपि वा बद्धः ॥ मूर्तौ च सप्तमे वा यद्वा लग्नेष्टमेपि भवेत् ॥ क्रूरस्तदसौ पुरुषो बद्धश्च हतश्च मुच्यते च परम् ॥ ५८ ॥ बद्धः सप्ताष्टगे क्रूरे मूर्त्यस्ते चाष्टलग्नगे ॥ बद्धो विमुच्यतेऽत्याशु क्रूरः श्रेयांस्तनौ तदा ॥ ५९ ॥ अथ बद्धमोक्षप्रश्नः ॥ प्रश्नदीपके-बद्धोऽस्ति तत्किं भवितेति प्रश्ने विमुच्यतेऽसौ खलु मृत्युयोगे॥ कदा विमुच्येदिति पृच्छमाने शुभं कदा भावि च तैर्मृतिः स्यात् ॥ ६० ॥ मुक्तिप्रश्ने यदा केंद्रे केंद्रेशाः स्युर्न मोक्षदाः ॥ तस्मिन्वर्षेऽथ लग्नेशः पतितः केंद्रगे न च ॥ ६१ ॥ संबंधेप्सुः स चेत्क्रूरो मृतीशः स्यात्तदा मृतिः ॥ लग्नेशेस्तमितेऽम्बुस्थे कुजदृष्टे तदा मृतिः ॥ ६२ ॥ चंद्रश्चांबुगपापेन मृत्युनाथेन योगकृत् ॥ तदा गुप्त्यां मृतिश्चंद्रः केंद्रे मंदयुगीक्षितः ॥ ६३ ॥ दीर्घपीडा च भौमेन युग्दृष्टौ बंधताडने ॥ इइयाद्धे लग्नपश्चेत्स्याद्व्ययपनेत्थशालवान् ॥ ६४ ॥ पलायते तदा बद्धो व्ययगे लग्नगेपि वा ॥ तृतीयनवमस्वामी व्ययगो लग्नपेन च ॥ ६५ ॥ यदीत्थशालयोगेप्सुस्तदापि च पलायते ॥ इइयाद्धे ह्युपचारेण चंद्रो मुथशिलस्तदा ॥ ६६ ॥ बंधमोक्षस्त्रिधर्मेशः संग्रहः शीघ्रमोक्षकृत् ॥ पतितेंदुस्त्रिधर्मस्थग्रहसंबंधकृत्तदा ॥ ६७ ॥ केंद्रस्थत्रिभवेशेन योगेप्सु-

श्चेत्तदाचिरात् ॥ यावच्छुक्रो बली लग्ने तावत्कर्ता बलाधिकः ॥ ६८ ॥ अस्तंगते तनौ शुक्रे बंद्धमोक्षादिसंभवः ॥ म्रियते येन योगेन तेन योगेन मुच्यते ॥ ६९ ॥ मेषे तुले च शीघ्रं स्यात्कर्के नक्रे सकष्टता ॥ स्थिरे चिराद्विदेहस्थे मोक्षो मध्यमकालतः ॥ ७० ॥ अथ नौकाप्रश्नः ॥ क्षेमायातं वहित्रस्य मज्जनं वपनं जले ॥ पण्यव्यवहृतौ लाभो नाविं प्रश्नचतुष्टयम् ॥ ७१ ॥ वहित्रमत्र नौका ॥ नौर्लाभदा स्यान्मम नेति पृष्टे केंद्रे शुभाश्चेदितरेषु पापाः ॥ बलोज्झिताः क्षेमजयार्थदा नौर्भावीति वाच्यं विदुषा विमृश्य ॥ ७२ ॥ लग्नाधिपे वक्रिणि चास्तनाथे व्यावृत्त्य नौरेति च मार्गतः सा ॥ चेत्सौम्यदृष्टः कुशलेन पापैर्दृष्टस्तदा वस्तुविनेति वाच्यम् ॥ ७३ ॥ विलग्नरं ध्राधिपती स्वगेहे प्रवेक्ष्यतश्चेद्व्यवहारलाभः ॥ यदाऽष्टमे सौम्यखगा बलाढ्यास्तदा तरीलाभसुखप्रदा स्यात् ॥ ७४ ॥ कुशला याति पृच्छायां मृत्युयोगे समागते ॥ तदा नौरेति शीघ्रेण लाभाद्यं चान्ययोगतः ॥ ७५ ॥ लग्नेशं चंद्रनाथं वा चंद्रं वा मृत्युपो यदि ॥ पश्येत्क्रूरदृशा नावा समं नश्यति नौपतिः ॥ ७६ ॥ लग्नेशाष्टपतिः स्वस्य गेहं नालोकते यदि ॥ तदा यानस्य वक्तव्यं निश्चितं मज्जनं बुधैः ॥ तावुभौ सप्तमस्थौ चेज्जले वापलिकां वदेत् ॥ ७७ ॥ पूर्वस्मिन्योगे वस्तुसहितनौकामज्जनेन च तत्र लाभः ॥ द्वितीययोगे नौका यातवस्तुनो मज्जनमिति विशेषः ॥ तदुक्तं यवनाचार्यैः—द्यूने वापनिकां कृत्वा यानमायाति मंदिरम् ॥ नौकायामारोप्यमाणं वस्तु वापनीयम् । सा जले मज्जतीति भावः ॥ लग्नचंद्रपती क्रूरदृष्ट्याऽन्योन्यं यदीक्षितौ ॥ तदा पोतजनानां च मिथः कलहमादिशेत् ॥ ७८ ॥ अथ किंवदंती जनश्रुतिः किंभवतीति सत्या प्रश्ने ॥ लग्नं तु लग्नेश्वरशीतगूदयैः शुभान्वितैः केंद्रगतैस्तु सत्या ॥ ७९ ॥ शुभदृग्योगतः सौम्यां वार्तां सत्यां विनिर्दिशेत् ॥ पापदृग्योगतो दुष्टा वार्ता सत्येति कीर्त्यते ॥ ८० ॥ लग्नेश्वरे भाविवक्रे

मिथ्या वार्ता भविष्यति ॥ ८१ ॥ अथ क्रयिविक्रयिणौ ॥ क्रेतालग्नप-
तिर्ज्ञेयो विक्रेताग्रपतिः स्मृतः ॥ गृह्णाम्यहमिदं वस्तु प्रश्न एवंविधे
सति ॥ ८२ ॥ बलशालि विलग्नं चेद्गृह्यते तत्क्रयाणकम् ॥ तस्मात्
क्रयणकाल्लाभः प्रष्टुर्भवति निश्चितम् ॥ ८३ ॥ विक्रीणाम्यमुकं
वस्तु प्रश्ने एवंविधे सति ॥ आयस्थाने बलवति विक्रेतव्यं क्रयाणकम्
॥ ८४ ॥ अथ सस्यनिष्पत्तिः ॥ दिशि कस्यां भवेत्सस्यनिष्पत्तिः क्व
च सा नहि ॥ पूर्वदेशस्य भंगो हि क्वदिशि क्वतने नहि ॥ ८५ ॥ चतु-
र्णामपि केंद्राणां मध्ये यत्र शुभग्रहः ॥ तस्यां च सस्यनिष्पत्तिः स्वस्थं
चैव भविष्यति ॥ ८६ ॥ यस्यां दिशि शनिः पापैर्युतो वाप्यवलो-
कितः ॥ दिशि तस्यां च तत्स्वास्थ्यं दुर्भिक्षं च भविष्यति ॥ ८७ ॥
दिशि यस्यां रविस्तत्र धान्यनाशो नृपाद्भवेत् ॥ यत्रापि मंगलस्तत्र
धान्यनाशोऽग्निभिस्तथा ॥ ८८ ॥ यस्यां दिशि शुभाः खेटाः समस्त
बलशालिनः ॥ निष्पन्ना सैव विज्ञेया सस्यस्वास्थ्यं च तत्र हि ॥८९॥
केंद्रेषु सर्वतः पापाः समस्तबलसंयुताः ॥ देशस्तदा विनष्टोऽसौ
ज्ञातव्यः शास्त्रकोविदैः ॥ ९० ॥ अथ प्रकीर्णकाध्यायः ॥ भुवनदीपके-
लग्नपो मृत्युदश्चापि मृत्यौ स्यातामुभौ यदि ॥ स्थितौ द्रेष्काण एक-
स्मिन्प्रष्टुर्लाभस्तदा ध्रुवम् ॥ ९१ ॥ एवं द्वादशभावेषु द्रेष्काणैरेव
केवलम् ॥ बुधो विनिश्चयं ब्रूयाद्योगेष्वन्येषु निःस्पृहः ॥ ९२ ॥ प्रश्न-
काले सौम्यवर्गे लग्ने यदधिको भवेत् ॥ ग्रहभावानपेक्षेण तदाख्येयं
शुभं फलम् ॥ ९३ ॥ लग्नाधिपश्च लाभस्याधीशश्च दायको भवेत् ॥
लग्नाधिपस्य योगो लाभाधीशेन लाभकरः ॥ ९४ ॥ भंग्नाति
परलाभकरस्तदेव स यदि चंद्रदृग्लाभे ॥ योगाः सर्वेप्यफलाश्चंद्र-
मृते व्यक्तमेतच्च ॥ ९५ ॥ कर्माधीशेनैवं कर्माधीशेन च निवृत्य
धीशेन ॥ मृत्युपतिना च योगे लाभाधीशस्य वक्तव्यम् ॥ ९६ ॥

तत्तत्स्थानेक्षणतः पुण्यविवृद्धिश्च कर्मवृद्धिश्च ॥ विबुधैस्तदा निवृत्ति-र्मृत्युर्भावा परेष्वेवम् ॥ ९७ ॥ लग्नेशो यदि षष्ठः स्वयमेत्य रिपुर्भ-वत्यारंभा । मृत्युकृदष्टमगोसौ व्ययगोसौ संततं व्ययं कुरुते ॥ ९८ ॥ लग्नस्थं चंद्रजं चंद्रः क्रूरो वा यदि पश्यति ॥ धनलाभो भवत्याशु किं त्वनर्थोपि पृच्छतः ॥ ९९ ॥ अथ सामान्यतो भावविचारः ॥ इंदुः सर्वत्र बीजाभो लग्नं च कुसुमप्रभम् ॥ फलेन सदृशोंशश्च भावः स्वादु सम-प्रभः ॥ २०० ॥ लग्नपतिर्यदि लग्नं कार्याधीशश्च वीक्षते कार्यम् ॥ लग्नाधीशः कार्यं कार्येशः पश्यति विलग्नम् ॥ १ ॥ लग्नेशः कार्येशं विलोकयेल्लग्नपं च कार्येशः ॥ शीतगुदृष्टौ सत्यां परिपूर्णा कार्यसंसिद्धिः ॥ २ ॥ कथयंति पादयोगं पश्यति सौम्यो न यल्लग्नम् ॥ लग्नाधिपं च पश्यति शुभग्रहश्चार्द्धयोगोत्र ॥ ३ ॥ एकः शुभो ग्रहो यदि पश्यति लग्नाधिपे विलोकयति ॥ पादोनं योगमाहुस्तदा बुधाः कार्यसंसिद्धिः ॥ ४ ॥ अथ लाभादौ कालावधिनिर्णयः ॥ उत्पलः—उदयोपगतं राशिं तत्कलीकृत्य लिप्तिका गुणयेत् ॥ छायांगुलैश्च कुर्याद्धृत्वा मुनिभि-स्ततः शेषः ॥ ५ ॥ ग्रहगुणकारो ज्ञेयो दैवविदा पंचविंशतिः सैका ॥ मनवोंकाष्टौ त्रितयं भवाश्च ५ । २१ । १४ । ९ । ८ । ३ । ११ सूर्यादितो ज्ञेयाः ॥ ६ ॥ गणयित्वैवं प्राग्वद्धृत्वा सौम्यस्य भवेदुदयः ॥ कार्यप्राप्तिः प्रष्टुर्वक्तव्या नेतरैर्ग्रहैर्भवति ॥ ७ ॥ गुणकारैक्यविभक्तः कार्यः सूर्यादिगुणकसंशुद्धः ॥ यस्य न शुध्यति वर्गो विज्ञेयस्तद्दशा-स्कालः ॥ ८ ॥ आरदिवाकरशेषे दिवाकरपक्षाश्च भृगुशशिनोः ॥ गर्ववशे मासा ऋतवः सौम्ये शनैश्चरेब्दाः स्युः ॥९॥ आधानेऽथ प्राप्तौ गमनागमने पराजये विजये ॥ रिपुनाशे वा काले पृच्छायां निश्चितं ब्रूयात् ॥ २१० ॥ अकचटतपयशवर्गा रविकुजसितसौम्यजीवसौरा-णाम् ॥ चंद्रस्य च निर्दिष्टास्तैः स्युः प्रथमोद्भवैर्वर्णैः ॥ ११ ॥ ज्ञात्वा तस्माल्लग्नं विज्ञाय शुभाशुभं च वदेत् ॥ वर्गादिमध्यमांत्यैर्वर्णैः

प्रश्नोर्द्ध्वैर्विषमराशिः ॥ १२ ॥ रात्रौ लग्नं प्रवदेत्पृच्छायुग्मं कुजज्ञजीवानाम् ॥ सितरविजयाश्च नैवं रविशशिनोरेकराशित्वात् ॥ १३ ॥ तस्मात्प्राग्वत्प्रवदेत्पृच्छासमये शुभाशुभं सर्वम् ॥ कालस्य च विज्ञानादेतच्चिंत्यं बहुप्रश्ने ॥ १४ ॥ अथ मात्रचिंता ॥ पृथुयशाः-स्वांशे विलग्ने यदि वा त्रिकोणे स्वांशे स्थितः पश्यति धातुचिंता ॥ परांशकस्थाश्च करोति जीवं मूलं परांशोपगतः परांशम् ॥ १५ ॥ धातुं मूलं जीवमित्योजराशौ युग्मे विंद्यादेतदेव प्रतीपम् ॥ लग्ने योंशस्तत्क्रमाद्गुण्यमेवं संक्षेपोयं विस्तरात्तत्प्रभेदः ॥ १६ ॥ उत्पलः-बलिनौ केंद्रोपगतौ रविभौमौ धातुकरौ प्रश्ने ॥ बुधसौरी मूलकरौ शशिगुरुशुक्राः स्मृता जीवाः ॥ १७ ॥ मेषालिसिंहलग्ने कुजार्कयुक्ते निरीक्ष्यतेप्यथवा ॥ धातोश्चिंतां प्रवदेद्युगघटकन्यागतैर्लग्नैः ॥ १८ ॥ बुधरविजयुतैर्मूलं वृषतुलहरिमीनचापकर्कटकैः ॥ चंद्रगुरुशुक्रयुतैर्दृष्टैर्जीवो विनिर्देश्यः ॥ १९ ॥ अत्र धातुचिंतायां धातोर्बह्वतिस्वरूपविशेषनिर्णयो ग्रहलग्नराशिवशाद्वा ज्ञेयः ॥ राशिस्वरूपं ग्रहपंचजातके प्रश्ने उपोद्घातप्रसंगे निरूपितम् ॥ एवं जीवचिंतायां ब्राह्मणादिजातिगौरादिज्ञानं चोह्यम् ॥ अथ कस्याभावस्य संबंधेनायं प्रश्न इति जिज्ञासायां वा ज्ञानप्रकाशे-लग्नलाभपयोः प्राणी तयोर्यद्भावगः शशी ॥ तस्य भावस्य या चिंता प्रष्टुः सा हृदि वर्तते ॥ १ ॥ भावचिंता रूपलक्षणवर्णानाम्' इत्यादिना निरूपिता ॥ एवं बलाधिकाच्चंद्राल्लग्ननाथो यतः स्थितः ॥ दैवज्ञेन विनिर्णेयः प्रश्नसद्भावसंभवः ॥ २ ॥ पृथुयशाः-आत्मसमं लग्नगतैस्तृतीयगैर्भ्रातरः सुतं सुतगैः ॥ माता वा भगिनी वा शत्रुगैः शत्रुभार्या स्यात् ॥ ३ ॥ सप्तमसंस्थैर्नवमैर्धर्माश्रिता गुरुर्दशमैः ॥ स्वांशपतिमित्रशत्रुषु तथैव वाच्यं बलयुतेषु ॥ ४ ॥ चरलग्ने चरभागे मध्याद्भ्रष्टे प्रवासचिंता स्यात् ॥ अष्टः सप्तमभवनात्पुनर्निवृत्तो यदि न

वक्री ॥५ ॥ मया का स्त्री उपभुक्ता मनसि चिंतिता वा कीदृशी वेति प्रश्ने॥ अस्ते रविसितवक्रैः परजायां स्वां गुरौ बुधे वेश्याम् ॥ चंद्रे च वयः शशिवत्प्रवदेत्सौरेऽन्त्यजादीनाम् ॥ ६ ॥ कुमारिकां बालशशी बुधश्च वृद्धां शनिः सूर्यगुरुप्रसूताम् ॥ स्त्रीकर्कशां भौमसितौ च धत्ते एवं वयः स्यात्पुरुषेषु चैवम् ॥ ७ ॥ अथ सुरतप्रश्नः—शुभेत्थशाले हिमगौ चतुष्टये सौख्यातिरेकः सविलासहासः ॥ क्रूरेत्थशाले हिमगौ सरोषे क्रूराचितेऽभूत्कलहो नृवध्वोः ॥ ८ ॥ पीडाथवाऽसीत्सुरते युवत्या रजोयथाऽस्तर्क्षमुपैति तद्वत् ॥ लग्नेसुरज्ये भृगुजे कलत्रे तुर्ये हिमांशौ सविलासहासौ ॥९॥ शुभग्रहोत्थे च कबूलयोगे युतो रजः पुष्पसुगंधयुक्तम् ॥ स्वर्क्षोच्चगे हर्म्यरतं निगद्यं स्थिते द्विदेहे वनिता स्वकीया॥१०॥ चरोदये सा रमिते परस्त्री केंद्रे शनौ सा सुरजो दिवारतिम् ॥ निशोदयेशत्रिखगे च रात्रौ दिवानिशं तद्बलिनोर्द्विखेटयोः ॥ ११ ॥ अथ महर्घचिंता ॥ मेषे वृषे च मिथुने शुभयुक्तदृष्टे न ग्रैष्मिकं तु सुलभं भवति पृथिव्याम् ॥ सूर्ये धनुर्मृगघटेषु च सारधान्यं कुर्यात्समर्घमशुभैः सहितोऽसमर्घम् ॥ १ ॥ लग्ने बलाढ्ये निजनाथसौम्यैर्युक्तेक्षिते केंद्रगतैः शुभैश्च ॥ सर्वैः समर्घं विबलैर्विलग्ने केंद्रेषु पापैः सकलं समर्घम् ॥ ॥ २ ॥ राकाकूहूशशिपभास्वदजप्रवेशे लग्नेश्वराशुभखगैर्युतवीक्षिताश्चेत् ॥ तद्वत्सरे जगति सौख्यमलं प्रकुर्युः पापार्दिते गदनरेंद्रभयं प्रजानाम् ॥ ३ ॥ मेषप्रवेशोदयतः स्वराशेः केंद्रेषु पापोडुपतीत्थशाले ॥ पापग्रहैर्दृष्ट्युतेऽथ तस्मिन्वर्षे गदार्तिः प्रियमन्नमुर्व्याम् ॥ ४ ॥ भानोर्भ्रमः प्रवेशो जयभवनपतिः सद्ग्रहः स्वोच्चसंस्थः स्वर्क्षस्थो वापि केंद्रे शुभगगनचरैर्दृष्टयुक्तो बलाढ्यः ॥ तस्मिन्वर्षे विदध्याज्जगति शुभसुखं भूरिसस्यं सुवृद्धिः क्रूरः क्रूरार्दितो वा दिशति नृपभयं कष्टमन्नं महर्घम् ॥ ५ ॥ अथ मनुष्याणां जन्मलग्नात्प्रतिवर्षे शुभाशुभज्ञानम् ।

जन्मोदयाद्भास्वदजप्रवेशलग्नं हि यद्भावगतं शुभान्वितम् ॥ तद्भाववृद्धिं विदधाति तस्मिन्वर्षे नृणां पापयुतं तदन्यथा ॥ ६ ॥ जन्मोदये देहसुखं धनेऽर्थलाभस्तृतीये च कुटुंबवृद्धिः॥ तुर्ये सुहृत्सौख्यमथात्मजाप्तिः पुत्रेऽथ षष्ठेऽरिपराजयः स्यात् ॥ ७ ॥ स्त्रीसौख्याप्तिर्भवति मदने मृत्युरुग्भीश्च रंध्रे धर्मार्थाप्तिस्तपसि दशमे वित्तसौख्यास्पदाप्तिः॥ लाभे लाभः सुखधनचयो दुःखदारिद्र्यमंत्ये पुंसो मेषं प्रविशति रवौ जन्मलग्नाद्विलग्ने ॥ ८ ॥ अथ ताजिकमतानुसारेण प्रश्नाद्युदयोपिन इत्थशालादयो योगाः कतिपया निरूप्यंते ॥ नवपंचयोर्दृष्टिः पादोना सर्वदृष्टितः सबला ॥ मेलापकदृष्टिरियं प्रत्यक्षस्नेहदृष्टिरिति ॥ ९ ॥ तृतीयैकादशयोर्दृष्टौ यो वीक्षते तृतीयदृशा ॥ तद्दृष्टित्र्यंशो नान्यत्र तु षड्भागदृष्टिश्च ॥ १० ॥ अनयोर्दृष्टिर्गुप्तस्नेहा दृष्टिः सर्वत्र कार्यसिद्धिकरी ॥ दशमचतुर्थदृष्टिः पादोना दुर्जनाख्या तु ॥ ११ ॥ यत्रोभयसप्तमके सा सकला प्रत्यक्षदुर्जना दृष्टिः ॥ एकर्क्षयोः स्थितयोर्दृष्टिर्मता सकला तिस्रो दृशः क्षुताख्याः स्युः॥ सर्वाश्चैता हि दृशो द्वादशभागांतरे भवेयुश्चेत् ॥ तत्सर्वविशेषः प्रोक्तो दृष्टचनुसारात्फलं चिंत्यम् ॥१२॥ सूर्यः पंचदशांशैरिन्दुर्द्वादशभिरवनिजोऽष्टाभिः ॥ सप्तांशैर्बुधशुक्रौ गुरुमंदौ नवभिरीक्षेते ॥ १३ ॥ एते दीप्तांशकाः पूर्वतः परतश्च ज्ञेया॥ यदि शीघ्रस्वल्पांशैः पश्चान्मन्दं धनांशमुपगम्य ॥ स्वदीप्तभागमस्तै दत्ते ध्रुवमित्थशालयोगोऽयम् ॥ १४ ॥ लिप्तार्द्धविलिप्तिकाभ्यां यदि हीनो मंदतोप्यतुल्यः स्यात् ॥ तत्पूर्णमित्थशालमुथशिलमपि कथ्यते तज्ज्ञैः ॥ १५ ॥ अथ शीघ्रो मंदगतेरपि भागैकं समुत्तरत्यग्रे ॥ तदेसराफसंज्ञो मूसरिफः कथ्यते त्वशुभः ॥ १६ ॥ यद्युभयदृष्टिरहितो यद्यन्यः शीघ्रगोऽन्तरे भूत्वा ॥ पश्चात्तदन्यस्मै ददाति तेजः स नक्तसंज्ञः स्यात् ॥ १७ ॥ उभयोर्लग्नेशकार्येशयोरिति ज्ञेयम् ॥ उदाहरणम् ॥ स्त्रीलाभस्य प्रश्ने कन्यालग्ने बुधः पतिः सिंहे ॥ मीने च तत्पतिर्गुरुस्त-

त्रानयोर्न स्यादिति दृष्टिस्तु ॥ १८ ॥ शीघ्रश्चंद्रो द्वाभ्यां दृष्टो बुधांत्तः
न्महो नीत्वा ॥ जीवाय ददौ तद्वत्परहस्ताद्योषितः प्राप्तिः ॥ १९ ॥
अथ यदि मंदोऽन्तस्थो द्वावप्यपश्यति निजोक्तदीप्तदृशा ॥ तेजो नीत्वा
शीघ्राद्ददाति मंदाय तद्यमया ॥ २० ॥ मंदाय मंद्रगतये ॥ उभयेत्थ-
शाल्योगे यदि चंद्रोप्यत्र मुथशिलविधायी ॥ तत्कंबूलं हि भवेदुत्तम-
मध्याधमैर्मन्दैः ॥ अयमर्थः । यदि लग्नेशकार्येशयोरित्थशालयोगः तौ चेत्
स्वर्क्षे स्वोच्चे वा चंद्रोपि स्वक्षोंच्चगतस्तदोत्तमं कंबूलम् । यदा चंद्रः स्वर्क्षादौ
न तदोत्तममेव ॥ यदि त्रैराशियहद्दामुसल्लहाद्यधिकारवांस्तदा मध्यमम् ॥
पंचाधिकाररहितत्वमुभयोश्च तदाऽधमम् ॥ उभयोर्नीचारिराशिगतत्वेऽधमाधम-
मिति विकल्पना ॥ एते चेत्थशालादयो दृष्टिस्थानदीप्तांशकांतरे द्वादशांतरे वा
ज्ञेयाः ॥ न केवलमेकराश्यंशस्थान एवेति ज्ञेयम् ॥ एतच्चास्मत्कृते ताजिकर-
त्ने स्पष्टतरं प्रपंचितमेवावधारणीयम् ॥ स्वगृहोच्चनवांशानिरूपणं जातकावसरे
निरूपितम् ॥ नवांशक एव मुसल्लहो वाच्यः ॥ त्रैराशिकपदेन द्रेष्काणेशाः ॥
यथा मेषादेः षट्त्रिंशद्द्रेष्काणानामधीश्वरा ज्ञेयाः ॥ अथ भौमस्तस्मा-
त्पश्च भौमांतम् ॥ हद्दापदेन त्रिंशांशा उच्यंते ॥ यथा मेषे षडंगवसु-
शरबाणाः ६ । ६ । ८ । ५ । ५ । गुरुसितज्ञकुजमंदाः ॥ वृषभे वसु-
रसवसुशराशिखिनः ८ । ६ । ८ । ५ । ३ । शुक्रज्ञजीवमंदाराः ॥
मिथुने षडंगशरनगषण्णां ६ । ६ । ५ । ७ । ६ । बुधशुक्रजीवकुज-
सौराः ॥ कर्केऽद्रिरसषडद्रिश्रुतिषु च ७ । ६ । ६ । ७ । ४ । कुज-
शुक्रसौम्यगुरुमंदाः ॥ सिंहेंगबाणशैलांगांगाः ६ । ५ । ७ । ६ । ६ ।
देवेज्यशुक्रार्किबुधाराणाम् ॥ युवतौ शैलाशाब्ध्यद्र्यक्षिः ७ । १० । ४ ।
७ । २ । ज्ञसितजीवकुजशनीनाम् ॥ तुले रसाष्टाद्रिनगाक्षिभागाः ६ ।
८ । ७ । ७ । २ कोणबुधगुरुसितताराश्च ॥ अलिन्यद्र्यंबुधिगजबाणांगाः
। ४ । ८ । ५ । ६ । भूसुतशुक्रसौम्यगुरुमन्दाः ॥ चापे रविबाणा-

विधशंरनेदाः १२ । ६ । ४ । ५ । ४ देवगुरुसितज्ञकुजसूर्यजाः ॥ मकरेऽद्र्यद्रिनागाब्धिवेदाः ७ । ७ । ८ । ४ । ४ । बुधेज्यदैत्यगुरुशनिभौमाः ॥ कुंभेऽद्र्यंगाद्रिबाणबाणाः ७ । ६ । ७ । ५ । ५ । बुधसितेज्यकुजमंदाः ॥ मीनेर्काब्ध्याग्निनंदद्विः १२ । ४ । ३ । ९ । २ सितगुरुज्ञकुजसौराः ॥ इतिश्रीदैवज्ञानंतसुतश्रीदैवज्ञनीलकंठविरचिते श्रीनीलकंठ्यां प्रश्नतंत्रं तृतीयं समाप्तम् ॥ ३ ॥

समाप्तोऽयं ग्रंथः ॥

---

पुस्तक मिलनेका ठिकाना—

गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" स्टीम् प्रेस,
कल्याण—मुंबई.

खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर स्टीम् प्रेस,
खेतवाडी—मुंबई.



